वज एवो होय छे के, कोइ पण मनुष्यना हाथथी ज्यारे शुभ कृत्य थाय छे, त्यारे ते जोइ तेमनां मनमां अत्यंत खेद निवास करीने रहे छे. अने बीजानी न्युनता थवाथी तेउना मनमां अत्यंत हर्ष उत्पन्न थाय छे. वली तेवा दुर्जन माणसो बीजाउना दोषो कहाडवामां अत्यंत आतुरता बतावे छे. अने बीजानां कल्याणरूप वृक्षने छेदवामां तेउ एक कुहाडानी गरज सारे छे. अने एवी रीतना असंख्य दुर्गुणोथी तेवा दुष्ट जनो भरेला होय छे. अने तेवा दुर्जनो खरेखर घुवडसमान होय छे. अने ते हेतुथी तेवा दुर्जनो खरेखर जिनवाणीरूपी सूर्यना तेजथी अंध बनीने विपर्यासपणाने पामशे, अने मनमां द्वेषबुद्धिथी ईर्षा लावीने तेउ अत्यंत खेद पाम्या करशे, अने तेटला माटे हुं तेमनी क्षमा मागुं छुं.

ज्ञानना फेलावारूपी शुभकर्म उपार्जन करवामां प्रथम श्रेणिमां गणवालायक महान पुरुष के जेमणे फक्त लोकोना उपकारनेमाटेज पीस्तालीसे जैन आगमो मूल तथा तेउमांथी, जेउनी टीका, दीपिका अवचूरि विगेरे जे अंगो मली शके छे, ते सहित मुद्रित करीने ते उनेप्रसिद्ध करवामां, पोतानुं अथाग द्रव्य खरची उद्योग करेलो छे. तेवा सज्जन माणसनी उत्पत्तिविषे किंचित् लखाण आ जगोए लखवुं. तेने हुं उचितज मानुं छुं.

बंगाल इलाकामां बालोचर, मकुदाबाद, अथवा मुर्शीदाबाद एवां त्रण सुंदरनामथी उलखातुं एक सुंदर शेहेर आवी रहेलुं छे. के ज्यां कृष्णगढथी आवी निवास करनारा उशवंशरूपी नंदन वनमां कल्पवृक्षसरखा दुगड नामना गोत्रवाला धर्म न्यायविवेक तथा विनय आदिक अत्यंत श्रेष्ठ गुणोथी शोभिता थएला, तेमज सर्व सत्यवादिउमां अग्रेसर, महाबुद्धिना भंडाररूप, दीन अने गरीब साधर्मी भाइउने तन, मन अने धनथी सहाय आपनार, अत्यंत मनोहर स्वभावे करीने युक्त; पुण्यना प्रभावरूपी चंद्रना प्रकाशथी सघली दिशाउने प्रकाशित करनारा राय "बुद्धसिंहजी बाबु" नामें श्रावक श्री जैनधर्म उपरें अत्यंत श्रद्धावाला हता. तेमनी सौभाग्यवती कुशलादे नामनी स्त्रीनी कुक्षि थकी संवत् १८८७ माघवदी एकमने गुरुवारने दिवसे राय प्रतापसिंह नामे कुलदीपक सुपुत्रनो जन्म थयो. तेउ सर्व धनाढ्योमां शिरोमणिसरखा, जैनधर्मपर अत्यंत प्रीति राखनारा, तेमज क्षमावान, अने धर्म तथा अधर्मनो निर्णय करवामां शिरोमणि थया. तेमनी चतुर्थ पत्नीनुं नाम सौभाग्यवती महताबबाइ हतुं. तेमणे उशवंशमां मुक्तामणिसरखा, न्यायमार्गथी लक्ष्मीनुं उपार्जन करनारा, तथा धर्म अर्थ अने काम, ए त्रणे पुरुषार्थोने सफल करनारा, तथा प्राणीमात्र प्रते दयार्द्रपणायें करीने युक्त एवा अत्यंत तेजस्वी बे पुत्रोने जन्म आप्यो. तेउमां

मोटा पुत्रनुं नाम " राय लक्ष्मीपतिसिंहजी बहाडुर " तथा जेमणे आवा आगम ग्रंथो ढपावी प्रसिद्ध करवामां उद्यम कर्यो, ते कनिष्ट पुत्रनुं नाम " रायधनपतिसिंहजी बहाडुर " ढे. ए बन्ने उत्तम गृहस्थो उत्तम गुणोना नंडाररूप तथा प्राणिमात्रना कल्याणमां अत्यंत उत्सुक थएला ढे. माटे जिनधर्मपर अत्यंत श्रद्धा राखनारा एवा ते उत्तम पुरुषे आ दशवैकालिक नामनो अति उत्कृष्ट आगम ग्रंथ ढपावी प्रसिद्ध करी खरेखर पोतानुं नाम सफल कर्युं ढे. अने एवां पारमार्थिक कार्यो ते नाग्यशाली पुरुषने हाथे दिन प्रतिदिन थाउ एवी अमारी वारंवार विज्ञापना ढे.

आ दशवैकालिकसूत्रना कर्ता श्री शय्यंनवस्वामी ढे. तेमणे आ सूत्र शामाटे रच्युं ? तेनो संबंध नीचे प्रमाणे ढे. ज्यारे शय्यंनव स्वामीए दीक्षा लीधी, त्यारे तेमनी स्त्री गर्नवंती हती, त्यारे स्वजनोए तेणीने पूढ्युं के, तारा उदरमां कंइ गर्न जेवो संनव ढे, त्यारे तेणीए प्राकृत नाषामां कह्युं के, " मणयं " एटले किंचित्मात्र ढे. अनुक्रमे तेणीए एक मनोहर पुत्रने जन्म आप्यो, तथा तेमनी मातुश्रीए कहेला वचन परथी तेनुं " मनक " एवुं नाम राखवामां आव्युं. पढी अनुक्रमे ते मनक ज्यारे आठ वर्षनो थयो, त्यारे एक दहाडो तेणे तेनी माताने पूढ्युं के, हे माताजी, मारापिताजी क्यां ढे ? त्यारे माताए कह्युं के, हे पुत्र ! तारा पिताजीए तो चारित्र अंगीकार कर्युं ढे. ते सांनली मनकने पोताना पिताजी पासे जवानी इढा थइ. हवे ते समये श्री शय्यंनवस्वामी चंपानगरीमां बिराजता हता, अने ते खबर मनकने मलवाथी ते पण त्यां पहोंच्यो. ते वखते श्री शय्यंनवस्वामी स्थंडिल जता हता अने मार्गमां तेमणे मनकने जोयो. त्यारे तेमणे पूढ्युं के तुं कोण ढे ? त्यारे तेणे पोतानो सर्व वृत्तांत तेमने कही संनलाव्यो. त्यारे शय्यंनव स्वामिए तेमने फरीने पूढ्युं के, तुं अहीं शा माटे आव्यो ढे ? त्यारे मनके कह्युं के, मारे दीक्षा लेवी ढे अने आप जाणता हो तो कहो के, ते अमारा पिताजी शय्यंनवस्वामी क्यां ढे ? त्यारे आचार्यजीए कह्युं के, ते तारा पिता अने हुं कंइ निन्न नथी, माटे तुं मारी पासे दीक्षा ले ? मनके ते वात कबुल करवाथी आचार्यजीए तेमने त्यांज दीक्षा आपी. तथा पढी तेमने साथे लेइ आचार्य महाराज उपाश्रये आव्या, तथा ज्ञानबलथी जाण्युं के, आ मनकनुं आयुष्य फक्त हवे ढ मासनुंज बाकी ढे; माटे आटली टुंक मुदतमां आ मनक कृतार्थ शी रीते थइ शके ? ढेवटे तेमणे विचार्युं के, कारण पड्ये चौदपूर्वधारी मुनि पूर्वोमांथी सूत्रनो उद्धार करे ढे, तो मने पण आ समये आवुं प्रयोजन पड्युं ढे, तो हुं पण तेम करुं. एम विचारि श्री शय्यंनव मुनिए पूर्वोमांथी दश अध्ययननो उद्धार कर्यो; तथा ते दश अध्ययन नणवामां मनकने वरो-

बर ७ मास लाग्या. तथा ७ मास संपूर्ण थतांज मनके समाधिमां रही काल कर्यो, त्यारे श्री शय्यंभव आचार्यना नेत्रोमांथी हर्षाश्रुनी जलधारा छुटी. त्यारे यशोभद्रादिक साधुउए ते अश्रुनुं कारण पूछ्याथी आचार्य महाराजे मनकनो सर्व वृत्तांत कही संभलाव्यो. ते सांभली तेउने मनमां पश्चात्ताप थयो के, अहो ! आपणे गुरुपुत्र मनकनी सेवा करी शक्या नहीं. तथा पछी संघना आग्रहथी श्री शय्यंभवस्वामीए उधरेलां ते दशे अध्ययनो प्रगट राख्यां, अने एवी रीते विकाले ते दश अध्ययननी गुंथणी करवामां आवेली होवाथी ते सूत्रनुं नाम " दशवैकालिक " राखवामां आव्युं छे.तथा उपरनी बे चूलिकाउ तो श्रीमंधरस्वामीए संघने भेट तरिके मोकलेली छे, ते वात प्रसिद्धज छे. एवी रीते आ दशवैकालिक सूत्रनी उत्पत्ति थइ छे.

आ दशवैकालिकसूत्रमां रहेलां दश अध्ययनो तथा बन्ने चूलिकाउ अवश्य साधुउने ध्यानमां राखवा लायक छे; अने ते ध्यानमां राख्याथी तेमने तेमना अमूल्य चारित्राचारमां अतिचार दोष लागतो नथी. अहीं ते विषेनुं वधारे ब्यान नहीं करतां आ सूत्र आद्यथी ते अंतसुधि वांची जवानी तथा ते ध्यानमां राखवानीज अमो सर्वने भलामण करीए छीए.

आ सूत्रपर चौदसोने चम्मालीस ग्रंथना कर्ता महान आचार्य श्री हरिभद्र सूरिजीए शिष्यबोधिनी नामनी टीका तथा अवचुरी रचेली छे. तथा खरतर गछमां थएला युग प्रधान श्री जिनचंद्र सूरिना शिष्य श्री सकलचंद्रगणिना शिष्य श्री समयसुंदर गणिए विक्रम संवत १६९१ मां दीपिका नामनी शब्दार्थ वृत्ति पण बनावी छे. तेथी अमोए पण यथामति संशोधन करी करावीने ते हारिभद्री टीका, अवचूरि तथा समयसुंदरजीनी दीपिका टीका मूलसहित आ ग्रंथमां छापी छे. तेम मूल सूत्रनो गुजराती अर्थ करीने पण आ ग्रंथमां छाप्यो छे. आ ग्रंथ घणोज उपयोगी होवाथी छापी प्रसिद्ध कर्यो छे. छेवटे तेमां मूल सूत्रनो संपूर्ण पाठ पण दाखल करवामां आव्यो छे. प्रमादवशथी आ ग्रंथमां जे कंइ छापतां करतां दोष रह्यो होय ते " मिछामि डुक्कडं. "

श्रावक. भीमासिंह माणेक.

## अनुक्रमणिका.


| अंक. | विषय. | पृष्ठ. |
|---|---|---|
| १ | मंगलाचरण. | १ |
| २ | द्रुमपुष्पिकाख्य प्रथमाध्ययनम्. | ३ |
| ३ | श्रावण्य पूर्वकाख्य द्वितीयाध्ययनम्. | ८१ |
| ४ | क्षुल्लकाचाराख्य तृतीयाध्ययनम् | १०९ |
| ५ | षट्जीवनिकाख्य चतुर्थाध्ययनम्. | १४२ |
| ६ | पिंडैषणाख्य पंचमाध्ययने प्रथमोद्देशः | २४० |
| ७ | पिंडैषणाख्य पंचमाध्ययने द्वितीयोद्देशः | ३२६ |
| ८ | महाचार कथाख्यषष्ठाध्ययनम्. | ३६६ |
| ९ | वाक्यशुद्ध्याख्यसप्तमाध्ययनम्. | ४२४ |
| १० | आचार प्रणिधि नामाष्टमाध्ययनम्. | ४८० |
| ११ | विनयसमाध्याख्य नवमाध्ययने प्रथमोद्देशः | ५३७ |
| १२ | विनयसमाध्याख्यनवमाध्ययने द्वितीयोद्देशः | ५५९ |
| १३ | विनयसमाध्याख्यनवमाध्ययने तृतीयोद्देशः | ५८० |
| १४ | विनयसमाध्याख्यनवमाध्ययने चतुर्थोद्देशः | ५९५ |
| १५ | सभिक्षुनामदशमाध्ययनम्. | ६१० |
| १६ | दशवैकालिके प्रथमाचूलिका. | ६३८ |
| १७ | दशवैकालिके द्वितीयाचूलिका. | ६७० |
| १८ | दशवैकालिक मूल सूत्रपाठः | ७०१ |

भीमसर.

॥ ॐ नमो वीतरागाय ॥

# राय धनपतसिंघ बहादुरका जैनागमसंग्रह.

## भाग तेतालीसमा.

॥ अथ ॥

## श्रीदशवैकालिकम्

गुर्जरभाषासहितम् अवचूरिसंवलितं समयसुन्दरोपाध्यायकृतदीपिकासनाथं श्रीहरिभद्रसूरिकृतबृहद्वृत्तिविराजितं च प्रारभ्यते ।

धम्मो मंगलमुक्किठं, अहिंसा संजमो तवो ॥
देवा वि तं नमंसंति, जस्स धम्मे सया मणो ॥१॥

॥ अथ श्रीदशवैकालिक सूत्रनो बालावबोधप्रारंभ ॥

(तेमां प्रथम मङ्गलाचरण.)

॥ सर्वान्तरायशमनं, सर्वमङ्गलदायकम् ॥
॥ सर्वजीवावनकरं, सर्वज्ञं नौमि बोधये ॥ १ ॥

जेम कल्पवृक्ष उपरथी पडेला पुष्पोने एकत्र करीने देवताउं तेमनी, माला गूंथे छे, तेम कल्पवृक्ष सरखा तीर्थंकरोना मुखथकी प्रकट थयेलां, पुष्प सरखां शुद्ध, प्रमादादिदोषरहित एवां अर्थरूप वचनोने श्रवण करीने गणधरो तेमनां सूत्रो रचे छे. आ वात जैन आम्नायमां सुप्रसिद्ध छे. ते मांहेलुं दशवैकालिक सूत्र पण श्री सिज्जंभवाचार्यें भव्य जीवोना शारीरक तथा मानसिक दुःख मूकाववाने माटे तथा पोताना पुत्र मनकने प्रतिबोधवाने अर्थें रच्युं छे. एनुं उपर कहेलुं नाम पाडवानुं कारण ए छे के, दश विकालें कह्युं, माटें ए सूत्रने दशवैकालिक एवे नामें कहे छे. हवे तेमां प्रथम सिज्जंभवाचार्य अभीष्ट स्मरणरूप मंगल एक गाथायें करी कहे छे. वली ते मांगलिक जे छे, ते अन्यत्र पांच प्रकारनां कह्यां छे. तेमां प्रथम पुत्रादि जन्मरूप, ते शुद्ध मांगलिक, बीजुं गृहादिरचनारूप ते अशुद्ध मांगलिक, त्रीजुं विवाहमहोत्सवप्रमुख ते चमत्कारमांगलिक, चोथुं धनादिक ते क्षीणमांगलिक अने

पांचमुं छकायजीवरक्षणरूप अर्थात् धर्मरूप ते सदामांगलिक छे. तो हवे पांच प्रकारनां मांगलिक कह्यां, तेमां धर्म जे छे, ते सदा मांगलिक छे, तेमाटें श्रीसिज्जंनवाचार्यें आ दशवैकालिक नामक ग्रंथनी आदिमां धर्मप्रशंसारूप मंगल कर्युं छे. वली कोइक स्थलें मंगल जे छे ते त्रण प्रकारनुं पण कह्युं छे. तेमां प्रथम ग्रंथारंनें ग्रंथनिर्विघ्नता माटें जे अन्नीष्ट देवतादिकने नमस्कार करवो, ते आदिमंगल, बीजुं ग्रंथमध्यें जे नमस्कार करवो, ते मध्यमंगल अने ग्रंथने अवसानें शिष्यपरंपरा चालवाने माटें जे नमस्कार करवो, ते अवसानमंगल जाणवुं. तेम जोतां ए दशवैकालिक नामक शास्त्रनुं "धम्मो मंगलं" ए आदि मंगल, "नाणदंसण संपुन्नं," ए मध्य मंगल अने "निक्कम्ममाणा इय बुद्ध वयणे" ए अवसान मंगल जाणवुं.

हवे धम्मो मंगलमित्यादि प्रथम सूत्रनो अर्थ लखियें छियें. ( अहिंसा के० ) प्राणातिपातविरति अर्थात् सर्वे जीवोनी हिंसा न करवी ते, तथा (संजमो के०) संयमः एटले आश्रवनिरोध ते पांच इंद्रियनो निग्रह, चार कषायनो जय अने त्रण दंरुथी विरति ए सत्तर प्रकारनो संयम, अने (तवो के०) तपः एटले "अणसणमूणोयरिया" इत्यादि बे गाथामां कहेलुं बार प्रकारनुं तप ए रूप ( धम्मो के० ) धर्मः एटले कुगतिने प्राप्त थनारा जीवोने धरीने सन्मार्गें पहोंचाडे ते धर्म ते ( मंगलमुक्किठं के० ) उत्कृष्टं मंगलं, एटले सर्व मंगलमां उत्कृष्ट मंगल छे. ए धर्मने उत्कृष्ट मंगल कहेवानुं कारण कहे छे के, ( जस्स के० ) यस्य एटले जे पुरुषनुं ( धम्मे के० ) धर्मे एटले पूर्वोक्त वीतरागन्नाषित धर्मने विषे ( सया के० ) सदा एटले निरंतर ( मणो के० ) मनः एटले मन छे. ( तं के० ) तं एटले ते पुरुषने ( देवा वि के० ) देवा अपि एटले नवनपति, वाणव्यंतर, ज्योतिषी अने वैमानिक ए चार निकायना देवताउ पण ( नमंसंति के० ) नमस्यंति एटले नमस्कार करे छे, तो राजादिक नमस्कार करे, तेमां तो शीज नवाइ? अर्थात् धर्म जे छे, ते उत्कृष्ट मंगल छे एम सिद्ध थयुं ॥ १ ॥

---

॥ अथ श्रीदशवैकालिकावचूरिः प्रारन्यते ॥

॥ तत्र प्रथमाध्ययनम् ॥

संहितादिः षड्विधा व्याख्या। दुर्गतौ प्रपतन्तमात्मानं धारयतीति धर्मः। मङ्ग्यते हितमनेनेति मङ्गलम्। संयम आश्रवनिरोधः। तापयत्यनेकन्नवोपात्तमष्टप्रकारं कर्मेति तपः १

---

॥ अथ श्रीसमयसुन्दरोपाध्यायकृतदीपिका प्रारन्यते ॥

॥ तत्र प्रथमाध्ययनम् ॥

॥ श्रीजिनेश्वराय नमः ॥ स्तम्ननाधीशमानम्य, गणिः समयसुन्दरः ॥ दशवैका-

लिके सूत्रे, शब्दार्थं लिखति स्फुटम् ॥ १ ॥ धर्मो दुर्गतिप्रपतज्जन्तुधारणालक्षण उत्कृष्टं प्रधानं मङ्गलं वर्तते । को धर्म इत्याह । अहिंसा, न हिंसा अहिंसा जीवदया प्राणातिपातविरतिरित्यर्थः । पुनः संयमः पञ्चाश्रवविरमणं, पञ्चेन्द्रियनिग्रहः, चतुःकषायजयः, दण्डत्रयविरतिश्चेति सप्तदशभेदः । इत्येवं रूपः । पुनस्तपः, "अणसणमूणोअरिआ, वित्तीसंखेवणं रसच्चाओ ॥ कायकिलेसो संली-णया य बज्झो तवो होई ॥ १ ॥ पायच्छित्तं विणओ, वेआवच्चं तहेव सज्झाओ ॥ झाणं उस्सग्गो वि अ, अब्भिंतरओ तवो होई ॥ २ ॥ इति बाह्याभ्यन्तररूपं द्वादशधा । अथ धर्मकरणे माहात्म्यमाह । देवा अपि । अपिः संभावने । तं धर्मकारकं जीवं नमस्यन्ति, मनुष्यास्तु सुतराम् । तं कम् । यस्य धर्मे धर्मकरणे सदा मनः अन्तःकरणम् । इति प्रथमगाथार्थः ॥१॥

---

॥ अथ श्रीहरिभद्रसूरिकृतबृहद्वृत्तिः प्रारभ्यते ॥

॥ तत्र प्रथमाध्ययनम् ॥

॥ जयति विजितान्यतेजाः, सुरासुराधीशसेवितः श्रीमान् ॥
॥ विमलस्त्रासविरहित-स्त्रिलोकचिन्तामणिर्वीरः ॥ १ ॥

इहार्थतोऽर्हत्प्रणीतस्य सूत्रतो गणधरोपनिबद्धपूर्वगतोद्धृतस्य शारीरमानसादिकटुकदुःखसंतानविनाशहेतोर्दशकालिकाभिधानस्य शास्त्रस्यातिसूक्ष्ममहार्थगोचरस्य व्याख्या प्रस्तूयते । तत्र प्रस्तुतार्थप्रचिकटयिषयैवेष्टदेवतानमस्कारद्वारेणाशेषविघ्नविनायकापोहसमर्थां परममङ्गलालयामिमां प्रतिज्ञागाथामाह निर्युक्तिकारः ॥ सिद्धिगइमुवगयाणं, कम्मविसुद्धाण सव्वसिद्धाणं ॥ नमिऊणं दसकालिय-णिज्जुत्तिं कित्तयिस्सामि ॥ १ ॥ व्याख्या ॥ सिद्धिगतिमुपगतेभ्यो नत्वा दशकालिकनिर्युक्तिं कीर्तयिष्यामीति क्रिया । तत्र सिद्ध्यन्ति निष्ठितार्था भवन्त्यस्यामिति सिद्धिर्लोकाग्रक्षेत्रलक्षणा । तथा चोक्तम् । "इह बोंदिं चइत्ताणं, तत्थ गंतूण सिज्झइ" । गम्यत इति गतिः । कर्मसाधनम् । सिद्धिरेव गम्यमानत्वाद्गतिः सिद्धिगतिस्तामुप सामीप्येन गताः प्राप्तास्तेभ्यः सकललोकान्तक्षेत्रप्राप्तेभ्य इत्यर्थः । प्राकृतशैल्या चतुर्थ्यर्थे षष्ठी । यथोक्तम् । छट्ठीविभत्तीए भण्णइ चउत्थी । तत्र एकेन्द्रियाः पृथिव्यादयः सकर्मका अपि तदुपगमनमात्रमधिकृत्य यथोक्तस्वरूपा भवन्त्यत आह कर्मविशुद्धेभ्यः । क्रियते इति कर्म ज्ञानावरणीयादिलक्षणं तेन विशुद्धा वियुक्ताः कर्मविशुद्धाः कर्मकलङ्करहिता इत्यर्थः । तेभ्यः कर्मविशुद्धेभ्यः । आह । एवं तर्हि वक्तव्यं न सिद्धिगतिमुपगतेभ्योऽव्यभिचारात् । तथाहि । कर्मविशुद्धाः सिद्धिगतिमुपगता एव भवन्ति । न,

---

१:-"शुभ्रलोकान्त-" इति पाठान्तरम् ।

अनियतदेत्रविनागोपगतसिद्धप्रतिपादनपरडुर्नयनिरासार्थत्वादस्य। तथाचाहुरेके “रागादिवासनामुक्तं, चित्तमेव निरामयम् ॥ सदा नियतदेशस्थं, सिद्ध इत्यनिधीयते ॥” इत्यलं प्रसङ्गेन । ते च तीर्थादिसिद्धनेदादनेकप्रकारा नवन्ति। तथाचोक्तम्। तिब्रसिद्धा। अतिब्रसिद्धा। तिब्रगरसिद्धा। अतिब्रगरसिद्धा। सयंबुद्धसिद्धा। पत्तेयबुद्धसिद्धा।बुद्धवोहियसिद्धा। इञ्चीलिंगसिद्धा।पुरिसलिंगसिद्धा। नपुंसगलिंगसिद्धा। सलिंगसिद्धा। अन्नलिंगसिद्धा। गिहिलिंगसिद्धा। एगसिद्धा। अणेगसिद्धा। इत्यत आह। सर्वसिद्धेन्यः। सर्वे च ते सिद्धाश्चेति समासस्तेन्यः। अथवा “सिद्धिगतिमुपगतेन्यः” इत्यनेन सर्वथा सर्वगतात्मसिद्धपक्षप्रतिपादनपरडुर्नयस्य व्यवछेदमाह। तथाचोक्तमधिकृतनयमतानुसारिन्निः। “गुणसत्त्वान्तरज्ञानान्निवृत्तप्रकृतिक्रियाः॥ मुक्ताः सर्वत्र तिष्ठन्ति, व्योमवत्तापवर्जिताः ॥” व्यवछेदश्चैतेषां सामीप्येन सर्वात्मना सिद्धिगतिगमनान्नावात्। “कर्मविशुद्धेन्यः” इत्यनेन तु सकर्मकाणिमादिविचित्रैश्वर्यवत्सिद्धिप्रतिपादनपरस्येति। उक्तं च प्रक्रान्तनयदर्शनान्निनिविष्टैः। अणिमाद्यष्टविधं प्रा–प्यैश्वर्यं कृतिनः सदा ॥ मोदन्ते सर्वन्नावज्ञा–स्तीर्णाः परमडुस्तरम् ॥ इत्यादि। व्यवछेदश्चैतेषां कर्मसंयोगेन अनिष्ठितार्थत्वाद्वस्तुतः सिद्धत्वानुपपत्तेरिति।“सर्वसिद्धेन्यः” इत्यनेन तु नङ्ग्यैव सर्वथा अद्वैतपक्षसिद्धप्रतिपादनपरस्येति। तथाचोक्तं प्रस्तुतनयान्निप्रायमतावलम्बिन्निः॥ एक एव हि नूतात्मा, नूते नूते व्यवस्थितः ॥ एकधा बहुधा चैव, दृश्यते जलचन्द्रवत् ॥ व्यवछेदश्चास्य सर्वथा अद्वैते बहुवचनगर्नसर्वशब्दान्नावात् सिद्धिगतिगमनान्नावात्। नत्वा प्रणम्येत्यनेन तु समानकर्तृकयोः पूर्वकाले क्त्वाप्रत्ययविधानान्नित्यानित्यैकान्तवादासाधुत्वमाह। तत्र क्त्वाप्रत्ययार्थानुपपत्तेः। तत्र नित्यैकान्तवादे तावदात्मन एकान्तनित्यत्वादप्रच्युतानुत्पन्नस्थिरैकस्वन्नावत्वाद्भिन्नकालक्रियाद्वयकर्तृत्वानुपपत्तेः। क्षणिकैकान्तवादे चात्मन उत्पत्तिव्यतिरेकेण व्यापारान्नावाद्भिन्नकालक्रियाद्वयकर्तृत्वानुपपत्तिरेवेत्यलं विस्तरेण। गमनिकामात्रमेवैतदिति। नवति च चतुर्थ्यप्येवं नमनक्रियायोगेऽधिकृतगाथासूत्रान्यथानुपपत्तेः। आसश्च निर्युक्तिकारः। पित्रे सवित्रे च सदा नमामीत्येवमादिविचित्रप्रयोगदर्शनाच्च। कर्मणि वा षष्ठी। सर्वसिद्धेन्यो नत्वा किमित्याह। दशकालिकनिर्युक्तिं कीर्तयिष्यामि। तत्र कालेन निर्वृत्तं कालिकं प्रमाणकालेनेति नावः। दशाध्ययननेदात्मकत्वाद्दशप्रकारं कालिकं प्रकारशब्दलोपाद्दशकालिकं। विशब्दार्थं तूत्तरत्र व्याख्यास्यामः। तत्र निर्युक्तिरिति। निर्युक्तानामेव सूत्रार्थानां युक्तिः परिपाट्या योजनं निर्युक्तयुक्तिरिति वाच्यम्। युक्तशब्दलोपान्निर्युक्तिस्तां विप्रकीर्णार्थयोजनां व्याख्यास्यामि कीर्तयिष्यामीति गाथार्थः। शास्त्राणि चादिमध्यावसानमङ्गल-

भाञ्जि भवन्तीत्यत आह ॥ आईमभ्रवसाणे, काउं मंगलपडिग्गहं विहिणा ॥ नामाइ-मंगलं पि य, चउविहं पन्नवेऊणं ॥ २ ॥ व्याख्या ॥ शास्त्रस्यादौ प्रारम्भे मध्ये मध्य-विभागे अवसाने पर्यन्ते । किं कृत्वा । मङ्गलपरिग्रहम् । कथम् । विधिना प्रवचनोक्ते-न प्रकारेण । आह । किमर्थं मङ्गलत्रयपरिकल्पनम् । इत्युच्यते । इहादिमङ्गलपरिग्रहः सकलविघ्नापोहेनाभिलषितशास्त्रार्थपारगमनार्थम् । तत्स्थिरीकरणार्थं च मध्यमङ्ग-लपरिग्रहः । तस्यैव शिष्यप्रशिष्यसंतानाव्यवच्छेदायावसानमङ्गलपरिग्रह इति । अत्र चाक्षेपपरिहारावावश्यकविशेषविवरणादवसेयौ । इति । सामान्यतस्तु सकल-मपीदं शास्त्रं मङ्गलं निर्जरार्थत्वात्तपोवत् । नचासिद्धो हेतुः । यतो वचनविज्ञानरूपं शास्त्रं ज्ञानस्य च निर्जरार्थता प्रतिपादितैव । यत उक्तं च " जं णेरइउ कम्मं, खवेइ बहुयाहिं वासकोडीहिं ॥ तं नाणी तिहिं गुत्तो, खवेइ ऊसासमत्तेणं " इत्यादि । इह चादिमङ्गलं द्रुमपुष्पिकाध्ययनादि धर्मप्रशंसाप्रतिपादकत्वात्तत्स्वरूपत्वादिति । म-ध्यमङ्गलं तु धर्मार्थकामाध्ययनादि प्रपञ्चाचारकथाद्यभिधायकत्वात् । चरममङ्गलं तु भिक्ष्वध्ययनादि भिक्षुगुणाद्यवलम्बनत्वादित्येवमध्ययनविभागतो मङ्गलत्रयविभागो निदर्शितः । अधुना सूत्रविभागेन निदर्श्यते । तत्र चादिमङ्गलम् "धम्मोमंगलम्" इ-त्यादि सूत्रम् । धर्मोपलक्षितत्वात्तस्य च मङ्गलत्वादिति । मध्यममङ्गलं पुनः णाणदंस-णेत्यादि सूत्रम् । ज्ञानोपलक्षितत्वात्तस्य च मङ्गलत्वादिति । अवसानमङ्गलं तु " णि-क्खमणाए " इत्यादि भिक्षुगुणस्थिरीकरणार्थं विविक्तचर्याभिधायकत्वात् भिक्षुगुणानां च मङ्गलत्वादिति । आह । मङ्गलमिति कः शब्दार्थः । उच्यते । अगिरगिलगिवगि-मगीति दण्डकधातुरस्येदितोनुम् धातोरिति नुमि विहिते उणादिकालच्प्रत्ययान्त-स्य अनुबन्धलोपे कृते प्रथमैकवचनान्तस्य मङ्गलमिति रूपं भवति । मङ्ग्यते हितम-नेनेति मङ्गलम् । मङ्ग्यतेऽधिगम्यते साध्यत इति यावत् । अथवा मङ्ग इति धर्मा-भिधानम्।ला आदाने अस्य धातोर्मङ्गे उपपदे "आतोऽनुपसर्गे कः" इति कप्रत्यया-न्तस्यानुबन्धलोपे कृते "आतो लोप इटि च कृति" इत्यनेन सूत्रेणाकारलोपे च कृते प्रथमैकवचनान्तस्यैव मङ्गलमिति भवति । मङ्गं लातीति मङ्गलं । धर्मोपादानहेतुरित्य-र्थः । अथवा मां गालयति भवादिति मङ्गलं संसारादपनयतीत्यर्थः । तच्च नामादिच-तुर्विधम् । तद्यथा–नाममङ्गलं स्थापनामङ्गलं द्रव्यमङ्गलं भावमङ्गलं चेति । एतेषां च स्वरूपमावश्यकविशेषविवरणादवसेयमिति । अमुमेव गाथार्थमुपसंहरन्नाह निर्युक्तिका-रः ॥ नामाइमंगलं पि य, चउविहं पन्नवेऊणं ॥ २ ॥ नामादिमङ्गलं चतुर्विधमपि प्र-ज्ञाप्य प्ररूप्येति गाथार्थः । तत्र समानकर्तृकयोः पूर्वकाले क्त्वाप्रत्ययविधानात् । प्रज्ञा-प्यं किमत आह ॥ सुयणाणे अणुओगे–णाहिगयं सो चउविहो होई ॥ चरणकरणा-

णुठंगे, धम्मे काले य दविए य ॥ ३ ॥ व्याख्या ॥ श्रुतं च तद् ज्ञानं च श्रुतज्ञानं तस्मिन् श्रुतज्ञानेऽनुयोगेनाधिकृतमनुयोगेनाधिकार इत्यर्थः । इयमत्र नावना । नावमङ्गलाधिकारे श्रुतज्ञानेनाधिकारः । तथाचोक्तम् । एइं पुण अहिगारो, सुयणाणेणं जउं सुएणं तु ॥ सेसाणमप्पणो वि य, अणुठंगे पईवदिठंतो ॥ तस्य चोद्देशादयः प्रवर्तन्ते इति । उक्तं च ' सुअणाणस्स उद्देसो समुद्देसो अणुन्ना अणुठंगो पवत्तइ ॥ ' तत्रादावेवोद्दिष्टस्य समुद्दिष्टस्य समनुज्ञातस्य च सतः अनुयोगो नवतीत्यतो निर्युक्तिकारेणाप्ययन्यधायि श्रुतज्ञानेऽनुयोगेनाधिकृतमिति । सोऽनुयोगश्चतुर्विधो नवति । कथम् । चरणकरणानुयोगः । चर्यंत इति चरणं व्रतादि । यथोक्तम् ॥ " वय (५) समणधम्म (१०) ( १७ ) वेया–वच्चं ( १० ) च बंनगुत्तीउ ( ए ) ॥ णाणादितियं ( ३ ) तव ( १२ ) को–ह ( ४ ) निग्गहो होइ चरणमियं ॥" क्रियते इति करणं पिण्ऊविशुद्ध्यादि । उक्तं च ॥ "पिंमविसोही (४) समिइं, (५) नावण (१२) पडिमा (१२) य इंदियनिरोहो (५)॥ पडिलेहण ( २५ ) गुत्तीउ ( ३ ), अन्निग्गहा ( ४ ) चेव करणं तु ॥ " चरणकरणयोरनुयोगश्चरणकरणानुयोगः । अनुरूपो योगोऽनुयोगः । सूत्रस्यार्थेन सार्द्धमनुरूपः संबन्धो व्याख्यानमित्यर्थः । एकारशब्दः प्राकृतशैल्या प्रथमाद्वितीयान्तोऽपि द्रष्टव्यः । यथा "कयरे आगब्बइ दित्तरूवे" इत्यादि । धर्म इति धर्मकथानुयोगः । काले चेति कालानुयोगश्च । गणितइ ति गणितानुयोगश्चेत्यर्थः । द्रव्यश्चेति द्रव्यानुयोगश्च । तत्र कालिकश्रुतं चरणकरणानुयोगः । ऋषिनाषितान्युत्तराध्ययनादीनि धर्मकथानुयोगः । सूर्यप्रज्ञप्त्यादीनि गणितानुयोगः । दृष्टिवादस्तु द्रव्यानुयोगः । इति । उक्तं च " ॥ कालियसुअं च इसिना–सियाइं तइया य सूरपन्नत्ती ॥ सव्वो य दिठिवाउ, चउब्रउं होइ अणुठंगो ॥ इति गाथार्थः ॥ इह चार्थतोऽनुयोगो द्विधा । अपृथक्त्वानुयोगः पृथक्त्वानुयोगश्च । तत्रापृथक्त्वानुयोगो यत्रैकस्मिन्नेव सूत्रे सर्व एव चरणादयः प्ररूप्यन्तेऽनन्तगमपर्यायार्थकत्वात्सूत्रस्य । पृथक्त्वानुयोगश्च यत्र क्वचित्सूत्रे चरणकरणमेव । क्वचित्पुनर्धर्मकथैवेत्यादि । अनयोश्च वक्तव्यता " ॥ जावंति अज्जवइरा, अज्जापुहत्तं कालियाणुठंगस्स । ते णारेणपुहत्तं, कालियसुयदिठिवाए य ॥ " इत्यादेर्ग्रन्थादावश्यकविशेषविवरणाच्चावसेयेति । इह पुनः पृथक्त्वानुयोगेनाधिकारः । तथा चाह निर्युक्तिकारः ॥ अपहुत्तपहुत्ताइं, निद्दिसिउं एड होइ अहिगारो ॥ चरणकरणाणुठंगे–ण तस्स दारा इमे हुंति ॥ ४ ॥ व्याख्या ॥ अपृथक्त्वपृथक्त्वे लेशतो निर्दिष्टस्वरूपे निर्दिष्टस्य चात्र प्रक्रमे नवत्यधिकारः । केन । चरणकरणानुयोगेन । तस्य चरणकरणानुयोगस्य द्वाराणि प्रवेशमुखान्यमूनि वक्ष्यमाणलक्षणानि नवन्तीति गाथार्थः ॥ निरकेवेगठनिरु–त्तविहिपवित्ति य केण वा कस्स ॥ तद्दारनेयलरकण–तयरिहपरिसा य सुत्तब्रो ॥ ५ ॥ व्या-

ख्या ॥ अस्याः प्रपञ्चार्थ आवश्यकविशेषविवरणादवसेयः। स्थानाशून्यार्थं तु संक्षेपार्थः प्रतिपादित इति। णिक्खेवेत्ति। अनुयोगस्य निक्षेपः कार्यः। तद्यथा नामानुयोग इत्यादि। एगठत्ति। तस्यैव एकार्थकानि वक्तव्यानि। तद्यथा अनुयोग इत्यादि। निरुत्तत्ति। तस्यैव निरुक्तं वक्तव्यम्। अनुयोजनमनुयोगः। अनुरूपो वा योग इत्यादि। विहित्ति। तस्यैव विधिर्वक्तव्यो वक्तुः श्रोतुश्च। तत्र वक्तुः॥ "सुत्तत्थो खलु पढमो, बीऊ णिज्जुत्तिमीसिऊ जणिऊ॥ तइऊ य निरवसेसो, एस विही होइ अणुउगे॥" श्रोतुश्चायम् "॥ सूयं हुंकारं वा, बाढकारपडिपुच्छवीमंसा॥ तत्तो पसंगपारा—यणं च परिनिठसत्तमए॥" पवित्तियत्ति॥ अनुयोगस्य प्रवृत्तिश्च वक्तव्या सा चतुर्भङ्गानुरेण विज्ञेया। उक्तं च। "णिच्चं गुरू पमायी, सीसा विय गुरूण सीसगा तहय॥ अपमायि गुरू सीसा, पमायिणो दोवि अपमायी॥ पढमे नत्थि पवित्ती, बीए तइए य णत्थि थोवं वा॥ अत्थि चउत्थि पवित्ती, एत्थं गोणी य दिठंतो॥ अप्पहुया उ गोणी, णेव य दोज्झा समुज्जाउ दोज्झुं॥ खीरस्स कउ पसवो, जइ वि य बहुखीरगा साउ॥ वितिए वि णत्थि खीरं, थोवं तह विय्रए व तइए वि॥ अत्थि चउत्थे खीरं, एसुवमा आयरियसीसे॥ गोणीसरिठो उ गुरू, दोज्झा इव साहुणो समक्खाया॥ खीरं अत्थ पवित्ती, नत्थि तहिं पढमवितिएसु॥ अहवा अणित्थमाण, मवि किं वि उ जोगिणो पवत्तंति॥ तइए सारंतंमि, होज्ज पवित्ती गुणंते वा॥ अपमाई जत्थ गुरू, सीसा वि य विणयगहणसंजुत्ता॥ घणियं तत्थ पवित्ती, खीरस्सव चरिमभंगंमि॥ केणत्ति। केनानुयोगः कर्तव्य इति वक्तव्यम्। तत्र य इत्थंभूत आचार्यस्तेन कर्तव्यस्तद्यथा॥ "देसकुलजाइरूवी, संघयणे धिइजुऊ अणासंसी॥ अविकत्थणो अमाई, थिरपडिवाडी गहियवक्को॥ जियपरिसो जियनिद्दो, मज्झत्थो देसकालभावन्नू॥ आसन्नलद्धपइभो, णाणाविहदेसभासन्नू॥ पंचविहे आयारे, जुत्तो सुत्तत्थतदुभयविहिन्नू॥ आहरणहेउकारण—णयनिउणो गाहणाकुसलो॥ ससमयपरसमयविऊ, गंभीरो दित्तिमं सिवो सोमो॥ गुणसयकलिउ जुग्गो, पवयणसारं परिकहिउं॥" आसामर्थः कल्पादवसेयः॥ प्राथमिकदशकालिकव्याख्याने तु लेशत उच्यते। आर्यदेशोत्पन्नः सुखाववोधवाक्यो भवतीति देशग्रहणम्। पैतृकं कुलम्। विशिष्टकुलोद्भवो यथोत्क्षिप्तभारवहने न श्राम्यति। मातृकी जातिः। तत्संपन्नो विनयान्वितो भवति। रूपवानादेयवचनो भवति। आकृतौ च गुणा वसन्ति। संहननधृतियुक्तो व्याख्यानतपोऽनुष्ठानादिषु न खेदं याति। अनाशंसी न श्रोतृभ्यो वस्त्राद्याकाङ्क्षति। अविकत्थनो बहुभाषी न भवति। अमायी न शाठ्येन शिष्यान् वाहयति। स्थिरपरिपाटी। स्थिरपरिचितग्रन्थस्य सूत्रं न गलति। गृहीतवाक्योऽप्रतिघातिवचनो भवति। जितपरिषत् परप्रवादि-

क्षोभ्यो न भवति । जितनिद्रोऽप्रमत्तत्वाद्व्याख्यानरतिर्भवति, प्रकामनिकामशायिनश्च शिष्यांश्चोदयति । मध्यस्थः संवादको भवति । देशकालभावज्ञो देशादिगुणाननवबुध्याप्रतिबद्धो विहरति देशनां च करोति । आसन्नलब्धप्रतिभो जात्युत्तरादिना निगृहीतः प्रत्युत्तरदानसमर्थो भवति । नानाविधदेशभाषाविधिज्ञो नानादेशजविनेयप्रत्यायनसमर्थो भवति । ज्ञानादिपञ्चविधाचारयुक्तः श्रद्धेयवचनो भवति । सूत्रार्थोभयज्ञः सम्यगुत्सर्गापवादप्ररूपको भवति । उदाहरणहेतुकारणनयनिपुणस्तक्रम्यान् भावान् सम्यक् प्ररूपयति नागममात्रमेव । ग्राहणाकुशलः शिष्याननेकधा ग्राहयति । स्वसमयपरसमयवित्सुखं परमताक्षेपमुखेन स्वसमयं प्ररूपयति । गम्भीरो महत्यप्यकार्ये न रुष्यति । दीप्तिमान् परप्रवादिक्षोभमुत्पादयति । शिवो मारिरोगाद्युपद्रवविघातकृद्भवति । सौम्यः प्रशान्तदृष्टितया सकलजनप्रीत्युत्पादको भवति । एवंभूत एव गुणशतकलितो योग्यः प्रवचनमागमस्तस्य सारस्तं कथयितुमिति । यतोऽसावनेकभव्यसत्त्वप्रबोधहेतुर्भवति । उक्तं च ॥ "गुणसुठिअस्स वयणं, घयमहुसित्तो व पावर्ज भाइ । गुणहीणस्स न सोहइ, णेहविहीणो जह पईवो ॥" तथा चान्येनाप्युक्तम् । "क्षीरं भाजनसंस्थं, न तथा वत्सस्य पुष्टिमावहति ॥ आवल्गमानशिरसो, यथा हि मातृस्तनात्पिबतः ॥ तद्वत्सुभाषितमयं, क्षीरं दुःशीलभाजनगतं तु ॥ न तथा पुष्टिं जनयति, यथा हि गुणवन्मुखात्पतितम् ॥ शीतेऽपि यत्र लब्धो, न सेव्यतेऽग्निर्यथा स्मशानस्थः ॥ शीलविपन्नस्य वचः, पथ्यमपि न गृह्यते तद्वत् ॥ चारित्रेण विहीनः, श्रुतवानपि नोपजीव्यते सद्भिः ॥ शीतलजलपरिपूर्णः, कुलजैश्चाण्डालकूप इव ॥" कस्सत्ति । कस्यानुयोग इति वक्तव्यम् । तत्र सकलश्रुतज्ञानस्याप्यनुयोगो भवति । अमुं पुनः प्रारम्भमाश्रित्य दशकालिकस्येति । अत्राह । ननु "दसकालियनिर्युत्तिं कित्तयिस्सामित्ति" अस्मादेव वचनतः प्रकृतद्वारार्थस्यावगतत्वात्तदुपन्यासोऽनर्थक इति । न, अधिकृतनिक्षेपादिद्वारकलापस्याशेषश्रुतस्कन्धविषयत्वात्तद्वलेनैव च निर्युक्तिकारेणापि तथोपन्यस्तत्वादस्मादेव स्थानादन्यत्राप्यादौ शास्त्राभिधानपूर्वक उपन्यासः क्रियत इति भावना । व्याख्यातं लेशतो निर्युक्तिगाथादलं पश्चार्द्धं त्वध्ययनाधिकारे यथावसरं व्याख्यास्यामः । यतस्तत्रैवोपक्रमाद्यनुयोगद्वारानुपूर्व्यादि तद्भेदसूत्रादिलक्षणं तदर्हत्पर्षदादयश्च वक्तुं शक्यन्ते, नान्यत्र निर्विषयत्वादित्यलं प्रसङ्गेन । सांप्रतं प्रकृतयोजनामेवोपदर्शयन्नाह निर्युक्तिकारः ॥ एयाइं परूवेउं, कप्पे वन्नियगुणेण गुरुणा उ ॥ अणुओगो दसवेया–लियस्स विहिणा कहेयव्वो ॥६॥ व्याख्या ॥ एतानि निक्षेपादिद्वाराणि प्ररूप्य व्याख्याय कल्पे वर्णितगुणेन गु-

---

१:–'यत्नलब्ध' इति पाठान्तरम् ।

रुणा षट्त्रिंशद्गुणसमन्वितेनेत्यर्थः । अनुयोगो दशवैकालिकस्य विधिना प्रवचनोक्तेन कथयितव्य आख्यातव्य इति गाथार्थः । संप्रत्यजानानः शिष्यः पृच्छति । यदि दशकालिकस्यानुयोगस्ततस्तद्दशकालिकं भदन्त किमङ्गमङ्गानि, श्रुतस्कन्धः श्रुतस्कन्धा, अध्ययनमध्ययनानि, उद्देशक उद्देशका इत्यष्टौ प्रश्नाः । एतेषां मध्ये त्रयो विकल्पाः खलु प्रयुज्यन्ते । तद्यथा दशकालिकं श्रुतस्कन्धः अध्ययनानि उद्देशकाश्चेति । यतश्चैवमतो दशादीनां निक्षेपः कर्तव्यः । तद्यथा दशानां कालस्य श्रुतस्कन्धस्याध्ययनस्य उद्देशकस्य चेति । तथाचाह निर्युक्तिकारः ॥ दसकालियं ति नामं संखाए कालओ य निद्देसो ॥ दसकालियसुअखंधं अज्झयणुद्देस निक्खिविउं ॥७॥ व्याख्या ॥ दशकालिकं प्राग्निरूपितशब्दार्थमिति एवंभूतं यन्नाम अभिधानम् । इदं किम् । संख्यानं संख्या तया तथा कालतश्च कालेन चायं निर्देशः । निर्देशनं निर्देशो विशेषाभिधानमित्यर्थः । अस्य च निबन्धनं विशेषेण वक्ष्यामः " मणगं पडुच्च " इत्यादिना ग्रन्थेन । यतश्चैवमतः दसकालियंति कालेन निर्वृत्तं कालिकं दशशब्दस्य कालशब्दस्य च निक्षेपः । निर्वृत्तार्थस्तु निक्षेपः । तथा श्रुतस्कन्धं तथाध्ययनमुद्देशं तदेकदेशभूतम् । किम् । निक्षेप्तुमनुयोगोऽस्य कर्तव्य इति गाथार्थः । तत्र यथोद्देशं निर्देश इति न्यायादधिकृतशास्त्राभिधानोपयोगित्वाच्च दशशब्दस्यैवादौ निक्षेपः प्रदर्श्यते । तत्र दशैकाद्यायत्ता वर्तन्ते । एकाद्यभावे दशानामप्यभावादत एकस्यैव तावन्निक्षेपप्रतिपिपादयिषयाह ॥ णामं ठवणा दविए, माउयपयसंगहेक्कए चेव ॥ पज्जवभावे य तहा, सत्तेए एक्कगा होंति ॥ ८ ॥ व्याख्या ॥ इहैक एव एककः । तत्र नामैकक एक इति नाम । स्थापनैकक एक इति स्थापना । द्रव्यैककं त्रिधा सचित्तादि । तत्र सचित्तमेकं पुरुषद्रव्यम् । अचित्तमेकं रूपकद्रव्यम् । मिश्रं तदेव कटकादिभूषितं पुरुषद्रव्यमिति । मातृकापदैककं मातृकापदम् । तद्यथा उप्पन्नेइ वेत्यादि । इह प्रवचने दृष्टिवादे समस्तनयवादबीजभूतानि मातृकापदानि भवन्ति । तद्यथा "उप्पन्नेइ वा विगमेइ वा धुवेइ वा " अमूनि च मातृकापदानि "अ आ इ ई" इत्येवमादीनि सकलशब्दव्यवहारव्यापकत्वान्मातृकापदानि । इह चाभिधेयवल्लिङ्गवचनानि भवन्तीति कृत्वेत्थमुपन्यासः । संग्रहैककः शालिरिति । अयमत्र भावार्थः । संग्रहः समुदायः तमप्याश्रित्यैकवचनगर्भशब्दप्रवृत्तेस्तथा चैकोपि शालिः शालिरित्युच्यते बहवः शालयः शालिरिति लोके तथा दर्शनात् । अयं चादिष्टानादिष्टभेदेन सामान्यविशेषभेदेन द्विधा । तत्रानादिष्टो यथा शालिः । आदिष्टो यथा कलमशालिरिति । एवमादिष्टानादिष्टभेदावुत्तरपदेष्वपि यथारूपमायोज्यौ । पर्यायैकक एकः पर्यायः । पर्यायो विशेषो धर्म इत्यनर्थान्तरम् । स चानादिष्टो वर्णादिः । आदिष्टः कृष्णादिरिति । अन्ये तु समस्तश्रुतस्कन्धवस्त्वपेक्षयेत्थं व्याचक्षते । अनादिष्टः श्रुतस्कन्धः । आदिष्टो दशकालिका-

ख्य इति । अन्यस्त्वनादिष्टो दशकालिकाख्यः । आदिष्टस्तु तदध्ययनविशेषो द्रुमपुष्पिकादिरिति व्याचष्टे । नचैतदतिचारु तस्य दशकालिकाभिधात एवादेशसिद्धेः । भावैकक एको भावः । स चानादिष्टो भाव इति । आदिष्टस्त्वौदयिकादिरिति । सप्तैतेऽनन्तरोक्ता एकका भवन्ति। इह च किल यस्माद्दशपर्याया अध्ययनविशेषाः संग्रहैककेन संगृहीतास्तस्मात्तेनाधिकारः। अन्ये तु व्याचक्षते । यतः किल श्रुतज्ञानं क्षायोपशमिके भावे वर्तते, तस्माद्भावैककेनाधिकार इति गाथार्थः । इदानीं द्व्यादीन् विहाय दशशब्दस्यैव निक्षेपं प्रतिपादयन्नाह ॥ णामं ठवणा दविए, खित्ते काले तहेव भावे अ ॥ एसो खलु निक्खेवो, दसगस्स उ छब्विहो होइ ॥ ए ॥ व्याख्या ॥ आह । किमिति द्व्यादीन् विहाय दशशब्द उपन्यस्तः । उच्यते । एतत्प्रतिपादनादेव द्व्यादीनां गम्यमानत्वात् । तत्र नामस्थापने सुगमे । द्रव्यदशकं दश द्रव्याणि सचित्ताचित्तमिश्राणि मनुष्यरूपककटकादिविभूषितानीति । क्षेत्रदशकं दश क्षेत्रप्रदेशाः । कालदशकं दश कालावर्तनादिरूपत्वात्कालस्य दशावस्थाविशेषा इत्यर्थः । वक्ष्यति च वाला किड्डा मंदेत्यादिना । भावदशकं दश भावाः । ते च सांनिपातिकभावे स्वरूपतो भावनीयाः । अथ चैत एव विवक्षया दशाध्ययनविशेषा इति । एष एवंभूतः खलु निक्षेपो न्यासो दशशब्दस्य बहुवचनत्वाद्दशानां षड्विधो भवति । तत्र खलुशब्दोऽवधारणार्थः । एष एव प्रक्रान्तोपयोगीति । तुशब्दो विशेषणार्थः । किं विशिनष्टि । नायं दशशब्दमात्रस्य किंतु तद्वाच्यस्यार्थस्यापीति गाथार्थः । सांप्रतं प्रस्तुतोपयोगित्वात्कालस्य कालदशकद्वारे विशेषार्थप्रतिपिपादयिषयेदमाह ॥ "बाला किड्डा मंदा, बला य पन्ना य हायणि पवंचा ॥ पप्भारमम्मुही सा–यणी य दसमा उ कालदसा ॥१०॥ व्याख्या ॥ बाला क्रीडा च मन्दा च बला च प्रज्ञा च हायिनी ईषत्प्रपञ्चा प्राग्भारा मृन्मुखी शायिनी । तथाहि एता दश दशा जन्त्ववस्थाविशेषलक्षणा भवन्ति । आसां च स्वरूपमिदमुक्तं पूर्वमुनिभिः ॥ "जायमित्तस्स जंतुस्स जा सा पढमिया दसा ॥ ण तब सुहडुक्खाइं, बहु जाणंति बालया ॥ १ ॥ बिइयं च दसं पत्तो, णाणाकिड्डाहिं किड्डुइ ॥ न तब कामभोगेहिं, तिव्वा उप्पज्जई मई ॥ २ ॥ तइयं च दसं पत्तो, पंचकामगुणे नरो ॥ समब्बो भुंजिउं भोए, जइ से अबि घरे धुवा ॥ ३ ॥ चउत्थी उ बला नाम, जं नरो दसमस्सिउं ॥ समब्बो बलं दरिसिउं, जइ होइ निरुवद्दवो ॥४॥ पंचमीं तु दसं पत्तो, आणुपुव्वीइ जो नरो ॥ इब्वियब्बं विचिंतेइ, कुडुंबं वाभिकंखई ॥ ५ ॥ बठी उ हायणी नाम, जं नरो दसमस्सिउं ॥ विरज्जइ य कामेसु, इंदिएसु य हायई ॥ ६ ॥ सत्तमिं च दसं पत्तो, आणुपुव्वीइ जो नरो ॥ निट्ठुहइ य चिक्कणं खेलं खासई य

१ 'रई' ति पाठान्तरम् । २ 'बहु' इति पाठान्तरम् ।

अभिरकणं ॥ ७ ॥ संकुचियवलीचम्मो संपत्तो अठमीं दसं ॥ णारीणमणभिप्पेर्ड जराए परिणामियो ॥ ८ ॥ णवमी मम्मुही नाम, जं नरो दसमस्सिर्ड ॥ जराघरे विणस्संतो जीवो वसइ अकामर्ड ॥ ए ॥ हीणभिन्नसरो दीणो, विवरीर्ड विचित्तर्ड ॥ डुब्बलो डुक्खिर्ड सुवइ, संपत्तो दसमीं दसं ॥ १० ॥ "इत्यलं विस्तरेणेति गाथार्थः । इदानीं कालनिक्षेपप्रतिपादनायाह ॥ दव्वे अद्ध अहाउ अ, उवक्कमे देसकालकाले य ॥ तहय पमाणे वन्ने, भावे पगयं तु भावेणं ॥११॥ व्याख्या ॥ तत्र द्रव्य इति वर्तमानादिलक्षणो द्रव्यकालो वाच्यः । अद्धेति चन्द्रसूर्यादिक्रियाविशिष्टोऽर्द्धतृतीयद्वीपसमुद्रान्तर्वर्त्यद्धाकालः समयादिलक्षणो वाच्यः । तथायुष्ककालो देवाद्यायुष्कलक्षणो वाच्यः । तथा उपक्रमकालोऽभिप्रेतार्थसामीप्यानयनलक्षणः । सामाचार्यायुष्कभेदभिन्नो वाच्यः । तथा देशकालो वाच्यः । देशः प्रस्तावोऽवसरो विभागः पर्याय इत्यनर्थान्तरम् । ततश्चाभीष्टवस्त्ववाप्त्यवसरः काल इत्यर्थः । तथा कालकालो वाच्यः । तत्रैकः कालशब्दः प्राग्निरूपितशब्दार्थ एव, द्वितीयस्तु सामायिकः कालो मरणमुच्यते । मरणक्रियायाः कलनं काल इत्यर्थः । चः समुच्चये । तथाच । प्रमाणकालोऽद्धाकालविशेषो दिवसादिलक्षणो वाच्यः । तथा वर्णकालो वाच्यः । वर्णश्चासौ कालश्चेति । भावेति । औदयिकादिभावकालः सादिसपर्यवसानादिभेदभिन्नो वाच्यः । इति । प्रकृतं तु भावेनेति । भावकालेन इह पुनर्दिवसप्रमाणकालेनाधिकारस्तत्रापि तृतीयपौरुष्या तत्रापि वह्वतिक्रान्तयेति । आह । यदुक्तं 'पगयं तु भावेणं ति' तत्कथं न विरुध्यते इत्युच्यते । क्षायोपशमिकभावकाले शय्यंभवेन निर्व्यूढं प्रमाणकाले चोक्तलक्षण इत्यविरोधः । अथवा प्रमाणकालोऽपि भावकाल एव । तस्याद्धाकालस्वरूपत्वात्तस्य च भावत्वादिति गाथासमुदायार्थः । अवयवार्थस्तु सामायिकविशेषविवरणादवसेयः । तथाचाह निर्युक्तिकारः ॥ सामाइयअणुकमर्ड, वन्नेउं विगयपोरिसीए उ ॥ निव्वूढं किर सेज्जं—भवेण दसकालियं तेणं ॥१२॥ व्याख्या ॥ सामायिकमावश्यकप्रथमाध्ययनं तस्यानुक्रमः परिपाटीविशेषः । सामायिके वानुक्रमः सामायिकानुक्रमः । ततः सामायिकानुक्रमतः । सामायिकानुक्रमेण वर्णयितुमनन्तरोपन्यस्तगाथाद्वाराणीति प्रक्रमाद्गम्यते । विगतपौरुष्यामेव तुशब्दस्यावधारणार्थत्वात् । निर्व्यूढं पूर्वगताडुद्धृत्य विरचितम् । किलशब्दः परोक्षाप्तागमवादसंसूचकः । शय्यंभवेन चतुर्दशपूर्वविदा दशकालिकं प्राग्निरूपिताक्षरार्थं तेन कारणेनोच्यत इति गाथार्थः । श्रुतस्कन्धयोश्च निक्षेपश्चतुर्विधो द्रष्टव्यो यथानुयोगद्वारेषु । स्थानाशून्यार्थं किंचिडुच्यते । इह नोआगमतः ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यश्रुतं पुस्तकपत्रन्यस्तम् । अथवा सूत्रमण्डजादि । भावश्रुतं त्वागमतो ज्ञाता

उपयुक्तः। नोआगमतस्त्विदमेव दशकालिकं नोशब्दस्य देशवचनत्वात्। एवं नोआगमतो ज्ञशरीरजव्यशरीरव्यतिरिक्तो ज्व्यश्रुतस्कन्धः सचेतनादिः। तत्र सचित्तो द्विपदादिः। अचित्तो द्विप्रदेशिकादिः। मिश्रः सेनादिर्देशादिरिति। तथा नावस्कन्धस्त्वागमतस्तदर्थोपयोगपरिणाम एव। नोआगमतस्तु दशकालिकश्रुतस्कन्ध एवेति नोशब्दस्य देशवचनत्वादिति। इदानीमध्ययनोद्देशकन्यासप्रस्तावः। तं चानुयोगद्वारप्रक्रमायातं प्रत्यध्ययनं यथासंनवमोघनिष्पन्नं निक्षेपे लाघवार्थं वक्ष्याम इति। ततश्च यडुक्तं "दसकालिय सुअखंधं, अज्ञयणुद्देस णिक्खिविउं॥" अनुयोगोऽस्य कर्तव्य इति तदंशतः संपादितमिति। सांप्रतं प्रस्तुतशास्त्रसमुत्थानवक्तव्यतानिधित्सयाह॥ जेण व जं च पडुच्चा, जत्तो जावंति जह य ते ठविया॥ सो तं च तउ ताणि य, तहा य कमसो कहेयवं॥१३॥ व्याख्या॥ येन वाचार्येण यद्वा वस्तु प्रतीत्याङ्गीकृत्य यतश्चात्मप्रवादादिपूर्वतो यावन्ति वाध्ययनानि यथा च येन प्रकारेण तान्यध्ययनानि स्थापितानि न्यस्तानि स चाचार्यः तच्च वस्तु ततस्तस्मात्पूर्वात् तानि चाध्ययनानि तथाच तेनैव प्रकारेण क्रमशः क्रमेणानुपूर्व्या कथयितव्यं प्रतिपादयितव्यमिति गाथासमासार्थः। अवयवार्थं तु प्रतिद्वारं निर्युक्तिकार एव यथावसरं वक्ष्यति। तत्राधिकृतशास्त्रकर्तुः स्तवद्वारेणाद्यद्वारावयवार्थप्रतिपादनायाह॥ सेज्जंनवं गणहरं, जिणपडिमादंसणेण पडिबुद्धं॥ मणगपिअरं दसका–लियस्स निज्जूहगं वंदे॥ १४॥ दारं॥१॥ सेज्जंनवमिति नाम। गणधरमिति अनुत्तरज्ञानदर्शनादिधर्मगणं धारयतीति गणधरस्तं, जिनप्रतिमादर्शनेन प्रतिबुद्धं तत्र रागद्वेषकषायेन्द्रियपरीषहोपसर्गादिजेतृत्वाज्जिनस्तस्य प्रतिमा सद्भावस्थापनारूपा तस्या दर्शनमिति समासः। तेन हेतुभूतेन प्रतिबुद्धं मिथ्यात्वाज्ञाननिद्रापगमेन सम्यक्त्वविकाशं प्राप्तं, मनकपितरमिति मनकाख्यापत्यजनकं, दशकालिकस्य प्राग्निरूपिताक्षरार्थस्य निर्व्यूहकं पूर्वगतोद्धृतार्थविरचनाकर्तारं वन्दे स्तौमि इति गाथाक्षरार्थः। नावार्थः कथानकादवसेयस्तच्चेदम्। "एव वद्धमाणसामिस्स चरमतित्थगरस्स सीसो तित्थसामी सुहम्मो नाम गणधरो आसी। तस्स वि जंबूणामो तस्स वि य पनवोत्ति। तस्सन्नया कयाइ पुव्वरत्तावरत्तम्मि चिंता समुप्पन्ना को मे गणहरो होज्जत्ति। अप्पणो गणे य संघे य सव्वउ उवउंगो कउ। ण दीसई कोइ अवोच्छित्तिकरो। ताहे गारत्थेसु उवउत्तो। उवउगे कए रायगिहे सेज्जंनवं माहणं जन्नं जयमाणं पासइ। ताहे रायगिहं णगरं आगंतूणं संघाडयं वावारेइ जन्नवाडं गंतुं निक्खट्ठा धम्मलाहेह। तत्थ तुब्भे अतित्थाविज्जिहिह ताहे तुब्भे नणिवह। "अहो कष्टं तत्त्वं न ज्ञायते" इति। तउ गया साहू। अतित्थाविया अ तेहिं

१ 'पट्ठवेइ' इति पाठान्तरम्।

भणिअं 'अहो कष्टं तत्त्वं न ज्ञायते'। तेण य सेज्जंभवेण दारमूले ठिएण तं वयणं सुअं। ताहे सो विचिंतेइ। एए उवसंता तवस्सिणो असत्तं ण वयंतित्ति काउं अज्झावगसगासं गंतुं भणइ। किं तत्तं। सो भणइ वेदा तत्तं। ताहे सो असिं कड्ढिऊण भणइ सीसं ते छिंदामि, जइ मे तुमं तत्तं न कहेसि। तओ अज्झावओ भणइ। पुत्ता मम समए भणियमेयं वेदच्छे परं सीसच्छेए कहियव्वत्ति संपयं कहयामि। जं एत्थ तत्तं एतस्स जूवस्स हेट्ठा सव्वरयणमयी पडिमा अरहओ साधुवत्ति आरिहओ धम्मो तत्तं। ताहे सो तस्स पाएसु पडिओ। सो य जन्नवाडओवक्खोवि तस्स चेव दिण्णो। ताहे सो गंतूणं ते साहू गवेसमाणे गओ आयरियसगासं। आयरियं वंदित्ता साहुणो भणइ मम धम्मं कहेह। ताहे आयरिया उवउत्ता जहा इमो सोत्ति। ताहे आयरिएहिं साहुधम्मो कहिओ। संबुद्धो पव्वइओ सो चउद्दसपुव्वी जाओ। जया य सो पव्वइओ तया य तस्स गुव्विणी महिला होत्था। तम्मि य पव्वइए लोगो णियल्लओ तं तमस्सति। जहा तरुणाए भत्ता पव्वइओ अपुत्ताए। अवि अत्थि तव किं वि पोट्टेत्ति पुच्छइ। सा भणइ उवलक्खिमि मणगं। तओ समएण दारगो जाओ। ताहे णिव्वत्तवारसाहस्स नियल्लगेहिं, जम्हा पुच्छिज्जंतीए मायाए से भणिओ मणगंति, तम्हा मणओ से णामं कयंति। जया सो अट्ठवरिसो जाओ ताहे सो मातरं पुच्छइ को मम पिआ। सा भणइ तव पिआ पव्वइओ। ताहे सो दारओ णासिऊणं पिउसगासं पट्ठिओ। आयरिया य तं कालं चंपाए विहरंति। सो वि अ दारओ चंपामेवागओ। आयरिएण य सण्णाभूमिगएण सो दारओ दिट्ठो। दारएण वंदिओ आयरिओ। आयरियस्स य तं दारगं पिच्छंतस्स णेहो जाओ। तस्स वि दारगस्स तहेव आयरिएहिं पुच्छियं भो दारग कुतो ते आगमणं। सो दारगो भणइ रायगिहाओ। आयरिएण भणियं रायगिहे तुमं कस्स पुत्तो नत्तुओ वा। सो भणइ, सेज्जंभवो नाम बंभणोत्ति अहं तस्स पुत्तो सो य किर पव्वइओ। तेहिं भणियं। तुमं केण कज्जेण आगओसि। सो भणइ अहं पि पव्वइस्सं। पच्छा सो दारओ भणइ तो भणह वज्जं तुम्हे जाणह। आयरिया भणंति जाणेमो। तेण भणियं सो कहिंति। ते भणंति, सो मम मित्तो एगसरीरभूतो पव्वयाहि तुमं मम सगासे। तेण भणिअं एवं करेमि। तओ आयरिया आगंतुं पडिस्सए आलोअंति सच्चित्तो पडुप्पन्नो सो पव्वइओ। पच्छा आयरिया उवउत्ता केवत्तिकालं एस जीवइत्ति। णायं जावं छम्मासा। ताहे आयरियाणं बुद्धी समुप्पन्ना। इमस्स थोवगं आउं किं कायव्वं ति। तं चउद्दसपुव्वी कम्हि वि कारणे समुप्पन्ने णिज्जूहत्ति दसपुव्वी पुण अपच्छिमो अवस्समेव णिज्जूहइ। ममंपि इमं कारणं समुप्पन्नं तो अहमवि णिज्जूहामि। ताहे आढत्तो णिज्जूहिउं। ते उ णिज्जूहिज्जंतो वियाले णिज्जूढा थोवावसेसे दिवसे। तेण तं दसवेयालियं भ-

णिद्यत्ति ।" अनेन च कथानकेन न केवलं येन चेत्यस्यैव द्वारस्य नावार्थोऽनिहितः । किं तु यद्वा प्रतीत्यैतस्यापीति । तथाचाह निर्युक्तिकारः ॥ मणगं पडुच्च सेद्यं–नवेण निञ्चूहिया दसञ्झयणा ॥ वेयालियाइ ठविया तम्हा दसकालियं णामं ॥ १५ ॥ दारं ॥ ॥ २ ॥ मनकं प्रतीत्य मनकाख्यमपत्यमाश्रित्य शय्यंनवेनाचार्येण निर्व्यूढानि पूर्वगता-डुद्धृत्य विरचितानि दशाध्ययनानि द्रुमपुष्पिकादीनि । वेयालियाइ ठवियत्ति। विगतः कालो विकालः विकलनं वा विकाल इति। विकालोऽसकलः खण्डश्चेत्यनर्थान्तरम्। तस्मिन् विकालेऽपराह्णे स्थापितानि न्यस्तानि द्रुमपुष्पिकादीन्यध्ययनानि यतः । तस्माद्दशकालिकं नाम। व्युत्पत्तिः पूर्ववत्। दशवैकालिकं वा विकालेन निर्वृत्तम् । संकाशादिपाठाच्चातुरर्थिकष्ठक्, तद्धितेष्वचामादेरित्यादिवृद्धौ वैकालिकं दशाध्ययननिर्माणं च तद्वैकालिकं च दशवैकालिकमिति गाथार्थः। एवं येन वा यद्वा प्रतीत्येति व्याख्यातम्। इदानीं यतो निर्व्यूढानीत्येतद्व्याचिख्यासुराह ॥ आयप्पवायपुवा, निञ्चूढा होइ धम्मपन्नत्ती ॥ कम्मप्पवायपुव्वा, पिंडस्स उ एसणा तिविहा ॥ १६ ॥ सच्चप्पवायपुव्वा, निञ्चूढा होइ वक्कसुद्धी उ ॥ अवसेसा निञ्चूढा, नवमस्स उ तइयवत्थूउ ॥ १७ ॥ बीउ वि अ आएसो-गणिपिडगाउ डुवालसंगाउ॥ एअं किर णिञ्चूढं, मणगस्स अणुग्गहट्ठाए ॥१८॥ व्याख्या॥ इहात्मप्रवादपूर्वं यत्रात्मनः संसारिमुक्ताद्यनेकनेदनिन्नस्य प्रवदनमिति । तस्मान्निर्व्यूढा नवति धर्मप्रज्ञप्तिः षड्जीवनिका इत्यर्थः ॥ तथा कर्मप्रवादपूर्वात्। किम् । पिण्डस्य तु एषणा त्रिविधा निर्व्यूढेति वर्तते । कर्मप्रवादपूर्वं नाम यत्र ज्ञानावरणीयादिकर्मणो निदानादिप्रवदनमिति । तस्मात् किम्। पिण्डस्यैषणा त्रिविधा गवेषणाग्रहणैषणाग्रासैषणानेदनिन्ना निर्व्यूढा सा पुनस्तत्रामुना संबन्धेन पतति । आधाकर्मोपनोक्ता ज्ञानावरणीयादिकर्मप्रकृतीर्बध्नाति। उक्तं च। "आहाकम्मं नुंजमाणे समणे अठकम्मप्पगडीउ बंधई" इत्यादि । शुद्धपिण्डोपनोक्ता चाशुनान्न बध्नातीत्यलं प्रसङ्गेन । प्रकृतं प्रस्तुमः । सत्यप्रवादपूर्वान्निर्व्यूढा नवति वाक्यशुद्धिस्तु । तत्र सत्यप्रवादं नाम यत्र जनपदसत्यादेः प्रवदनमिति । वाक्यशुद्धिर्नाम सप्तममध्ययनम् । अवशेषाणि प्रथमद्वितीयादीनि निर्व्यूढानि नवमस्यैव प्रत्याख्यानपूर्वस्य तृतीयवस्तुन इति । द्वितीयोऽपि चादेशः । आदेशो विध्यन्तरं गणिपिटकादाचार्यसर्वस्वाद्द्वादशाङ्गादाचारादिलक्षणात् इदं दशकालिकं किलेति पूर्ववत् निर्व्यूढमिति च । किमर्थम् । मनकस्योक्तस्वरूपस्य अनुग्रहार्थमिति गाथात्रयार्थः । एवं यत इति व्याख्यातम् । अधुना यावन्तीत्येतत्प्रतिपाद्यते ॥ डुमपुप्फियाइ या खलु, दस अञ्झयणा सनिकुयं जाव ॥ अहिगारे विय एत्तो वोद्धं पत्तेयमेक्केक्कं ॥ १९॥ दारं ॥३॥ व्याख्या॥ तत्र द्रुमपुष्पिकेति प्रथमाध्ययननाम तदादीनि दशाध्ययनानि। सनिकुयं जावत्ति सनि-

द्वध्ययनं यावत्। खलु शब्दो विशेषणार्थः। किं विशिनष्टि। तदन्ये द्वे चूडे यावन्तीति। व्याख्यातं यथा चेत्येतत्। पुनरधिकाराभिधानद्वारेणैव च व्याचिख्यासुः संवन्धकत्वेनेदं गाथादलमाह। अधिकारादपि चातो वक्ष्ये प्रत्येकमेकैकस्मिन् अध्ययने। तत्राध्ययनपरिसमाप्तेर्योऽनुवर्तते सोऽधिकारः। इति गाथार्थः॥ पढमे धम्मपसंसा, सो य इहेव जिणसासणम्मित्ति॥ बिइए धिइए सक्का, काउं जे एस धम्मोत्ति॥२०॥ तइए आयारकहा, उ खुड्डिया आयसंजमो वाउ॥ तह जीवसंजमो वि य, होइ चउत्थंमि अज्झयणे॥२१॥ भिक्खविसोही तव सं-जमस्स गुणकारियाउ पंचमए॥ छट्ठे आयारकहा, महई जोग्गा महयणस्स॥२२॥ वयणविभत्ती पुण स-त्तमम्मि पणिहाणमट्ठमे भणियं॥ णवमे विणउ दसमे, समाणियं एस भिक्खुत्ति॥२३॥ व्याख्या॥ प्रथमाध्ययने कोऽर्थाधिकार इत्यत आह। धर्मप्रशंसा। दुर्गतौ प्रपतन्तमात्मानं धारयतीति धर्मः तस्य प्रशंसा स्तवः सकलपुरुषार्थानामेव धर्मः प्रधानमित्येवंरूपा। तथान्यैरप्युक्तम्। "धनदोऽर्थार्थिनां प्रोक्तः, कामिनां सर्वकामदः॥ धर्म एवापवर्गस्य, पारंपर्येण साधकः॥" इत्यादि॥ स चात्रैव जिनशासने धर्मो नान्यत्र इहैव निरवद्यवृत्तिसद्भावादेतच्चोत्तरत्रान्यकृणे वक्ष्यामः। धर्माभ्युपगमे च सत्यपि मा भूदभिनवप्रव्रजितस्याधृतेः संमोह इत्यतस्तन्निराकरणार्थाधिकारवदेव द्वितीयाध्ययनम्। आह च। द्वितीयेऽध्ययनेऽयमर्थाधिकारः। धृत्या हेतुभूतया शक्यते कर्तुम्। जे इति पूरणार्थो निपातः। एष जैनधर्म इति। उक्तं च। "जस्स धिई तस्स तवो, जस्स तवो तस्स सा गई सुलहा॥ जे अधितिमंतपुरिसा, तवो वि खलु दुल्लभो तेसिं॥" सा पुनर्धृतिराचारे कार्या न त्वनाचारे इत्यतस्तदर्थाधिकारवदेव तृतीयाध्ययनम्। आह च। तृतीयेऽध्ययने कोऽर्थाधिकार इत्यत आह। आचारगोचरा कथा आचारकथा सा चेहैवाणुविस्तरभेदात्। यत आह। क्षुल्लिका लघ्वी सा चात्मसंयमोपायः। संयमनं संयमः। आत्मनः संयम आत्मसंयमस्तदुपायः। उक्तं च॥" तस्यात्मा संयमो यो हि सदाचारे रतः सदा॥ स एव धृतिमान्धर्मस्तस्यैव च जिनोदितः॥" इति। स चाचारः षड्जीवनिकायगोचरः प्राय इत्यतश्चतुर्थमध्ययनम्। अथवात्मसंयमस्तदन्यजीवपरिपालनमेव तत्त्वतः। इत्यतस्तदर्थाधिकारवदेव चतुर्थमध्ययनम्। आह च। तथा जीवसंयमोऽपि भवति चतुर्थेऽध्ययनेऽर्थाधिकार इति। अपिशब्दादात्मसंयमोपि तद्भाव्येव वर्तते। उक्तं च॥ "छसु जीवनिकायेसु जे बुद्धे संजए सदा॥ से चेव होइ विसेए परमट्ठेण संजए॥" इत्यादि। एवमेव धर्मः सर्वदेहे स्वस्थे सति पाल्यते। स चाहारमन्तरा प्रायः स्वस्थो न भवति। स च सावद्येतरभेद इत्यनवद्यो ग्राह्य इत्यतस्तदर्थाधिकारवदेव पञ्चममध्ययनमिति। आह च। भिक्षाविशोधिस्तपःसंयमस्य गुणकारिकैव पञ्चमेऽध्ययनेऽर्थाधिकार इति। तत्र भिक्षणं भिक्षा

णिद्यत्ति । " अनेन च कथानकेन न केवलं येन चेत्यस्यैव द्वारस्य नावार्थोऽनिहितः । किं तु यद्वा प्रतीत्यैतस्यापीति । तथाचाह निर्युक्तिकारः ॥ मणगं पडुच्च सेद्यं-नवेण निद्यूहिया दसऊयणा ॥ वेयालियाइ ठविया तम्हा दसकालियं णामं ॥ १५ ॥ दारं ॥ ॥ २ ॥ मनकं प्रतीत्य मनकाख्यमपत्यमाश्रित्य शय्यंनवेनाचार्येण निर्व्यूढानि पूर्वगता-दुद्धृत्य विरचितानि दशाध्ययनानि द्रुमपुष्पिकादीनि । वेयालियाइ ठवियत्ति। विगतः कालो विकालः विकलनं वा विकाल इति। विकालोऽसकलः खएमश्चेत्यनर्थान्तरम्। तस्मि-न् विकालेऽपराह्णे स्थापितानि न्यस्तानि द्रुमपुष्पिकादीन्यध्ययनानि यतः । तस्माद्दश-कालिकं नाम। व्युत्पत्तिः पूर्ववत्। दशवैकालिकं वा विकालेन निर्वृत्तम् । संकाशादिपाठा-च्चातुरर्थिकष्ठक्, तद्धितेष्वचामादेरित्यादिवृद्धेर्वैकालिकं दशाध्ययननिर्माणं च तद्वैका-लिकं च दशवैकालिकमिति गाथार्थः । एवं येन वा यद्वा प्रतीत्येति व्याख्यातम्। इदानीं यतो निर्व्यूढानीत्येतद्व्याचिख्यासुराह ॥ आयप्पवायपुव्वा, निद्यूढा होइ धम्मपन्नत्ती ॥ कम्मप्पवायपुव्वा, पिंमस्स उ एसणा तिविहा ॥ १६ ॥ सच्चप्पवायपुव्वा, निद्यूढा होइ वक्कसुद्धी उ ॥ अवसेसा निद्यूढा, नवमस्स उ तइयवत्थूउ ॥ १७ ॥ वीउं वि अ आएसो-गणिपिडगाउ डुवालसंगाउ॥ एअं किर णिद्यूढं, मणगस्स अणुग्गहठाए ॥१७॥ व्याख्या ॥ इहात्मप्रवादपूर्वं यत्रात्मनः संसारिमुक्ताद्यनेकनेदनिन्नस्य प्रवदनमिति । तस्मा-न्निर्व्यूढा नवति धर्मप्रज्ञप्तिः षड्जीवनिका इत्यर्थः ॥ तथा कर्मप्रवादपूर्वात् । किम् । पिएमस्य तु एषणा त्रिविधा निर्व्यूढेति वर्तते । कर्मप्रवादपूर्वं नाम यत्र ज्ञानावरणी-यादिकर्मणो निदानादिप्रवदनमिति । तस्मात् किम् । पिएमस्यैषणा त्रिविधा गवे-षणाग्रहणैषणाग्रासैषणानेदनिन्ना निर्व्यूढा सा पुनस्तत्रामुना संबन्धेन पतति । आधाकर्मोपनोक्ता ज्ञानावरणीयादिकर्मप्रकृतीर्बध्नाति। उक्तं च । " आहाकम्मं नुंज-माणे समणे अठकम्मप्पगडीउ बंधई" इत्यादि । शुद्धपिएमोपनोक्ता चाशुनान्न बध्ना-तीत्यलं प्रसङ्गेन । प्रकृतं प्रस्तुमः । सत्यप्रवादपूर्वान्निर्व्यूढा नवति वाक्यशुद्धिस्तु । तत्र सत्यप्रवादं नाम यत्र जनपदसत्यादेः प्रवदनमिति । वाक्यशुद्धिर्नाम सप्तममध्य-यनम् । अवशेषाणि प्रथमद्वितीयादीनि निर्व्यूढानि नवमस्यैव प्रत्याख्यानपूर्वस्य तृती-यवस्तुन इति । द्वितीयोऽपि चादेशः । आदेशो विध्यन्तरं गणिपिटकादाचार्यसर्वस्वा-द्द्वादशाङ्गादाचारादिलक्षणात् इदं दशकालिकं किलेति पूर्ववत् निर्व्यूढमिति च । कि-मर्थम् । मनकस्योक्तस्वरूपस्य अनुग्रहार्थमिति गाथात्रयार्थः । एवं यत इति व्याख्या-तम् । अधुना यावन्तीत्येतत्प्रतिपाद्यते ॥ डुमपुप्फियाइ या खलु, दस अज्ञयणा सनिकुयं जाव ॥ अहिगारे विय एत्तो वोद्धं पत्तेयमेक्केक्कं ॥ १ए॥ दारं ॥ ३ ॥ व्याख्या ॥ तत्र द्रुमपुष्पिकेति प्रथमाध्ययननाम तदादीनि दशाध्ययनानि। सनिकुयं जावत्ति सनि-

द्वध्ययनं यावत्। खलु शब्दो विशेषणार्थः। किं विशिनष्टि। तदन्ये द्वे चूडे यावन्तीति। व्याख्यातं यथा चेत्येतत्। पुनरधिकाराभिधानद्वारेणैव च व्याचिख्यासुः संबन्धकत्वेनेदं गाथादलमाह। अधिकारादपि चातो वक्ष्ये प्रत्येकमेकैकस्मिन् अध्ययने। तत्राध्ययनपरिसमाप्तेर्योऽनुवर्तते सोऽधिकारः। इति गाथार्थः॥ पढमे धम्मपसंसा, सो य इहेव जिणसासणम्मित्ति॥ बिइए धिइए सक्का, काउं जे एस धम्मोत्ति॥२०॥ तइए आयारकहा, उ खुड्डिया आयसंजमो वाउं॥ तह जीवसंजमो वि य, होइ चउत्थंमि अज्झयणे॥२१॥ भिक्खविसोही तव सं–जमस्स गुणकारियाउ पंचमए॥ छठे आयारकहा, महई जोग्गा महयणस्स॥२२॥ वयणविभत्ती पुण स–त्तमम्मि पणिहाणमठमे भणियं॥णवमे विणउ दसमे, समाणियं एस भिक्खुत्ति॥२३॥ व्याख्या॥प्रथमाध्ययने कोऽर्थाधिकार इत्यत आह। धर्मप्रशंसा। दुर्गतौ प्रपतन्तमात्मानं धारयतीति धर्मः तस्य प्रशंसा स्तवः सकलपुरुषार्थानामेव धर्मः प्रधानमित्येवंरूपा। तथान्यैरप्युक्तम्। "धनदोऽर्थार्थिनां प्रोक्तः, कामिनां सर्वकामदः॥ धर्म एवापवर्गस्य, पारंपर्येण साधकः॥"इत्यादि॥ स चात्रैव जिनशासने धर्मो नान्यत्र इहैव निरवद्यवृत्तिसद्भावादेतच्चोत्तरत्रान्यकृणे वक्ष्यामः। धर्माभ्युपगमे च सत्यपि मा भूदभिनवप्रव्रजितस्याधृतेः संमोह इत्यतस्तन्निराकरणार्थाधिकारवदेव द्वितीयाध्ययनम्। आह च। द्वितीयेऽध्ययनेऽयमर्थाधिकारः। धृत्या हेतुभूतया शक्यते कर्तुम्। जे इति पूरणार्थो निपातः। एष जैनधर्म इति। उक्तं च। "जस्स धिई तस्स तवो, जस्स तवो तस्स सा गई सुलहा॥ जे अधितिमंतपुरिसा, तवो वि खलु दुल्लभो तेसिं॥" सा पुनर्धृतिराचारे कार्या न त्वनाचारे इत्यतस्तदर्थाधिकारवदेव तृतीयाध्ययनम्। आह च। तृतीयेऽध्ययने कोऽर्थाधिकार इत्यत आह। आचारगोचरा कथा आचारकथा सा चेहैवाणुविस्तरभेदात्। यत आह। क्षुल्लिका लघ्वी सा चात्मसंयमोपायः। संयमनं संयमः। आत्मनः संयम आत्मसंयमस्तदुपायः। उक्तं च॥" तस्यात्मा संयमो यो हि सदाचारे रतः सदा॥ स एव धृतिमान्धर्मस्तस्यैव च जिनोदितः॥ "इति। स चाचारः षड्जीवनिकायगोचरः प्राय इत्यतश्चतुर्थमध्ययनम्। अथवात्मसंयमस्तदन्यजीवपरिपालनमेव तत्त्वतः। इत्यतस्तदर्थाधिकारवदेव चतुर्थमध्ययनम्। आह च। तथा जीवसंयमोऽपि भवति चतुर्थेऽध्ययनेऽर्थाधिकार इति। अपिशब्दादात्मसंयमोपि तद्भाव्येव वर्तते। उक्तं च॥ "छसु जीवनिकायेसु जे बुहे संजए सदा॥ से चेव होइ विसेए परमठेण संजए॥" इत्यादि। एवमेव धर्मः सर्वदेहे स्वस्थे सति पाल्यते। स चाहारमन्तरा प्रायः स्वस्थो न भवति। स च सावद्येतरभेद इत्यनवद्यो ग्राह्य इत्यतस्तदर्थाधिकारवदेव पञ्चममध्ययनमिति। आह च। भिक्षाविशोधिस्तपःसंयमस्य गुणकारिकैव पञ्चमेऽध्ययनेऽर्थाधिकार इति। तत्र भिक्षणं भिक्षा

तस्या विशोधिः सावद्यपरिहारेणेतरस्वरूपकथनमित्यर्थः । तपःप्रधानः संयमस्तपःसंयमस्तस्य गुणकारिकैवेयं वर्तते इति ॥ उक्तं च ॥ "से संजए समरकाए निरवद्याहार जे विउ ॥ धम्मकायठिए सम्मं सुहजोगाण साहए" ॥ इत्यादि । गोचरप्रविष्टेन च सता स्वाचारं पृष्टेन तद्विदापि न महाजनसमक्षं तत्रैव विस्तरतः कथयितव्यः । अपि तु आलये गुरवो वा कथयन्तीति वक्तव्यमतस्तदर्थाधिकारवदेव षष्ठमध्ययनमिति।आह च। षष्ठेऽध्ययनेऽर्थाधिकार आचारकथा । सापि महती न क्षुल्लिका योग्या उचिता महाजनस्य विशिष्टपरिषद इत्यर्थः । वक्ष्यति च ॥ "गोअरग्गपविठ्ठे उ न निसिद्यइ कब्र इ॥ कहं च न पबंधिद्या चिठ्ठित्ता णेव संजए" ॥ इत्यादि । आलयगतेनापि तेन गुरुणा वा वचनदोषगुणाभिज्ञेन निरवद्यवचसा कथयितव्यम् । इत्यतस्तदर्थाधिकारवदेव सप्तममध्ययनमिति । आह च । वयणविभत्तीत्यादि। वचनस्य विभक्तिर्वचनविभक्तिः । विभजनं विभक्तिः एवंभूतमनवद्यमिदंभूतं च सावद्यमित्यर्थः । पुनःशब्दः शेषाध्ययनार्थाधिकारेभ्यः अस्याधिकृतार्थाधिकारस्य विशेषणार्थ इति सप्तमेऽध्ययने अर्थाधिकार इति । उक्तं च ॥ " सावद्यणवद्याणं, वयणाणं जो ण याणइ विसेसं ॥ वोत्तुं पि तस्स न खमं, किमंग पुण देसणं काउं " इत्यादि । तच्च निरवद्यं वचः स्वाचारे प्रणिहितस्य भवति इत्यतस्तदर्थाधिकारवदेवाष्टममध्ययनमिति । आह च । प्रणिधानमष्टमेऽध्ययनेऽर्थाधिकारत्वेन भणितमुक्तम् । प्रणिधानं नाम विशिष्टश्चेतोधर्म इति । उक्तं च ॥ " पणिहाणरहियस्साहा निरवद्यंति भासियं ॥ सावद्यतुल्लं विन्नेयं मझ्झत्थेणेह संवुडं " इत्यादि ॥ आचारप्रणिहितश्च यथोचितविनयसंपन्न एव भवतीत्यतस्तदर्थाधिकारवदेव नवममध्ययनमिति । आह च । नवमेऽध्ययने विनयोऽर्थाधिकार इति।उक्तं च॥"आयारपणिहाणंमि, से सम्मं वढ्ढई बुहे ॥ णाणादीणं विणीए जे मोरकठ्ठा णिविगिञ्चिए ॥" इत्यादि ॥ एतेषु एव नवस्वध्ययनार्थेषु यो व्यवस्थितः स सम्यग् भिक्षुरित्यनेन संबन्धेन सभिक्ष्वध्ययनमिति । आह च । दशमेऽध्ययने समाप्तिं नीतमिदं साधुक्रियाभिधायकं शास्त्रम्। एतत्क्रियासमन्वित एव भिक्षुर्भवत्यत आह एष भिक्षुरिति गाथाचतुष्टयार्थः । स एवं गुणयुक्तोऽपि भिक्षुः कदाचित् कर्मपरतन्त्रत्वात्कर्मणश्च बलवत्त्वात्सीदेत् । ततस्तस्य स्थिरीकरणं कर्तव्यमतस्तदर्थाधिकारवदेव चूडाद्वयमित्याह ॥ दो अझ्झयणा चूलिय, विसीययंते थिरीकरणमेगं॥ बिइए विवित्तचरिया असीयणगुणाइरेगफला ॥ २४ ॥ व्याख्या॥ द्वे अध्ययने। किम्। चूडा चूडेव चूडा तत्र प्रमादवशाद्विषीदति सति साधौ संयमे स्थिरीकरणमेकं प्रथमं स्थिरीकरणफलमित्यर्थः । तथा च तत्रावधानप्रेक्षिणः साधोः दुःप्रजीवित्वे नरकपातादयो दोषा वर्ण्यन्त इति । तथा च द्वितीयेऽध्ययने विविक्तचर्या वर्ण्यते । किंभूता असीदनगुणातिरेकफला ।

तत्र विविक्तचर्यैकान्तचर्या द्रव्यक्षेत्रकालभावेष्वसंबद्धता । उपलक्षणं चैषानियतचर्यादीनामिति । असीदनगुणातिरेकः फलं यस्याः सा तथाविधेति गाथार्थः । दसकालिअस्स एसो, पिंडत्थो वन्निओ समासेणं ॥ एत्तो एक्केक्कं पुण, अज्झयणं कित्तइस्सामि ॥ २५ ॥ व्याख्या ॥ दशकालिकस्य प्राग्निरूपितशब्दार्थस्यैषोऽनन्तरोदितः पिण्डार्थः सामान्यार्थो वर्णितः प्रतिपादितः समासेन संक्षेपेण । अत ऊर्ध्वं पुनरेकैकमध्ययनं कीर्तयिष्यामि प्रतिपादयिष्यामीति । पुनःशब्दस्य व्यवहित उपन्यास इति गाथार्थः। तत्र प्रथमाध्ययनं द्रुमपुष्पिका। तस्य च चत्वार्यनुयोगद्वाराणि भवन्ति। तद्यथा, उपक्रमो निक्षेपोऽनुगमो नयः। एषां चतुर्णामप्यनुयोगद्वाराणामध्ययनादावुपन्यासः । तत्रेत्थं च क्रमोपन्यासप्रयोजनमावश्यकविशेषविवरणादवसेयं स्वरूपं च प्रायश इति । प्रकृताध्ययनस्य च शास्त्रीयोपक्रमे आनुपूर्व्यादिभेदेषु स्वबुद्ध्यवतारः कार्यः । अर्थाधिकारश्च वक्तव्यः । तथाचाह निर्युक्तिकारः ॥ पढमज्झयणं दुमपु–प्फियं ति चत्तारि तस्स दाराइं ॥ वन्नेउवक्कमाई, धम्मपसंसाइ अहिगारो ॥ २६ ॥ व्याख्या ॥ प्रथमाध्ययनं द्रुमपुष्पिकेति। अस्य नामनिष्पन्ननिक्षेपावसर एव शब्दार्थं वक्ष्यामः । चत्वारि तस्य द्वाराण्यनुयोगद्वाराणि । किम् । वर्णयित्वोपक्रमादीनीति । किम् । धर्मप्रशंसयाधिकारो वाच्य इति गाथार्थः । तत्र निक्षेपः। स च त्रिविधस्तद्यथा, ओघनिष्पन्नो नामनिष्पन्नः सूत्रालापकनिष्पन्नश्चेति। तत्रौघः सामान्यं श्रुताभिधानम्। तथाचाह निर्युक्तिकारः॥ ओहो जं सामन्नं, सुआभिहाणं चउव्विहं तं च॥ अज्झयणं अज्झीणं, आयज्झवणा य पत्तेअं ॥२७॥ व्याख्या॥ ओघो यत्सामान्यं श्रुताभिधानं श्रुतनाम चतुर्विधम्। तच्च कथम्। अध्ययनमक्षीणमायः क्षपणा च। इदं च प्रत्येकं पृथक्पृथक्। किम्॥ नामाइचउब्भेयं,वन्नेऊणं सुआणुसारेणं ॥ दुमपुप्फिअ आउंचं, चउसुं पि कमेण भावेसु॥ २८॥ व्याख्या ॥ नामादिचतुर्भेदं वर्णयित्वा । तद्यथा ।नामाध्ययनं स्थापनाध्ययनं द्रव्याध्ययनं भावाध्ययनं चेत्येवमक्षीणादीनामपिन्यासःकर्तव्यः।श्रुतानुसारेणानुयोगद्वाराख्यसूत्रानुसारेण। किम्। द्रुमपुष्पिका आयोज्या प्रकृताध्ययनं संवन्धनीयम्। चतुर्ष्वप्यध्ययनादिषु क्रमेण भावेष्विति गाथार्थः । सांप्रतं भावाध्ययनादिशब्दार्थं प्रतिपादयन्नाह ॥ अज्झप्पस्साणयणं, कम्माणं अवचओ उवचिआणं ॥ अणुवचओ अ नवाणं, तम्हा अज्झयणमिच्छंति ॥ २९ ॥ अहिगम्मंति अत्था, इमेण अहिगं च नयणमिच्छंति ॥ अहिगं च साहु गच्छइ, तम्हा अज्झयणमिच्छंति ॥ ३० ॥ जह दीवा दीवसयं, पइप्पई सो अ दिप्पई दीवो ॥ दीवसमा आयरिया, दिप्पंति परं च दीवंति ॥ ३१ ॥ नाणस्स दंसणस्स वि, चरणस्स य जेण आगमो होई ॥ सो होइ भाव आओ,आओ लाहो त्ति निद्दिट्ठो ॥ ३२ ॥ अट्ठविहं कम्मरयं,पोराणं जं खवेइ जोगेहिं॥ एअं भावज्झयणं, नेअव्वं आणुपुव्वीए ॥ ३३ ॥

आत्मा येषां तेषाम्। किं०। विप्रमुक्तानां विविधमनेकप्रकारैः प्रकर्षेण संसारान्मुक्तानाम्। पुनः किं०। तायिनाम्। त्रायन्ते आत्मानं परमुभयं च ये ते त्रातारस्तेषाम्। आत्मानं प्रत्येकबुद्धाः, परं तीर्थकराः, उभयं स्थविराः, तेषामिदं वक्ष्यमाणलक्षणमनाचीर्णमनाचरितसकल्पम्। केषामित्याह। निर्ग्रन्थानां साधूनाम्। किंविशिष्टानाम्। महर्षीणां महतां यतीनाम्॥ १॥

---

(टीका) व्याख्यातं श्रामण्यपूर्वकाध्ययनमिदानीं क्षुल्लकाचारकथाख्यमारभ्यते। अस्य चायमभिसंबन्धः। इहानन्तराध्ययने धर्माभ्युपगमे सति माभूदभिनवप्रव्रजितस्याधृतेः संमोह इत्यतो धृतिमता भवितव्यमित्युक्तम्। इह तु सा धृतिराचारे कार्या नत्वनाचारे। अयमेवात्मसंयमोपाय इत्येतदुच्यते। उक्तं च॥ तस्यात्मा संयतो यो हि, सदाचारे रतः सदा॥ स एव धृतिमान् धर्मस्तस्यैव च जिनोदितः॥ इत्यनेनाभिसंबन्धेनायातस्यास्याध्ययनस्य चत्वार्यनुयोगद्वाराणि पूर्ववत्। नामनिष्पन्ने निक्षेपे क्षुल्लकाचारकथेति नाम। तत्र क्षुल्लकस्येति निक्षेपः कार्यः। आचारस्य कथायाश्च महदपेक्षया च क्षुल्लकमित्यतश्चित्रन्यायप्रदर्शनार्थमपेक्षणीयमेव। महदभिधित्सुराह। नामं ठवणा दविए, खेत्ते काले पहाणपइभावे॥ एएसि महंताणं, पडिवक्खे खुड्डया होंति॥१७४॥व्याख्या॥ नाममहन्महदिति नाम। स्थापनामहन्महः०। द्रव्यमहानचित्तमहास्कन्दः। क्षेत्रमहल्लोकालोकाकाशम्। कालमहानतीतादिभेदः संपूर्णः कालः। प्रधानमहत्त्रिविधम्। सचित्ताचित्तमिश्रभेदात्। सचित्तं त्रिविधम्। द्विपदचतुष्पदापदभेदात्। तत्र द्विपदानां तीर्थकरः प्रधानः। चतुष्पदानां हस्ती। अपदानां पनसः। अचित्तानां वैडूर्यरत्नम्। मिश्राणां तीर्थकर एव वैडूर्यादिविभूषितः प्रधानः। इत्यत एव चैतेषां महत्त्वमिति प्रतीत्य महदापेक्षिकम्। तद्यथा आमलकं प्रतीत्य बिल्वं महत्, बिल्वं प्रतीत्य कपित्थमित्यादि। भावमहत्त्रिविधं प्राधान्यतः कालत आश्रयतश्चेति। प्राधान्यतः क्षायिको महान्मुक्तिहेतुत्वेन तस्यैव प्रधानत्वात्। कालतः पारिणामिकः। जीवत्वाजीवत्वपरिणामस्यानाद्यपर्यवसितत्वान्न कदाचिज्जीवा अजीवतया परिणमन्ते अजीवाश्च जीवतयेति। आश्रयतस्त्वौदयिकः। प्रभूतसंसारिसत्त्वाश्रयत्वात्संसारिणामेवासौ विद्यत इति एतेषामनन्तरोदितानां महतां प्रतिपक्षे क्षुल्लकानि भवन्ति। अभिधेयवल्लिङ्गवचनानि भवन्तीति न्यायात् यथार्थं क्षुल्लकलिङ्गवचनमिति। तत्र नामस्थापने क्षुण्णे। द्रव्यक्षुल्लकः परमाणुः। द्रव्यं चासौ क्षुल्लकश्चेति। क्षेत्रक्षुल्लक आकाशप्रदेशः। कालक्षुल्लकः समयः। प्रधानक्षुल्लकं त्रिविधम्। सचित्ताचित्तमिश्रभेदात्। सचित्तं त्रिविधम्। द्विपदचतुष्पदापदभेदात्। द्विपदेषु क्षुल्लकाः प्रधानाश्चानु-

त्तरसुराः । शरीरेषु क्षुल्लकमाहारकम् । चतुष्पदेषु प्रधानः क्षुल्लकश्च सिंहः । अपदेषु जातिकुसुमानि । अचित्तेषु वज्रं प्रधानं क्षुल्लकं च । मिश्रेष्वनुत्तरसुरा एव शयनीयगता इति । प्रतीत्य क्षुल्लकं तु कपित्थं प्रतीत्य बिल्वं क्षुल्लकं बिल्वं प्रतीत्यामलकमित्यादि। नावक्षुल्लकस्तु क्षायिको नावः स्तोकजीवाश्रयत्वादिति गाथार्थः । इत्थं क्षुल्लकनिक्षेपमनिधायाधुना प्रकृतयोजनापुरःसरमाचारनिक्षेपमाह ॥ पडुखुडुएण पगयं, आयारस्स उ चउक्कनिक्खेवो ॥ नामं ठवणा दविए, नावायारे य बोधवे ॥ १७५॥ व्याख्या ॥ प्रतीत्य यत् क्षुल्लकमुपदिष्टम् । तेनात्राधिकारः । यतो महती खल्वाचारकथा धर्मार्थकामाध्ययनं तदपेक्षया क्षुल्लिकेयमिति । आचारस्य तु चतुष्को निक्षेपः । स चायम् । नामाचारः स्थापनाचारो ड्रव्याचारो नावाचारश्च बोद्धव्य इति गाथार्थः । नावार्थं तु वक्ष्यति । तत्र नामस्थापने क्षुसे । अतो ड्रव्याचारमाह । नामणधावणवासणसिक्खावणसुकरणाविरोहीणि ॥ दवाणि जाणि लोए, दवायारं वियाणाहि ॥ १७६ ॥ व्याख्या ॥ नामनधावनवासन–शिक्षापनसुकरणाविरोधीनि ड्रव्याणि यानि लोके तानि ड्रव्याचारं विजानीहि । अयमत्र नावार्थः । आचरणमाचारः । ड्रव्यस्याचारो ड्रव्याचारः । ड्रव्यस्य यदाचरणं तेन तेन प्रकारेण परिणमनमित्यर्थः । तत्र नामनमवनतिकरणमुच्यते । तत् प्रति द्विविधं ड्रव्यं नवति । आचारवदनाचारवच्च । तत्परिणामयुक्तमयुक्तं चेत्यर्थः । तत्र तिनिशलतादि आचारवत् । एरण्डलताद्यनाचारवत् । एतडुक्तं नवति । तिनिशलताद्याचरितं नावं तेन रूपेण परिणमति । नत्वेरण्डादि । एवं सर्वत्र नावना कार्या । न वरमुदाहरणानि प्रदर्श्यन्ते । धावनं प्रति हरिड्रारक्तं वस्त्रमाचारवत् सुखेन प्रक्षालनात् । कृमिरागरक्तमनाचारवत् तद्भस्मनोऽपि रागानपगमात् । वासनं प्रति कवेलुकाद्याचारवत्सुखेन पाटलाकुसुमादिनिर्वास्यमानत्वात् । वैडूर्याद्यनाचारवत् अशक्यत्वात् । शिक्षणं प्रत्याचारवच्छुकसारिकादि सुखेन मानुषनाषासंपादनात् । अनाचारवच्छकुन्तादि तद्विपर्ययात् । सुकरणं प्रत्याचारवत् सुवर्णादि सुखेन तस्य तस्य कटकादेः करणात् । अनाचारवत् घण्टालोहादि तत्रान्यस्य तथाविधस्य कर्तुमशक्यत्वादिति । अविरोधं प्रत्याचरवन्ति गुडदध्यादीनि रसोत्कर्षाडुपनोगगुणाच्च । अनाचारवन्ति तैलक्षीरादीनि विपर्ययादिति । एवंनूतानि ड्रव्याणि यानि लोके तान्येव तस्याचारस्य तद्ड्रव्याव्यतिरेकाद्ड्रव्याचारस्य च विवक्षितत्वात्तथा चरणपरिणामस्य नावत्वेऽपि गुणान्नावाद्ड्रव्याचारं विजानीहि अवबुध्यस्वेति गाथार्थः । उक्तो ड्रव्याचारः सांप्रतं नावाचारमाह ॥ दंसणनाणचरित्ते तवआयारे य वीरियायारे ॥ एसो नावायारो, पंचविहो होइ नायवो ॥ १७७ ॥ व्याख्या ॥ दर्शनज्ञानचारित्रादिष्वाचारशब्दः प्रत्येकम-

भिसंबध्यते । दर्शनाचारो ज्ञानाचारश्चारित्राचारस्तपआचारो वीर्याचारश्चेति । तत्र दर्शनं सम्यग्दर्शनमुच्यते । न चक्षुरादिदर्शनम् । तच्च क्षायोपशमिकादिरूपत्वाद्भाव एव । ततश्च तदाचरणं दर्शनाचार इत्येवं शेषेष्वपि योजनीयम् । भावार्थं तु वक्ष्यति । एष भावाचारः पञ्चविधो भवति ज्ञातव्यः । इति गाथाक्षरार्थः । अधुना भावार्थ उच्यते । तत्र यथोद्देशं निर्देश इत्यादौ दर्शनाचारभावार्थः । दर्शनाचारश्चाष्टधा । तथा चाह । गाथा ॥ निस्संकिय निक्कंखिय, निव्वितिगिछा अमूढदिठी अ ॥ उववूहथिरीकरणे, वच्छल्लपभावणे अठ ॥ १८८ ॥ व्याख्या ॥ निःशङ्कित इत्यत्र शङ्का शङ्कितं, निर्गतं शङ्कितं यतोऽसौ निःशङ्कितः । देशसर्वशङ्कारहित इत्यर्थः । तत्र देशशङ्का समाने जीवत्वे कथमेको भव्योऽपरोऽभव्य इति शङ्कते । सर्वशङ्का तु प्राकृतनिबद्धत्वात्सर्वमेवेदं परिकल्पितं भविष्यतीति । न पुनरालोचयति । यथा भावा हेतुग्राह्या अहेतुग्राह्याश्च । तत्र हेतुग्राह्या जीवास्तित्वादयः । अहेतुग्राह्या भव्यत्वादयः । अस्मदाद्यपेक्षया प्रकृष्टज्ञानगोचरत्वात् तद्धेतूनामिति । प्राकृतनिबन्धोऽपि बालादिसाधारण इति । उक्तं च ॥ बालस्त्रीमूढमूर्खाणां नृणां चारित्रकाङ्क्षिणाम् ॥ अनुग्रहार्थं तत्त्वज्ञैः, सिद्धान्तः प्राकृतः स्मृतः ॥ दृष्टेष्टाविरुद्धश्चेति । उदाहरणं चात्र पेयापेयकौ यथावश्यके । ततश्च निःशङ्कितो जीव एवार्हच्छासनप्रतिपन्नो दर्शनाचरणात् । तत्प्राधान्यविवक्षया दर्शनाचार उच्यते । अनेन दर्शनदर्शनिनोरभेदमाह । तदेकान्तभेदे त्वदर्शनिन इव तत्फलाभावात् मोक्षाभाव इत्येवं शेषपदेष्वपि भावना कार्येति । तथा निःकाङ्क्षितो देशसर्वकाङ्क्षारहितः । तत्र देशकाङ्क्षा एकं दर्शनं काङ्क्षति दिगम्बरदर्शनादि । सर्वकाङ्क्षा तु सर्वाण्येवेति । नालोचयति षड्जीवनिकायपीडामसत्प्ररूपणां च । उदाहरणं चात्र राजामात्यौ यथावश्यक इति । विचिकित्सा मतिविभ्रमः । निर्गता विचिकित्सा मतिविभ्रमो यतोऽसौ निर्विचिकित्सः । साध्वेव जिनदर्शनं किंतु प्रवृत्तस्यापि सतो ममास्मात्फलं भविष्यति न भविष्यतीति । क्रियायाः कृषीवलादिषूभयोपलब्धेरिति विकल्परहितः । न ह्यविकलोपाय उपेयवस्तुपरिप्रापको न भवतीति संजातनिश्चयो निर्विचिकित्स उच्यते । एतावतांशेन निःशङ्किताद्भिन्नः । उदाहरणं चात्र विद्यासाधको यथावश्यक इति । यद्वा निर्विजुगुप्सः साधुजुगुप्सारहितः । उदाहरणं चात्र श्रावकदुहिता यथावश्यक एव । तथामूढदृष्टिश्च बालतपस्वितपोविद्यातिशयदर्शनैर्न मूढा स्वरूपान्न चलिता दृष्टिः सम्यग्दर्शनरूपा यस्यासावमूढदृष्टिः । अत्रोदाहरणं सुलसा साविया । जहा लोइयरिसी अंवडो रायगिहं गच्छंतो बहूणं भवियाणं थिरीकरणणिमित्तं सामिणा भणिउ । सुलसं पुच्छिज्जासि । अम्मडो चिंतेइ । पुण्णमंतिया सुलसा जं अरहा पुच्छेइ । तउ अम्मडेण परिक्ख-

त्तरसुराः । शरीरेषु क्षुल्लकमाहारकम् । चतुष्पदेषु प्रधानः क्षुल्लकश्च सिंहः । अपदेषु जातिकुसुमानि । अचित्तेषु वज्रं प्रधानं क्षुल्लकं च । मिश्रेष्वनुत्तरसुरा एव शयनीयगता इति । प्रतीत्य क्षुल्लकं तु कपित्थं प्रतीत्य बिल्वं क्षुल्लकं बिल्वं प्रतीत्यामलकमित्यादि। नावक्षुल्लकस्तु क्षायिको नावः स्तोकजीवाश्रयत्वादिति गाथार्थः । इत्थं क्षुल्लकनिक्षेपमनिधायाधुना प्रकृतयोजनापुरःसरमाचारनिक्षेपमाह ॥ पइखुड्डुएण पगयं, आयारस्स ड चउक्कनिक्खेवो ॥ नामं ठवणा दविए, नावायारे य वोधवे ॥ १०५ ॥ व्याख्या ॥ प्रतीत्य यत् क्षुल्लकमुपदिष्टम् । तेनात्राधिकारः । यतो महती खल्वाचारकथा धर्मार्थकामाध्ययनं तदपेक्षया क्षुल्लिकेयमिति । आचारस्य तु चतुष्को निक्षेपः । स चायम् । नामाचारः स्थापनाचारो ड्रव्याचारो नावाचारश्च वोद्धव्य इति गाथार्थः । नावार्थं तु वक्ष्यति । तत्र नामस्थापने क्षुण्णे । अतो ड्रव्याचारमाह । नामणधावणवासणसिक्खावणसुकरणाविरोहीणि ॥ दवाणि जाणि लोए, दव्वायारं वियाणाहि ॥ १०६ ॥ व्याख्या ॥ नामनधावनवासन–शिक्षापनसुकरणाविरोधीनि ड्रव्याणि यानि लोके तानि ड्रव्याचारं विजानीहि । अयमत्र नावार्थः । आचरणमाचारः । ड्रव्यस्याचारो ड्रव्याचारः । ड्रव्यस्य यदाचरणं तेन तेन प्रकारेण परिणमनमित्यर्थः । तत्र नामनमवनतिकरणमुच्यते । तत् प्रति द्विविधं ड्रव्यं नवति । आचारवदनाचारवच्च । तत्परिणामयुक्तमयुक्तं चेत्यर्थः । तत्र तिनिशलतादि आचारवत् । एरण्डलताद्यनाचारवत् । एतडुक्तं नवति । तिनिशलताद्याचरितं नावं तेन रूपेण परिणमति । नत्वेरण्डादि । एवं सर्वत्र नावना कार्या । न वरमुदाहरणानि प्रदर्श्यन्ते । धावनं प्रति हरिड्रारक्तं वस्त्रमाचारवत् सुखेन प्रक्षालनात् । कृमिरागरक्तमनाचारवत् तद्भस्मनोऽपि रागानपगमात् । वासनं प्रति कवेल्लुकाद्याचारवत्सुखेन पाटलाकुसुमादिनिर्वास्यमानत्वात् । वैडूर्याद्यनाचारवत् अशक्यत्वात् । शिक्षणं प्रत्याचारवच्छुकसारिकादि सुखेन मानुषनाषासंपादनात् । अनाचारवच्छकुन्तादि तद्विपर्ययात् । सुकरणं प्रत्याचारवत् सुवर्णादि सुखेन तस्य तस्य कटकादेः करणात् । अनाचारवत् घण्टालोहादि तत्रान्यस्य तथाविधस्य कर्तुमशक्यत्वादिति । अविरोधं प्रत्याचरवन्ति गुडदध्यादीनि रसोत्कर्षाडुपनोगगुणाच्च । अनाचारवन्ति तैलक्षीरादीनि विपर्ययादिति । एवंनूतानि ड्रव्याणि यानि लोके तान्येव तस्याचारस्य तड्रव्याव्यतिरेकाद्द्रव्याचारस्य च विवक्षितत्वात्तथा चरणपरिणामस्य नावत्वेऽपि गुणानावाद्द्रव्याचारं विजानीहि अवबुध्यस्वेति गाथार्थः । उक्तो ड्रव्याचारः सांप्रतं नावाचारमाह ॥ दंसणनाणचरित्ते तवआयारे य वीरियायारे ॥ एसो नावायारो, पंचविहो होइ नायवो ॥ १०७ ॥ व्याख्या ॥ दर्शनज्ञानचारित्रादिष्वाचारशब्दः प्रत्येकम-

भिसंबध्यते । दर्शनाचारो ज्ञानाचारश्चारित्राचारस्तपआचारो वीर्याचारश्चेति । तत्र दर्शनं सम्यग्दर्शनमुच्यते । न चक्षुरादिदर्शनम् । तच्च क्षायोपशमिकादिरूपत्वाद्भाव एव । ततश्च तदाचरणं दर्शनाचार इत्येवं शेषेष्वपि योजनीयम् । भावार्थं तु वक्ष्यति । एष भावाचारः पञ्चविधो भवति ज्ञातव्यः । इति गाथाक्षरार्थः । अधुना भावार्थ उच्यते । तत्र यथोद्देशं निर्देश इत्यादौ दर्शनाचारभावार्थः । दर्शनाचारश्चाष्टधा । तथा चाह । गाथा ॥ निस्संकिय निक्कंखिय, निव्वितिगिच्छा अमूढदिठ्ठी अ ॥ उववूहथिरीकरणे, वच्छल्लपभावणे अठ ॥ १०० ॥ व्याख्या ॥ निःशङ्कित इत्यत्र शङ्का शङ्कितं, निर्गतं शङ्कितं यतोऽसौ निःशङ्कितः । देशसर्वशङ्कारहित इत्यर्थः । तत्र देशशङ्का समाने जीवत्वे कथमेको भव्योऽपरोऽभव्य इति शङ्कते । सर्वशङ्का तु प्राकृतनिबद्धत्वात्सर्वमेवेदं परिकल्पितं भविष्यतीति । न पुनरालोचयति । यथा भावा हेतुग्राह्या अहेतुग्राह्याश्च । तत्र हेतुग्राह्या जीवास्तित्वादयः । अहेतुग्राह्या भव्यत्वादयः । अस्मदाद्यपेक्षया प्रकृष्टज्ञानगोचरत्वात् तद्धेतूनामिति । प्राकृतनिबन्धोऽपि बालादिसाधारण इति । उक्तं च ॥ बालस्त्रीमूढमूर्खाणां नृणां चारित्रकाङ्क्षिणाम् ॥ अनुग्रहार्थं तत्त्वज्ञैः, सिद्धान्तः प्राकृतः स्मृतः ॥ दृष्टेष्टाविरुद्धश्चेति । उदाहरणं चात्र पेयापेयकौ यथावश्यके । ततश्च निःशङ्कितो जीव एवार्हच्छासनप्रतिपन्नो दर्शनाचरणात् । तत्प्राधान्यविवक्षया दर्शनाचार उच्यते । अनेन दर्शनदर्शनिनोरभेदमाह । तदेकान्तभेदे त्वदर्शनिन इव तत्फलाभावात् मोक्षाभाव इत्येवं शेषपदेष्वपि भावना कार्येति । तथा निःकाङ्क्षितो देशसर्वकाङ्क्षारहितः । तत्र देशकाङ्क्षा एकं दर्शनं काङ्क्षति दिगम्बरदर्शनादि । सर्वकाङ्क्षा तु सर्वाण्येवेति । नालोचयति षड्जीवनिकायपीडामसत्प्ररूपणां च । उदाहरणं चात्र राजामात्यौ यथावश्यक इति । विचिकित्सा मतिविभ्रमः । निर्गता विचिकित्सा मतिविभ्रमो यतोऽसौ निर्विचिकित्सः । साध्वेव जिनदर्शनं किंतु प्रवृत्तस्यापि सतो ममास्मात्फलं भविष्यति न भविष्यतीति । क्रियायाः कृषीवलादिषूभयोपलब्धेरिति विकल्परहितः । न ह्यविकलोपाय उपेयवस्तुपरिप्रापको न भवतीति संजातनिश्चयो निर्विचिकित्स उच्यते । एतावतांशेन निःशङ्किताद्भिन्नः । उदाहरणं चात्र विद्यासाधको यथावश्यक इति । यद्वा निर्विजुगुप्सः साधुजुगुप्सारहितः । उदाहरणं चात्र श्रावकदुहिता यथावश्यक एव । तथामूढदृष्टिश्च बालतपस्वितपोविद्यातिशयदर्शनैर्न मूढा स्वरूपान्न चलिता दृष्टिः सम्यग्दर्शनरूपा यस्यासावमूढदृष्टिः । अत्रोदाहरणं सुलसा साविया । जहा लोइयरिसी अंबडो रायगिहं गच्छंतो बहूणं भवियाणं थिरीकरणणिमित्तं सामिणा भणिउ । सुलसं पुच्छिज्जासि । अम्मडो चिंतेइ । पुण्णमतिया सुलसा जं अरहा पुच्छेइ । तउ अम्मडेण परिक्ख-

णाणिमित्तं सा भत्तं मग्गिया । ताए ण दिन्नं । तउ तेण बहूणि रूवाणि विउवियाणि। तह वि ण दिसं। ण य संमूढा। तह कुतिब्भियरिद्धीउ दहूण अमूढदिठिणा भवियवं। एतावान् गुणप्रधानो दर्शनाचारनिर्देशः। अधुना गुणप्रधाने उपबृंहणस्थिरीकरणे इति। उपबृंहणं च स्थिरीकरणं चोपबृंहणस्थिरीकरणे । तत्रोपबृंहणं नाम समानधर्मिकाणां सद्गुणप्रशंसनेन तद्वृद्धिकरणम् । स्थिरीकरणं तु धर्माद्विषीदतां सतां तत्रैव स्थापनम्। उवबूहणाए उदाहरणं । जहा रायगिहे नयरे सेणिउ राया । इउ य सक्को देवराया सम्मत्तं पसंसइ । इउ य एगो देवो असदहंतो नगरवाहिं सेणियस्स णिग्गयस्स चेल्ल-यरूवं काऊणं अणिमिसे गेण्हइ। ताहे तं निवारेइ। पुणरवि अन्नउ संजई गुविणी पुरउ ठिया। ताहे अपवरगे ठविऊण जहा ण कोई जाणइ तहा सूइगिहं कारवेइ। जं किं वि सूइकम्मं तं सयमेव करेइ । तउ सो देवो संजईरूवं परिच्चइऊण दिवं देवरूवं द-रिसेइ । भणइ य। भो सेणिय सुलद्धं ते जम्मजीवियस्स फलं। जेण ते पवयणस्सुवरिं ए-रिसी भत्ती भवइ त्ति उवबूहेऊण गउ। एवं उवबूहियवा साहम्मिया । थिरीकरणे उ-दाहरणं जहा। उज्जेणीए अज्जासाढो कालं करेंते संजए अप्पाहेइ। मम दरिसावं दिज्जा-ह। जहा उत्तरज्झयणे सुए तं अक्खाणयं सवं तहेव । तम्हा सो जहा अज्जासाढो थिरो कउ । एवं जे भविया ते थिरीकरेयवा। तथा वात्सल्यप्रभावना इति। वात्सल्यं च प्र-भावना च वात्सल्यप्रभावना तत्र वात्सल्यं समानधर्मिकप्रत्युपकारकरणम् । प्रभा-वना धर्मकथनादिभिस्तीर्थख्यापनेति । तत्र वात्सल्ये उदाहरणं अज्जवइरा । जहा तेहिं दुब्भिक्खे संघो निच्छारिउ। एयं सवं जहा आवस्सए तहा नेयं । पभावणाए उदाहरणं ते चेव अज्जवइरा । जहा तेहिं अग्गिसिहाउ सुहुमकाइयाइं आणेऊण सा-सणस्स उब्भावणा कया एवमक्खाणयं जहा आवस्सए तहा कहेयवं। एवं साहुणावि सव-पयत्तेण सासणं उब्भावेयवं । अष्टाविल्यष्टप्रकारो दर्शनाचारः । प्रकाराश्चोक्ता एव निःश-ङ्कितादयः । गुणप्रधानश्चायं निर्देशो गुणगुणिनोः कथंचिद्भेदख्यापनार्थः । एकान्ताभेदे तन्निवृत्तौ गुणिनोऽपि निवृत्तेः शून्यतापत्तिरिति गाथार्थः। स्वपरोपकारिणी प्रवचनप्रभा-वना तीर्थकरनामकर्मनिबन्धनं चेति। भेदेन प्रवचनप्रभावकानाह॥ अइसेसइढियायरि-य-वाइधम्मकहिखमगनेमित्ती ॥ विज्जारायगणसं—मया य तित्थं पभाविंति ॥ १८०॥ ॥ दारं ॥ व्याख्या ॥ अतिशयी अवध्यादिज्ञानयुक्तः । ऋद्धिग्रहणादामर्षौषध्यादि-ऋद्धिप्राप्तः । ऋद्धिप्रव्रजितो वा। आचार्यवादिधर्मकथिक्षपकनैमित्तिकाः प्रकटार्थाः। विद्याग्रहणाद्विद्यासिद्धः । आर्यखपुटवत् सिद्धमन्त्रः । रायगणसंमया राजसंमता म-न्त्र्यादयः । गणसंमता महत्तरादयः चशब्दाद्दानश्राद्धकादिपरिग्रहः । एते तीर्थं प्र-वचनं प्रभावयन्ति । स्वतःप्रकाशस्वभावमेव सहकारितया प्रकाशयन्तीति गाथार्थः

उक्तो दर्शनाचारः। सांप्रतं ज्ञानाचारमाह। काले विणए बहुमाणे, उवहाणे तहय अनिन्हवणे॥ वंजणअबतदुनए, अठविहो नाणमायारो॥ १७०॥ व्याख्या॥ काल इति। यो यस्याङ्गप्रविष्टादेः श्रुतस्य काल उक्तः। तस्य तस्मिन्नेव काले स्वाध्यायः कर्तव्यो नान्यदा तीर्थंकरवचनात्। दृष्टं च कृष्यादेरपि कालग्रहणे फलं विपर्यये च विपर्यय इति। अत्रोदाहरणम्। एक्को साहू पादोसियं कालं घेत्तूण अइक्कंताए वि पढमपोरिसीए अणुवउंगेण पढइ कालियं सुयं। सम्मद्दिठी देवया चिंतेइ। मा अन्ना पंतदेवया बलिबइ त्ति काउं तक्कं कुंडे घेत्तूणं तक्कं तक्कं ति तस्स पुरउ अभिक्खणं अभिक्खणं आगयागयाइं करेइ। तेण य चिरस्स सज्झायस्स वाघायं करेइ त्ति। भणिया य अयाणिए को इमो तक्कस्स विक्कणणकालो। वेलं ता पलोवेह। तीए वि भणियं। अहो को इमो कालियसुअस्य सज्झायकालो त्ति। तउ साहुणा णायं जहा ण एसा पागइब्भित्ति। उवउत्तो णाउं अद्धरत्ते दिसं मिच्छादुक्कडं। देवयाए भणियं। मा एवं करेज्जासि मा पंता छलेज्जा। तउ काले सज्झाइयव्वं ण उ अकाले त्ति। तथा श्रुतग्रहणं कुर्वता गुरोर्विनयः कार्यः। विनयोऽभ्युत्थानपादधावनादिः। अविनयगृहीतं हि तदफलं भवति। इत्थ उदाहरणं। सेणिउ राया भज्जाए भणइ। ममेगखंभं पासायं करेहि। एवं डुमपुष्फियज्झयणे वक्खाणियं। तम्हा विणएण अहिज्झियव्वं णो अविणएण। तथा श्रुतग्रहणोद्यतेन गुरोर्बहुमानः कार्यः। बहुमानो नामान्तरो भावप्रतिबन्धः। एतस्मिन् सत्यक्षेपेणाधिकफलं श्रुतं भवति। विणयबहुमाणेसु चउभंगी। एगस्स विणउ ण बहुमाणो। अवरस्स बहुमाणो ण विणउ। अन्नस्स विणउ वि बहुमाणो वि। अन्नस्स ण विणउ ण बहुमाणो। इत्थ दोण्ह वि विसेसोपदंसणत्थं इमं उदाहरणं। एगंमि गिरिकंदरे सिवो। तं च बंभणो पुलिंदो य अच्चंति। बंभणो उवलेवणसम्मज्जणोवरिसेयपयउ सुईभूउ अच्चित्ता थुणइ विणयजुत्तो। ण पुण बहुमाणेण। पुलिंदो पुण तंमि सिवे भावपडिबद्धो गल्लोदएण ण्हावेइ। ण्हविऊण उवविठो सिवो य तेण समं आलावसंकहाहिं अच्छइ। अन्नया य तेसिं बंभणेणं उल्लावसद्दो सुउ। तेण पडियरिऊण उवलद्धो। तुमं एरिसो चेव कडपूयणसिवो। जो एरिसेण उच्छिठएण समं मंतेसि। तउ सिवो भणइ। एसो मे बहु माणेइ। तुमं पुणो ण तहा। अन्नया य अच्छीणि उक्खणिऊण अच्छइ सिवो। बंभणो य आगंतु रडियमुवसंतो। पुलिंदो य आगउ। सिवस्स अच्छिं ण पेच्छइ। तउ अप्पणयं अच्छिं कंरुफलेण उक्खणित्ता सिवस्स लाएइ। तउ सिवेण बंभणो पत्तियाविउ। एवं णाणमंतेसु विणउ बहुमाणो य दो वि कायव्वाणि। तथा श्रुतग्रहणमभीप्सतोपधानं कार्यम्। उपदधातीत्युपधानं तपः। तद्धि यद्यत्राध्ययने आगाढादियोगलक्षणमुक्तं तत्तत्र कार्यम्।

तत्पूर्वकश्रुतग्रहणस्यैव सफलत्वात्। अत्रोदाहरणम्। एगे आयरिया। ते वायणाए संता परितंता सज्झाए वि असज्झाइयं घोसेउमारद्धा। णाणंतरायं बंधिऊण कालं काऊण देवलोगं गया। तउ देवलोगाउ आउक्खएण चुया। अहीरकुले पच्चायाया नोगे नुंजंति। अन्नया य से धूया जाया। सा य अईव रूवस्सिणी। ताणि य पच्चंतयाणि गोचारणणिमित्तं अन्नह वच्चंति। तीए दारियाए पिउणो सगडं सव्वसगडाणं पुरउ गच्छइ। सा य दारिया तस्स सगडस्स धुरतुंडे ठिया गच्छइ। तरुणइत्तेहिं चिंतियं। समाइं काउं सगडाइं दारियं पेच्छामो। तेहिं सगडाउ उप्पहेहिं खेडिया। विसमे आवडिया समाणा नग्गा। तउ लोएण तीए दारियाए णामं कयं असगडत्ति। ताए दारियाए असगडाए पिया असगडपियत्ति। तउ तस्स तं चेव वेरग्गं जायं। तं दारियं एगस्स दाऊण पव्वइउ। जाव चाउरंगिज्जं ताव पढिउ। असंखए उद्दिट्ठे तं णाणावरणिज्जं से कम्मं उदिण्णं। पढंतस्स वि किं वि ण ठाइ। आयरिया नणंति। छट्ठेणं ते अणुण्णवइ त्ति। तउ सो नणइ एयस्स केरिसो जोउ। आयरिया नणंति जाव ण ठाइ ताव आयंबिलं कायव्वं। तउ सो नणइ तो एवं चेव पढामि। तेण तहा पढंतेण बारसरूवाणि बारससंवच्छरेहिं अहियाणि। ताव से आयंबिलं कयं। तउ णाणावरणं कम्मं खीणं। एवं जहा सगडपियाए आगाढजोगो अणुपालिउ। तहा सम्मं अणुपालियव्वं। उवहाणेत्ति गयं। तथा अनिण्हवणित्ति। गृहीतश्रुतेनानिह्नवः कार्यः। यद्यस्य सकाशेऽधीतं तत्र स एव कथनीयो नान्यश्चित्तकालुष्यापत्तेरिति। अत्र दृष्टान्तः। एगस्स ण्हावियस्स छुरघरं विज्जासामत्थेण आगासे अच्छइ। तं च एगो परिव्वायगो बहूहिं उवसंपज्जणाहिं उवसंपज्जिऊण तेण सा विज्जा लद्धा। ताहे अन्नत्थ गंतुं तिदंडेण आगासगएण महाजणेण पूइज्जइ त्ति। रण्णा य पुच्छिउ। नयवं किमेस विज्जाइसयो उय तवाइसउ त्ति। सो नणइ विज्जाइसउ। कस्स सगासाउ गहिउ। सो नणइ हिमवंते फलाहारस्स रिसिणो सगासे अहिज्जिउ। एवं तु वुत्ते समाणे संकिलेसदुट्ठयाए तं तिदंडं खडत्ति पडियं। एवं जो अप्पागमं आयरियं निण्हवेऊण अन्नं कहेहि। तस्स चित्तसंकिलेसदोसेणं सा विज्जा परलोए ण हवइ त्ति। अनिण्हवणित्ति गयं। तथा व्यञ्जनार्थतदुनयान्याश्रित्य नेदो न कार्य इति वाक्यशेषः। एतडुक्तं नवति। श्रुतप्रवृत्तेन तत्फलमनीप्सता व्यञ्जननेदोऽर्थनेद उनयनेदश्च न कार्य इति। तत्र व्यञ्जननेदो यथा। धम्मो मंगलमुक्किट्ठमिति वक्तव्ये पुण्णं कल्लाणमुक्कोसमिति। अर्थनेदस्तु यथा यावंतीकेयावंती लोगंसि विप्परामुसंतीत्यत्राचारसूत्रे यावन्तः केचन लोकेऽस्मिन् पाखण्डिलोके विपरामृशन्तीत्येवंविधार्थानिधाने अवंतिजनपदे केया रज्जुर्वाता पतिता। लोकः परानृशति कूप इत्याह। उनयनेदस्तु द्वयोरपि याथात्म्योपमर्देन यथा धर्मो

मङ्गलमुत्कृष्टः अहिंसापर्वतमस्तक इत्यादि । दोषश्चात्र व्यञ्जनभेदेऽर्थभेदस्तद्भेदे क्रियाया भेदस्तद्भेदे मोक्षाभावस्तदभावे च निरर्थिका दीक्षेति । उदाहरणं चात्राधीयताम् कुमार इति सर्वत्र योजनीयम् । क्षुण्णत्वादनुयोगद्वारेषु चोक्तत्वान्नेह दर्शितमिति । अष्टविधोऽष्टप्रकारः कालादिभेदद्वारेण ज्ञानाचारो ज्ञानासेवनाप्रकार इति गाथार्थः । उक्तो ज्ञानाचारः सांप्रतं चारित्राचारमाह ॥ पणिहाणजोगजुत्तो, पंचहिं समिईहिं तिहि य गुत्तीहिं ॥ एस चरित्तायारो, अठविहो होइ नायव्वो ॥ १९१ ॥ व्याख्या ॥ प्रणिधानं चेतःस्वास्थ्यं तत्प्रधाना योगा व्यापारास्तैर्युक्तः समन्वितः प्रणिधानयोगयुक्तः । अयं चौघतोऽविरतसम्यग्दृष्टिरपि भवत्यत आह । पञ्चभिः समितिभिस्तिसृभिश्च गुप्तिभिर्यः प्रणिधानयोगयुक्तः । एतद्योगयुक्त एतद्योगवानेव । अथवा पञ्चसु समितिषु तिसृषु गुप्तिष्वस्मिन्विषये एता आश्रित्य प्रणिधानयोगयुक्तो य एष चारित्राचारः । आचाराचारवतोः कथंचिदव्यतिरेकादष्टविधो भवति ज्ञातव्यः समितिगुप्तिभेदात् । समितिगुप्तिरूपं च शुभप्रवीचाराप्रवीचाररूपं यथा प्रतिक्रमणे इति गाथार्थः । उक्तश्चारित्राचारः सांप्रतं तपआचारमाह । बारसविहंमि वि तवे, सब्भिंतरबाहिरे कुसलदिठे ॥ अगिलाइ अणाजीवी नायव्वो सो तवायारो ॥ १९२ ॥ दारं ॥ व्याख्या ॥ द्वादशविधेऽपि तपसि प्रथमाध्ययनोक्तस्वरूपे साभ्यन्तरबाह्येऽनशनादिप्रायश्चित्तादिलक्षणे कुशलदृष्टे तीर्थकरोपलब्धे अग्लान्या न राजवेष्टिकल्पेन यथाशक्ति वा अनाजीविको निःस्पृहः फलान्तरमधिकृत्य यो ज्ञातव्योऽसौ तपआचारः । आचारतद्वतोरभेदादिति गाथार्थः। उक्तस्तपआचारः । अधुना वीर्याचारमाह ॥ अणिगूहियबलविरियो, परिक्कमइ जो जहुत्तमाउत्तो ॥ जुंजइ अ जहाथामं, नायव्वो वीरियायारो ॥ १९३ ॥ दारं ॥ व्याख्या ॥ अनिगूहितबलवीर्यः अनिह्नुतबाह्याभ्यन्तरसामर्थ्यः सन् पराक्रमते चेष्टते यो यथोक्तं षट्त्रिंशल्लक्षणमाचारमाश्रित्येति वाक्यशेषः । षट्त्रिंशद्विधत्वं चाचारस्य दर्शनज्ञानचारित्राणामष्टविधत्वात्तपआचारस्य च द्वादशविधत्वाच्चेति । उपयुक्त इत्यनन्यचित्तः पराक्रमते ग्रहणकाले तत ऊर्ध्वं युनक्ति च योजयति च प्रवर्तयति च यथोक्तं षट्त्रिंशल्लक्षणमाचारमिति सामर्थ्याद्गम्यते यथास्थानं यथासामर्थ्यं यो ज्ञातव्योऽसौ वीर्याचारः।आचाराचारवतोः कथंचिदव्यतिरेकादिति गाथार्थः।अभिहितोवीर्याचारः।तदभिधानाच्चाचार इति।सांप्रतं कथामाह ॥ अठकहा कामकहा, धम्मकहाचेव मीसिया य कहा ॥ एत्तो एक्केका वि य, णेगविहा होइ नायव्वा ॥१९४॥ दारं ॥ व्याख्या॥ अर्थकथेति विद्यादिरर्थस्तत्प्रधाना कथार्थकथा। एवं कामकथा धर्मकथा चैव मिश्रा च कथा । अत आसां कथानां चैकैकापि च कथा अनेकविधा भवति ज्ञातव्येत्युपन्य-

त्तगाथार्थः । अधुनार्थकथामाह ॥ विद्यासिप्पमुवाउं, अणिवेउ संचउ य दक्खत्तं ॥ सामं दंमो भेउं, उवप्पयाणं च अबकहा ॥ १९५ ॥ दारं ॥ व्याख्या ॥ विद्या शिल्प-मुपायोऽनिर्वेदः संचयश्च दक्षत्वं साम दण्डो भेद उपप्रदानं चार्थकथा । अर्थप्रधान-त्वादित्यक्षरार्थः । भावार्थस्तु वृद्धविवरणादवसेयः । तच्चेदम् । विद्यं पडुच्चअबकहा । जो विद्याए अबं उवद्यिणति । जहा एगेण विज्जा साहिया । सा तस्स पंचयं पइप्पभायं देइ । जहा वा सवइस्स विद्याहरचक्कवट्टिस्स विद्यापभावेण भोगा उवणया । सवइस्स उप्पत्ती जहा य सट्टकुले वड्ढितो । जहा य महेसरो नामं कयं । एवं निरवसेसं ज-हावस्सए जोगसंगहेसु तहा भाणियवं । विद्य त्ति गयं । इयाणिं सिप्पेत्ति । सिप्पेणअबो उवज्जिणइ त्ति । एब उदाहरणं कोक्कासो जहावस्सए । सिप्पेत्ति गयं । इयाणिं उवा-ए त्ति । एब दिठंतो चाणक्को । जहा चाणक्केण बहुविहेहिं अबो उवज्जिउ । कहं । दो मञ्च धाउरत्ताउं० । एयं पि अक्खाणयं जहावस्सए तहा भाणियवं । उवाए त्ति गयं । इयाणिं अणिवेए संचए य एक्कमेव उदाहरणं मम्मणवाणिउ । सो वि जहावस्सए तहा भाणियवो । सांप्रतं दक्षत्वं तत्प्रसङ्गमाह ॥ सबाहसुउं दक्ख-त्तणेणुसेठीसुउ य रूवे-ण ॥ बुद्धीए अमच्चसुउ, जीवइ पुन्नेहिं रायसुउं ॥ १९६ ॥ दारं ॥ दक्खत्तणयं पुरिस-स्स पंचगं सइगमाहु सुंदेरं ॥ बुद्धी पुण साहस्सा, सयसाहस्साइं पुन्नाइं ॥ १९७ ॥ व्याख्या ॥ दक्षत्वं पुरुषस्य सार्थवाहसुतस्य पञ्चकमिति पञ्चरूपकफलम् । शतिकं शतफलमाह सौन्दर्यं श्रेष्ठिपुत्रस्य । बुद्धिः पुनः सहस्रवती सहस्रफला मन्त्रिपुत्रस्य । शतसहस्राणि पुण्यानि शतसहस्रफलानि राजपुत्रस्येति गाथार्थः । भावार्थस्तु क-थानकादवसेयः । तच्चेदम् । जहा बंभदत्तो कुमारो कुमारामच्चपुत्तो सेठिपुत्तो सब-वाहपुत्तो । एए चउरो वि परोप्परं उल्लावेइ । जहा को भे केण जीवइ । तब रायपुत्तेण उत्तं अहं पुन्नेहिं जीवामि । कुमारामच्चपुत्तेण भणियं अहं बुद्धीए । सेठिपुत्तेण भणियं अहं रूवस्सित्तणेण । सबवाहपुत्तो भणइ अहं दक्खत्तणेण । ते भणंति । असब गंतु विसाहेमो । ते गया असं णयरं जब ण णज्जंति । उद्याणे अ वासिया । दक्खस्स आदेसो दिन्नो सिग्घं भत्तपरिवयं आणेहि । सो वीहिं गंतु एगस्स थेरवा-णिययस्स आवणे ठिउ । तस्स बहुगा कइया एंति । तद्दिवसं कोवि ऊसवो सो ण पहु-प्पत्ति पुडए बंधेउं । तउ सबवाहपुत्तो दक्खत्तणेण जस्स जं उवउज्जइ लवणतेल्लघय-गुडसुंठिमिरिय एवमादि तस्स तं देइ । अइविसिठो लाहो लद्धो । तुठो भणइ । तु-म्हेब आगंतुया उदाहु वबवया । सो भणइ आगंतुया । तो अम्ह गिहे असणपरिग्गहं करेजह । सो भणइ असे मम सहाया उद्याणे अबंति । तेहिं विणा नाहं भुंजामि । तेण भणियं सबे वि एंतु । आगया । तेण तेसिं भत्तसमालहणतंबोलाइ उवउत्तं । तं पंचण्हं

रूवयाणं । बिइयदिवसे रूवस्सी वणियपुत्तो वुत्तो । अद्य तुमे दायवो नत्तपरिवर्ठ । एवं नवउ त्ति । सो उठेऊण गणियापाडगं गउ अप्पयं मंडेउं । तन्न य देवदत्ता नाम गणिया पुरिसवेसिणी बहूहिं रायपुत्तसेठिपुत्तादीहिं मग्गिया । णेब्छइ । तस्स य तं रूवसमुदयं दहूण खुन्निया । पडिदासियाए गंतूण तीए माऊए कहियं । जहा दारिया सुंदरजुवाणे दिहिं देइ । तउ सा नणइ । नण एयं । नण मम गिहमणुवरोहेण एघह । इहेव नत्तवेलं करेघह । तहेवागया । सइउ दववउ कउ । तइयदिवसे बुद्धिमंतो अमच्चपुत्तो संदिहो । अद्य तुमे नत्तपरिवर्ठ दायवो । एयं हवउ त्ति । सो गउ करणसालं । तन्न य तइउ दिवसो ववहारस्स छिज्जंतस्स परिछेअं न गन्नइ । दो सवत्तीउ । तासिं नत्ता उवरउ । एक्काए पुत्तो अत्थि इयरी अपुत्ता य । सा तं दारयं णेहेण उवचरइ । नणइ य मम पुत्तो । पुत्तमाया नणइ य मम पुत्तो तासिं ण परिछिघइ । तेण नणियं अहं छिंदामि ववहारं । दारउ डुहा कघउ दवं पि डुहा एव । पुत्तमाया नणइ । ण मे दवेण कघं दारगो वि तीए नवउ जीवंतं पासिहामि पुत्तं । इयरी तुसिणीया अन्नइ । ताहे पुत्तमायाए दिण्णो । तहेव सहस्सं उवउगो । चउन्ने दिवसे रायपुत्तो नणिउ । अद्य रायपुत्त तुम्हेहिं पुसाहिएहिं जोगवहणं वहियवं । एवं नवउ त्ति । तउ रायपुत्तो तेसिं अंतियाउ णिग्गंतु उद्याणे ठिउ । तंमि य णयरे अपुत्तो राया मउ । आसो अहिवासिउ जंमि रुक्खछायाए रायपुत्तो णिवण्णो सा ण जयत्तति । तउ आसेण तस्सोवरि ठाइऊण हिंसितं । राया य अन्निसित्तो । अणेगाणि सयसहस्साणि जायाणि । एवं अत्थुप्पत्ती नवइ । दक्खत्तणं ति दारं गयं । इयाणिं सामन्नेयदंरुवप्पयाणेहिं चउहिं जहा अत्थो विढप्पत्ति । एत्थिमं उदाहरणं । सियालेण नमंतेण हत्थी मउ दिठो । सो चिंतेइ लद्धो मए उवाएण ताव णिठएण खाइयवो । जाव सीहो आगउ । तेण चिंतियं सचिठेण ठाइयवं । एयस्स सीहेण नणियं । किं अरे नाइणघ अत्थिघइ । सियालेण नणियं आमंति माम । सीहो नणइ किमेयं मयं ति । सियालो नणइ । हत्थी । केण मारिउ । वग्घेण । सीहो चिंतेइ । कहमहं ऊणजातिएण मारियं नक्खामि । गउ सीहो । णवरं वग्घो आगउ । तस्स कहियं सीहेण मारिउ । सो पाणियं पाउं णिग्गउ । वग्घो णठो । एस नेउ । जाव काउ आगउ । तेण चिंतियं जइ एयस्स ण देमि तउ काउकाउ त्ति वासियसद्देणं अत्ते कागा एहिंति । तेसिं कागरडणसद्देणं सियालादि अत्ते बहवे एहिंति । कित्तिया वारेहामि । अउ एयस्स उवप्पयाणं देमि तेण तउ तस्स खंडं छित्ता दिण्णं । सो तं घेत्तूण गउ । जाव सियालो आगउ । तेण णायमेयस्स हठेण वारणं करेमि । निउडिं काऊण वेगो दिण्णो । णठो सियालो । उक्तं च ॥ "उत्तमं प्रणि-

पातेन शूरं भेदेन योजयेत् ॥ नीचमल्पप्रदानेन समं तुल्यपराक्रमैः ॥१॥" इत्युक्तः कथागाथाया भावार्थः। उक्तार्थकथा सांप्रतं कामकथामाह॥ रूवं वउ वेसो, दरकत्तं सिक्खियं च विसएसु ॥ दिठं सुयमणुभूयं, च संथवो चेव कामकहा ॥ १९७ ॥ ॥ व्याख्या ॥ रूपं सुन्दरं वयश्चोदग्रं वेष उज्ज्वलः। दाक्षिण्यं मार्दवम्। शिक्षितं विषयेषु शिक्षा च कलासु। दृष्टमद्भुतदर्शनमाश्रित्य। श्रुतं चानुभूतं च संस्तवश्च परिचयश्चेति कामकथा। रूपे च वसुदेवादय उदाहरणम्।वयसि सर्वे एव प्रायः कमनीयो भवति लावण्यात्।उक्तं च॥यौवनमुदग्रकाले, विदधाति विरूपकेषु लावण्यम्। दर्शयति पाकसमये, निम्बफलस्यापि माधुर्यम्। इति। वेष उज्ज्वलः कामाङ्गम्।यं कंचन उज्ज्वलवेषं पुरुषं दृष्ट्वा स्त्री कामयते इति वचनात्।एवं दाक्षिण्यमपि।"पञ्चालः स्त्रीषु मार्दवम्" इति वचनात्। शिक्षा च कलासु कामाङ्गं वैदग्ध्यात्। उक्तं च ॥ " कलानां ग्रहणादेव सौभाग्यमुपजायाते ॥ देशकालौ त्वपेक्ष्यासां, प्रयोगः संभवेन्न वा ॥" अन्ये त्वत्राचलमूलदेवौ देवदत्तां प्रतीत्येक्षुयाचनायां प्रभूतासंस्कृतस्तोकसंस्कृतप्रदानद्वारेणोदाहरणमभिदधति। दृष्टमधिकृत्य कामकथा यथा। नारदेन रुक्मिणीरूपं दृष्ट्वा वासुदेवे कृता। श्रुतं त्वधिकृत्य यथा पद्मनाभेन राज्ञा नारदाद्द्रौपदीरूपमाकर्ण्य पूर्वसंस्तुतदेवेभ्यः कथिता। अनुभूतं चाधिकृत्य कामकथा यथा तरङ्गवत्या निजानुभवकथने। संस्तवश्च कामकथापरिचयः कारणानीति कामसूत्रपाठात्। अन्ये त्वभिदधति। सइदंसणाउ पेम्मं, पेमाउ रई रईय विस्संभो ॥ विस्संभाउ पणउ, पंचविहं वट्ठए पेम्मं ॥ इति गाथार्थः। उक्ता कामकथा। धर्मकथामाह॥ धम्मकहा बोहवा, चउविहा धीरपुरिसपन्नत्ता ॥ अरकेवणि विरकेवणि, संवेगे चेव निव्वेए ॥ १९९ ॥ व्याख्या ॥ धर्मविषया कथा धर्मकथा। असौ बोद्धव्या चतुर्विधा धीरपुरुषप्रज्ञप्ता। तीर्थकरगणधरप्ररूपितेत्यर्थः। चातुर्विध्यमेवाह। आक्षेपणी विक्षेपणी संवेगश्चैव निर्वेद इति। सूचनात्सूत्रमिति न्यायात्संवेजनी निर्वेदनी चैवेत्युपन्यासगाथाक्षरार्थः। भावार्थं त्वाह ॥ आयारे ववहारे, पन्नत्ती चेव दिठिवाए य ॥ एसा चउविहा खलु, कहा उ अरकेवणी होइ ॥ २०० ॥ व्याख्या ॥ आचारो लोचास्नानादिः। व्यवहारः कथंचिदापन्नदोषव्यपोहाय प्रायश्चित्तलक्षणः। प्रज्ञप्तिश्चैव संशयापन्नस्य मधुरवचनैः प्रज्ञापना। दृष्टिवादश्च श्रोत्रपेक्षया सूक्ष्मजीवादिभावकथनम्। अन्ये त्वभिदधत्याचारादयो ग्रन्था एव परिगृह्यन्ते आचाराद्यभिधानादिति। एषानन्तरोदिता चतुर्धा। खलुशब्दो विशेषणार्थः। श्रोत्रपेक्षयाचारादिभेदानाश्रित्यानेकप्रकारेति।कथा त्वाक्षेपणी भवति। तुरेवकारार्थः। कथैव प्रज्ञापकेनोच्यमाना नान्येन। आक्षिप्यन्ते मोहात्तत्त्वं प्रत्यनया भव्यप्राणिन

इत्याक्षेपणी जवतीति गाथाक्षरार्थः। इदानीमस्या रसमाह॥ विद्या चरणं च तवो, पुरिसकारो य समिइगुत्तीउ॥ उवइस्सइ खलु जहियं, कहाइ अक्खेवणीइ रसो॥ ॥ २०१ ॥ व्याख्या ॥ विद्या ज्ञानम् अत्यन्तापकारिजावतमोजेदकम्। चरणं चारित्रं समग्रविरतिरूपम्। तपोऽनशनादि। पुरुषकारश्च कर्मशत्रून्प्रति स्ववीर्योत्कर्षलक्षणः। समितिगुप्तयः पूर्वोक्ता एव। एतडुपदिश्यते खलु श्रोतृजावापेक्षया सामीप्येन कथ्यते। एवं यत्र क्वचिदसावुपदेशः कथाया आक्षेपण्या रसो निष्यन्दः सार इति गाथार्थः। गताक्षेपणी। विक्षेपणीमाह॥ कहिऊण ससमयं तो, कहेइ परसमयमह वि वच्चासा॥ मिच्छासम्मावाए, एमेव हवंति दो जेया॥ २०२॥ व्याख्या॥ कथयित्वा स्वसमयं स्वसिद्धान्तं ततः कथयति परसमयं परसिद्धान्तमित्येको जेदः। अथवा विपर्यासाद्व्यत्ययेन कथयति। परसमयं कथयित्वा स्वसमयमिति द्वितीयः। मिथ्यासम्यग्वादयोरेवमेव जवतो द्वौ जेदाविति। मिथ्यावादं कथयित्वा सम्यग्वादं कथयति सम्यग्वादं कथयित्वा मिथ्यावादमिति। एवं विक्षिप्यतेऽनया सन्मार्गात्कुमार्गे कुमार्गात्सन्मार्गे श्रोतेति विक्षेपणीति गाथाक्षरार्थः। जावार्थस्तु वृद्धविवरणादवसेयः। तच्चेदम्। विक्खेवणी सा चउव्विहा पन्नत्ता। तं जहा। ससमयं कहित्ता परसमयं कहेइ परसमयं कहेत्ता ससमयं कहेइ मिच्छावादं कहेत्ता सम्मावादं कहेइ। सम्मावादं कहेत्ता मिच्छावायं कहेइ। तच्छ पुव्विं ससमयं कहित्ता परसमयं कहेइ। ससमयगुणे दीवेइ। परसमयदोसे उवदंसेइ। एसा पढमा विक्खेवणी गया। इयाणिं बिइया जणइ। पुव्विं परसमयं कहेत्ता तस्सेव दोसे उवदंसेइ। पुणो ससमयं कहेइ। गुणे य से उवदंसेइ। एसा बिइया विक्खेवणी गया। इयाणिं तइया। परसमयं कहेत्ता। तेसु चेव परसमएसु जे जावा जिणप्पणीएहिं जावेहिं सह विरुद्धा असंता चेव वियप्पिया ते पुव्विं कहित्ता दोसा तेसिं जाविऊण पुणो जे जिणप्पणीयजावसरिसा घुणक्खरमिव कहवि सोजणा जणिया। ते कहयइ। अहवा मिच्छावादो णच्छित्तं जणइ। सम्मावादो अच्छित्तं। तच्छ पुव्विं णाहियवाईणं दिठीउ कहित्ता। पच्छा अच्छित्तपक्खवाईणं दिठीउ कहेइ। एसा तइया विक्खेवणी गया। इयाणिं चउत्थी विक्खेवणी। सा वि एवं चेव। णवरं पुव्विं सोजणे कहयइ। पच्छा इयरे त्ति। एवं विक्खिवति सोयारं ति गाथाजावार्थः। सांप्रतमधिकृतकथामेव प्रकारान्तरेणाह॥ जा ससमयवज्जा खलु, होइ कहा लोगवेयसंजुत्ता॥ परसमयाणं च कहा, एसा विक्खेवणी नाम॥ २०३॥ व्याख्या॥ यास्वसमयवर्जा। खलुशब्दस्य विशेषणार्थत्वादत्यन्तं प्रसिद्धनीत्या स्वसिद्धान्तशून्या। अन्यथा विधिप्रतिषेधद्वारा विश्वव्यापकत्वात् स्वसमयस्य तद्वर्जा कथैव नास्ति। जवति कथा लोकवेदसंयुक्ता। लोक-

ग्रहणाद्रामायणादिपरिग्रहः । वेदास्तु ऋग्वेदादय एव । एतदुक्ता कथेत्यर्थः । पर-समयानां च सांख्यशाक्यादिसिद्धान्तानां कथा या सा सामान्यतो दोषदर्शनद्वारेण एषा विक्षेपणी नाम । विक्षिप्यतेऽनया सन्मार्गात्कुमार्गे कुमार्गात्सन्मार्गे श्रोतेति वि-क्षेपणी । तथाहि सामान्यत एव रामायणादिकथायामिदमपि तत्त्वमिति नवति सन्मार्गाभिमुखस्य ऋजुमतेः कुमार्गप्रवृत्तिः । दोषदर्शनद्वारेणाप्येकेन्द्रियप्रायस्याहो मत्सरिण एत इति मिथ्यालोचनेनेति गाथार्थः । अस्या अकथने प्राप्ते विधिमाह । जा ससमएण पुव्विं, अक्खाया तं बुनेद्य परसमए ॥ परसासणवक्खेवा, परस्स समयं परिकहेहि ॥ २०४ ॥ दारं ॥ व्याख्या ॥ या स्वसमयेन स्वसिद्धान्तेन करणनूतेन पूर्व-माख्याता आदौ कथिता तां क्षिपेत्परसमये क्वचिद्दोषदर्शनद्वारेण यथास्माकमहिंसा-दिलक्षणो धर्मः सांख्यादीनामप्येवम् ॥ हिंसा नाम नवेद्धर्मो न नूतो न नविष्यति ॥ इत्यादिवचनप्रामाण्यात्किंत्वसावपरिणामिन्यात्मनि न युज्यते । एकान्तनित्यानित्ययो-र्हिंसाया अनावादिति । अथवा परशासनव्याक्षेपात् 'सुपां सुपो नवन्ति' इति । सप्त-म्यर्थे पञ्चमी । परशासनेन कथ्यमानेन व्याक्षेपे सन्मार्गाभिमुखतायां सत्यां परस्य समयं कथयति । दोषदर्शनद्वारेण केवलमपीति गाथार्थः । उक्ता विक्षेपणी अधुना संवे-जनीमाह ॥ आयपरसरीरगया, इहलोए चेव तहय परलोए ॥ एसा चउव्विहा खलु, कहा उ संवेयणी होइ ॥ २०५ ॥ व्याख्या ॥ आत्मपरशरीरविषया इह लोके चैव तथा परलोके । इहलोकविषया परलोकविषया च । एषा चतुर्विधा खलु अनन्तरोक्तेन प्रकारेण कथा तु संवेजनी नवति । संवेज्यते संवेगं ग्राह्यतेऽनया श्रोतेति संवेजनी । एषोऽधि-कृतगाथाक्षरार्थः । नावार्थस्तु वृद्धविवरणादवसेयः । तच्चेदम् । संवेयणी कहा चउव्विहा । तं जहा । आयसरीरसंवेयणी परसरीरसंवेयणी इहलोयसंवेयणी परलो-यसंवेयणी । तत्र आयरीरसंवेयणी जहा जमेयं अम्हच्चयं सरीरयं । एवं सुक्कसोणि-यमंसवसामेदमज्जछिण्हारुचम्मकेसरोमणहदंतअंतादिसंघायणिप्फसत्तणेण मुत्तपुरी-सनायणत्तणेण य असुइ त्ति कहेमाणो सोयारस्स संवेगं उप्पाएइ । एसा आय-सरीरसंवेयणी । एवं परसरीरसंवेयणी वि । परसरीरं एरिसं चेव असुई । अहवा पर-स्स सरीरं वखेमाणो सोयारस्स संवेगमुप्पाएइ । परसरीरसंवेयणी गया । इयाणिं इहलोयसंवेयणी । जहा सव्वमेयं माणुसत्तणं असारमधुवं कदलीथंनसमाणं । एरिसं कहं कहेमाणो धम्मकही सोयारस्स संवेगमुप्पाएइ । एसा इहलोयसंवेयणी गया । इयाणिं परलोयसंवेयणी । जहा देवा वि इस्साविसायमयकोहलोहाइएहिं डुक्केहिं अनिनूया किमंग पुण तिरियनारया । एयारिसं कहं कहेमाणो धम्मकही सोयारस्स संवेगमुप्पाएइ । एसा परलोयसंवेयणी गय त्ति गाथानावार्थः । सांप्रतं शुनकर्मोदया-

शुभकर्मक्षयफलकथनतः संवेजनीरसमाह ॥ वीरियविउव्वणिड्ढी, नाणचरणदंसणाण तह इड्ढी ॥ उवइस्सइ खलु जहियं, कहाइ संवेयणीइ रसो ॥२०६॥ व्याख्या ॥ वीर्यवैक्रियर्द्धिस्तपःसामर्थ्योद्भवा आकाशगमनजङ्घाचारणादिवीर्यवैक्रियनिर्माणलक्षणा । ज्ञानचरणदर्शनानां तथर्द्धिः । तत्र ज्ञानर्द्धिः "पभू णं भंते चोद्दसपुव्वी घडाउ घडसहस्सं पडाउ पडसहस्सं विउव्वित्तए। हंता पहू विउव्वित्तए। तहा॥ "जं अन्नाणी कम्मं,खवेइ बहुयाहिं वासकोडीहिं ॥ तं णाणी तिहिं गुत्तो, खवेइ ऊसासमत्तेणं॥" इत्यादि। तथा चरणर्द्धिः। नास्त्यसाध्यं नाम चरणस्य तद्वन्तो हि देवैरपि पूज्यन्त इत्यादि। दर्शनर्द्धिः प्रशमादिरूपा। तथा "सम्मद्दिट्ठी जीवो,विमाणवज्जं ण वंधए आउं॥जइ वि ण सम्मत्तजढो, अहव ण बद्धाउउ पुव्विं" इत्यादि। उपदिश्यते कथ्यते खलु यत्र प्रक्रमे कथायाः संवेजन्या रसो निष्यन्द एष इति गाथार्थः । उक्ता संवेजनी निर्वेदनीमाह ॥ पावाणं कम्माणं, असुभविवागो कहिज्जए जत्थ॥ इह य परत्थ य लोए, कहा उ णिव्वेयणी नाम ॥ २०७ ॥ व्याख्या ॥ पापानां कर्मणां चौर्यादिकृतानामशुभविपाकः दारुणपरिणामः कथ्यते यत्र यस्यां कथायामिह च परत्र च लोके इहलोके कृतानि कर्माणि इहलोक एवोदीर्यन्ते । इत्यनेन चतुर्भङ्गिकामाह । कथा तु निर्वेदनी नाम निर्वेद्यते भवादनया श्रोतेति निर्वेदनी एष गाथाक्षरार्थः । भावार्थस्तु वृद्धविवरणादवसेयः । तच्चेदम्। "इयाणिं निव्वेयणी। सा चउव्विहा। तं जहा इह लोए दुच्चिण्णा कम्मा इह लोए चेव दुहविवागसंजुत्ता भवंति त्ति । जहा चोराणं पारदारियाणं एवमाइ । एसा पढमा निव्वेयणी। इयाणिं बिइया। इह लोए दुच्चिण्णा कम्मा परलोए दुहविवागसंजुत्ता भवंति । कहं। जहा नेरइयाणं अन्नम्मि भवे कयंकम्मं निरयभवे फलं देइ । बिइया निव्वेयणी गया। इयाणिं तइया । परलोए दुच्चिण्णा कम्मा इह लोए दुहविवागसंजुत्ता भवंति । कहं। जहा बालप्पभितिमेव। अंतकुलेसु उप्पन्ना खयकोढादीहिं दारिद्देण य अभिभूया संति। एसा तइया णिव्वेयणी। इयाणिं चउत्था णिव्वेयणी। परलोए दुच्चिण्णा कम्मा परलोए चेव दुहविवागसंजुत्ता भवंति । कहं जहा पुव्विं दुच्चिण्णेहिं कम्मेहिं जीवा संडासतुंडेहिं पक्खीहिं उववज्जन्ति । तउ ते णरयपाउग्गाणि कम्माणि असंपुण्णाणि ताणि ताए जातीए पूरिंति। पूरिऊण नरयभवे वेदंति । एसा चउत्था निव्वेयणी गया। एवं इहलोगो परलोगो वा पन्नवयं पडुच्च भवइ। तत्थ पन्नवयस्स मणुस्सभवो इह लोगो। अवसेसाउ तिन्नि वि गईउ परलोगो त्ति गाथाभावार्थः। इदानीमस्या एव रसमाह ॥ थोवं पि पमायकयं, कम्मं साहिज्जई जहिं नियमा ॥ पउरासुहपरिणामं, कहाइ निव्वेयणीइ रसो ॥ २०८ ॥ व्याख्या ॥ स्तोकमपि प्रमादकृतमल्पमपि प्रमादजनितं कर्म वेदनीयादि साहिज्जइ त्ति कथ्यते। यत्र नियमान्नियमेन। किंविशिष्टमित्याह । प्रभूताशुभप-

रिणामं बहुतीव्रफलमित्यर्थः। यथा यशोधरादीनामिति। कथाया निर्वेदिन्या रस एष निष्यन्द इति गाथार्थः। संक्षेपतः संवेगं निर्वेदनिबन्धनमाह ॥ सिद्धी य देवलोगो, सुकुलुप्पत्ती य होइ संवेगो॥नरगो तिरिक्खजोणी,कुमाणुसत्तं च निव्वेउ॥२०ए॥व्याख्या॥ सिद्धिश्च देवलोकः सुकुलोत्पत्तिश्च भवति संवेग एतत्प्ररूपणं संवेगहेतुत्वादिति भावः। एवं नरकस्तिर्यग्योनिः कुमानुषत्वं च निर्वेद इति गाथार्थः। आसां कथानां या यस्य कथनीयेत्येतदाह ॥ वेणइयस्स पढमया, कहा उ अक्खेवणी कहेयव्वा ॥ तो ससमयगहियत्थो, कहिज्ज विक्खेवणी पच्छा ॥ २१० ॥व्याख्या॥ विनयेन चरति वैनयिकः शिष्यस्तस्मै प्रथमतया आदिकथनेन कथा तु आक्षेपणी उक्तलक्षणा कथयितव्या। ततः स्वसमयगृहीतार्थे सति तस्मिन् कथयेद्विक्षेपणीमुक्तलक्षणामेव पश्चादिति गाथार्थः। किमित्येतदेवमित्याह ॥ अक्खेवणिअक्खित्ता, जे जीवा ते लभंति संमत्तं॥ विक्खेवणीइ भज्जं गाढतरागं च मिच्छत्तं ॥२११॥व्याख्या॥ आक्षेपण्या कथया आक्षिप्ता आवर्जिता आक्षेपण्याक्षिप्ता ये जीवास्ते लभन्ते सम्यक्त्वम्। तथा आवर्जनं शुभभावस्य मिथ्यात्वमोहनीयक्षयोपशमोपायत्वात्। विक्षेपण्यां भाज्यं सम्यक्त्वम्। कदाचिल्लभन्ते कदाचिन्नेति। तच्छ्रवणात्तथाविधपरिणामभावात्। गाढतरं वा मिथ्यात्वं जडमतेः परसमयदोषानवबोधान्निन्दाकारिण एते न द्रष्टव्या इत्यभिनिवेशेनेति गाथार्थः। उक्ता धर्मकथा। सांप्रतं मिश्रामाह॥ धम्मो अत्थो कामो, उवइस्सइ जत्थ सुत्तकव्वेसु ॥ लोगे वेए समए, सा उ कहा मीसिया णाम ॥ २१२ ॥ व्याख्या ॥ धर्मः प्रवृत्त्यादिरूपः। अर्थो विद्यादिः। काम इच्छादिः। उपदिश्यते कथ्यते यत्र सूत्रकाव्येषु सूत्रेषु काव्येषु च तल्लक्षणवस्तु। क्वेत्यत। आह लोके रामायणादिषु। वेदे यज्ञक्रियादिषु। समये तरङ्गवत्यादिषु। सा पुनः कथा मिश्रा मिश्रानाम संकीर्णपुरुषार्थाभिधानात् इति गाथार्थः। उक्ता मिश्रकथा तदभिधानाच्चतुर्विधा कथेति। सांप्रतं कथाविपक्षभूतां त्याज्यां विकथामाह। अज्ञातस्वरूपायास्त्यागासंभवादिति ॥ इत्थिकहा भत्तकहा, रायकहा चोरजणवयकहा य॥ नडनट्टजल्लमुट्ठिय कहाउ एसा भवे विकहा ॥२१३॥ व्याख्या॥ स्त्रीकथा एवंभूता द्रविडा इत्यादिलक्षणा। भक्तकथा सुन्दरः शाल्योदन इत्यादिरूपा। राजकथा अमुकः शोभन इत्यादिलक्षणा। चौरजनपदकथा च गृहीतोऽद्य चौरः। स इत्थं कदर्थितः। तथा रम्यो मध्यदेश इत्यादिरूपा। नटनर्तकजल्लमुष्टिककथा च एषा भवेद्विकथा। प्रेक्षणीयकानां नटो रमणीयः। यद्वा नर्तकः। यद्वा जल्लः जल्लो नाम वरत्राखेलकः। मुष्टिको मल्ल इत्यादिलक्षणा विकथा कथालक्षणविरहादिति गाथार्थः। उक्ता विकथा इदानीं प्रज्ञापकापेक्षयासां प्राधान्यमाह ॥ एया चेव कहाउ, पन्नवगपरूवगं समासज्ज ॥ अकहा कहा य विकहा, हविज्जपुरिसंतरं पप्प ॥२१४॥ व्याख्या॥ एता एवो-

कलक्षणाः कथाः। प्रज्ञापयतीति प्रज्ञापकः। प्रज्ञापकश्चासौ प्ररूपकश्चेति विग्रहस्तमव-बोधकप्ररूपकम्। नतु घरट्टभ्रमणकल्पं यतो न किंचिदवगम्यत इत्यर्थः। समाश्रित्य प्राप्य। किमित्याह।अकथा वक्ष्यमाणलक्षणा कथा चोक्तस्वरूपा विकथा चोक्तस्वरूपैव भवति पुरुषान्तरं श्रोतृलक्षणं प्राप्यासाद्य साध्वसाध्वाशयवैचित्र्यात्सम्यक्श्रुतादिवत्। अन्ये तु प्रज्ञापकं मूलकर्तारं प्ररूपकं तत्कृतस्याख्यातारमिति व्याचक्षते। नचैतदतिशोभनं पणवयपरूवगे समासयत्ति पाठप्रसङ्गादिति गाथार्थः। इदानीमकथालक्षणमाह॥ मिछत्तं वेयंतो, जं अन्नाणी कहं परिकहेइ॥ लिंगत्थो व गिही वा, सा अकहा देसि-या समए॥ २१५॥ व्याख्या॥ मिथ्यात्वमिति मिथ्यात्वमोहनीयं कर्म वेदयन् विपा-केन यां कां चिदज्ञानी कथां कथयति। अज्ञानित्वं चास्य मिथ्यादृष्टित्वादेव। यद्येवं नार्थोऽज्ञानिग्रहणेन मिथ्यात्ववेदकस्याज्ञानित्वाव्यभिचारादिति चेन्न। प्रदेशानुभव-वेदकेन सम्यग्दृष्टिना व्यभिचारादिति। किंविशिष्टोऽसावित्याह। लिङ्गस्थो वा द्रव्यप्रव्र-जितोऽङ्गारमर्दकादिः। गृही वा यः कश्चिदितर एव।सा एवं प्ररूपकप्रयुक्तयुक्त्या श्रो-तर्यपि प्रज्ञापकतुल्यपरिणामनिबन्धना कथा देशिता समये। ततः प्रतिविशिष्टकथाफ-लाभावादिति गाथार्थः। अत्रैव प्रक्रमे कथामाह॥ तवसंजमगुणधारी, जं चरणरया कहिंति सब्भावं॥ सव्वजगजीवहियं, सा उ कहा देसिया समए॥ २१६॥ व्याख्या॥ तपःसंयमगुणान् धारयन्ति तच्छीलाश्चेति तपःसंयमगुणधारिणः यां कांचन चरणर-ताश्चरणप्रतिबद्धा नत्वन्यत्र निदानादिना कथयन्ति सद्भावं परमार्थम्। किंवि-शिष्टमित्याह। सर्वजगज्जीवहितं नतु व्यवहारतः कतिपयसत्त्वहितमित्यर्थः। तुशब्दस्यावधारणार्थत्वात्सैव कथा निश्चयतो देशिता समये निर्जराख्यस्वफल-साधनात्कर्तॄणां श्रोतॄणामपि चेतःकुशलपरिणामनिबन्धना कथैव नोचेद्भाज्येति गाथार्थः। इहैव विकथामाह॥ जो संजउ पमत्तो, रागद्दोसवसगउ परिकहेइ॥ सा उ विकहा पवयणे, पन्नत्ता धीरपुरिसेहिं॥ २१७॥ व्याख्या॥ यः संयतः प्रमत्तः कषायादिना प्रमादेन रागद्वेषवशगः सन्न तु मध्यस्थः परिकथयति किंचित्। सा तु विकथा प्रवचने सा पुनर्विकथा सिद्धान्ते प्रज्ञप्ता धीरपुरुषैः तीर्थंकरादिभिः। तथावि-धपरिणामनिबन्धनत्वात् कर्तृश्रोत्रोरिति।श्रोतृपरिणामभेदे तु तं प्रति कथान्तरमेवैवं सर्वत्र भावना कार्येति गाथार्थः। सांप्रतं श्रमणेन यथाविधा न कार्या तथाविधामाह। सिंगाररसुत्तइया, मोहकुवियफुंफुगा हसहसिंति॥ जं सुणमाणस्स कहं, समणेण ण सा कहेयव्वा॥ २१८॥ व्याख्या॥ शृङ्गाररसेन मन्मथदीपकेन उत्तेजिता अधिकं दीपिता केत्याह। मोह एव चारित्रमोहनीयकर्मोदयसमुत्थात्मपरिणामरूपः कुपितफुं-फुकाघटितकुकूला हसहसिंतित्ति जाज्वल्यमाना जायत इति वाक्यशेषः। यां शृण्वतः

कथां मोहोदयो जायत इत्यर्थः। श्रमणेन साधुना न सा कथयितव्या। अकुशल-निबन्धनत्वादिति गाथार्थः। यत्प्रकारा कथनीया तत्प्रकारामाह ॥ समणेण कहेयवा, तवनियमकहा विरागसंजुत्ता ॥ जं सोऊण मणूसो, वच्चइ संवेगनिव्वेयं ॥ २१ए ॥ व्याख्या ॥ श्रमणेन कथयितव्या। किंविशिष्टेत्याह। तपोनियमकथा। अनशनादि-पञ्चाश्रवविरमणादिरूपा। सापि विरागसंयुक्ता न निदानादिना रागादिसंगता। अत एवाह। यां कथां श्रुत्वा मनुष्यः श्रोता व्रजति गच्छति। संवेयणिव्वेदं ति। संवेगं निर्वेदं चेति गाथार्थः। कथाकथनविधिमाह ॥ अछमहंती वि कहा, अपरिकिलेसवहुला क-हेयवा ॥ हंदि महयाचडगर—त्तणेण अछं कहा हणइ ॥ २२० ॥ व्याख्या ॥ महार्थापि कथा अपरिक्लेशबहुला कथयितव्या। नातिविस्तरकथनेन परिक्लेशः कार्य इत्यर्थः। किमित्येवमित्यत आह। हंदीत्युपदर्शने। महता चरूकरत्वेन। अतिप्रपञ्चकथनेनेत्यर्थः। किमित्याह। अर्थं कथा हन्ति नावार्थं नाशयतीति गाथार्थः। विधिशेषमाह ॥ खेत्तं कालं पुरिसं, सामछं चप्पणो वियाणेत्ता ॥ समणेण उ अणवद्या, पगयंमि कहा कहे-यवा ॥ २२१ ॥ तइयञ्जयणणिज्जुत्ती संमत्ता ॥ व्याख्या ॥ क्षेत्रं नौमादि नावितं कालं क्षीयमाणादिलक्षणं पुरुषं पारिणामिकादिरूपं सामर्थ्यं चात्मनो ज्ञात्वा प्रकृते व-स्तुनीति योगः। श्रमणेन त्वनवद्या पापानुबन्धरहिता कथा कथयितव्या नान्येति गा-थार्थः। उक्ता कथा तदन्निधानाङतो नामनिष्पन्नो निक्षेपः। सांप्रतं सूत्रालापकनिष्प-न्नस्यावसर इत्यादि चर्चः पूर्ववत्तावद्यावत्सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चार-णीयम्। तच्चेदम्। संजमे इत्यादि। अस्य व्याख्या। इह संहितादिक्रमः क्षुण्णः। नावार्थस्त्वयम्। संयमे द्रुमपुष्पिकाव्यावर्णितस्वरूपे शोन्ननेन प्रकारेणागमनीत्या स्थित आत्मा येषां ते सुस्थितात्मानस्तेषाम्। त एव विशेष्यन्ते। विविधमनेकैः प्रकारैः प्रकर्षेण नावसारं मुक्ताः परित्यक्ता बाह्याभ्यन्तरेण ग्रन्थेनेति विप्रमुक्ता-स्तेषाम्। त एव विशेष्यन्ते त्रायन्ते आत्मानं परमुन्नयं चेति त्रातारः। आत्मानं प्रत्येकबुद्धाःपरं तीर्थकराः स्वतस्तीर्णत्वाडुन्नयं स्थविरा इति। तेषामिदं वक्ष्यमाणलक्षण-मनाचरितमकल्पम्। केषामित्याह। निग्रन्थानां साधूनामित्यन्निधानमेतत्। महान्तश्च ते ऋषयश्च महर्षयो यतय इत्यर्थः। अथवा महान्तमेषितुं शीलं येषां ते महैषिणस्ते-षाम्। इह च पूर्वपूर्वन्नाव एवोत्तरोत्तरन्नावो नियतो हेतुहेतुमद्भावेन वेदितव्यः। यत एव संयमे सुस्थितात्मानोऽतएव विप्रमुक्ताः। संयमसुस्थितात्मनिबन्धनत्वाद्विप्रमुक्तेः। एवं शेषेष्वपि नावनीयम्। अन्ये तु पश्चानुपूर्व्या हेतुहेतुमद्भावमिछं वर्णयन्ति। यत एव महर्षयोऽतएव निग्रन्थाः। एवं शेषेष्वपि द्रष्टव्यमिति सूत्रार्थः। सांप्रतं यदनाचरितं तदाह। सूत्रम्।

उद्देसियं कीयगडं, नियागमभिहडाणि य ॥
राइभत्ते सिणाणे य, गंधमल्ले य वीयणे॥ २ ॥

(अवचूरिः) यदनाचीर्णं तदाह। साध्वाद्याश्रित्योद्देशनमारम्भस्य तत्र भवम् (१) क्रयक्रीतं। भावे निष्ठाप्रत्ययः। साध्वाद्यर्थमिति गम्यते। तेन निर्वर्तितं क्रीतकृतं (२) नित्यागमप्रमाणीकृतामन्त्रितस्य पिंडस्य ग्रहणं (३) अभ्याहृतं बहुवचनं स्वपरग्रामादिभेदख्यापनार्थम् (४) रात्रिभुक्तं दिवसगृहीतदिवसभुक्तादि चतुर्धा (५) स्नानं सर्वदेशभेदभिन्नम्। देशस्नानमधिष्ठानशौचातिरेकेणाक्षिपक्ष्मप्रक्षालनमपि। सर्वस्नानं प्रतीतम् (६) गन्धं कोष्ठपुटादि (७) माल्यं ग्रथितादि (८) वीजनं तालवृन्तादि (९) उद्देशकादिषु दोषाश्चारम्भादयः स्वयं ज्ञेयाः ॥ २ ॥

(अर्थ.) हवे साधुने आचरवाने अयोग्य जे तेज बावन बोलेकरी कहे छे. उद्देसियंति (उद्देसियं के०) औद्देशिकं एटले साधु आदिकने उद्देशीने तैयार करेला जे आहारादि ते औद्देशिक कहियें, ते साधुने अनाचरित छे, ए एक अनाचरित कह्युं. (१) एवी रीतें आगल एकावन अनाचरित कहेशे. ते प्रत्येक बोलनेविषे अनाचरित पदनो संबंध लेवो. (कीयगडं के०) क्रीतकृतम् एटले साधुने अर्थे वेचाथी आणी आपेलुं लेवुं ते बीजुं क्रीतकृत अनाचरित(२) (नियागं के०) जे आमंत्रण करे तेनेज घरे नित्य आहार लेवो. अनामंत्रितने घरे लेवो नही. ते नियाग नामक त्रीजुं अनाचरित. (३) (अभिहडाणि य के०) अभ्याहृतानि च एटले परग्रामथी आवेला पुरुषोयें पोताना ग्रामथकी साधुमाटे लावेलो पदार्थ ते चोथुं अभ्याहृत नामक अनाचरित. (४) (रायभत्ते के०) रात्रिभक्तम् एटले दिवागृहीतादि चार प्रकारनुं रात्रिभोजन करवुं, ते पांचमुं रात्रिभक्तनामक अनाचरित. (५) (सिणाणे के०) स्नानं एटले नेत्रप्रक्षालनादि देशस्नान तथा अवगाहनादि सर्व स्नान करवुं, ते छठुं स्नाननामक अनाचरित. (६) (गंधमल्ले य के०) गंधमाल्ये च, गंध एटले सुगंध चूआ चंदन आदिनुं चोपडवुं, अने माल्य ते फूलप्रमुखनी माला पहेरवी ते सातमुं ने आठमुं गंधमाल्य नामक अनाचीर्ण. (७।८) (वीयणे के०) व्यजनम् ते तालवृंतादिकनो स्वीकार करवो ते नवमुं व्यजन नामक अनाचरित जाणवुं (९) अही औद्देशिकादिमां जे आरंभादि दोष छे, ते सहज छे, माटे लख्या नथी. वाचनारें स्वबुद्धियी जाणी लेवा. ॥ २ ॥

(दीपिका) सांप्रतं यत्पूर्वोक्तमनाचरितं तदेवाह। साधुमुद्दिश्य आरम्भेण

भवमौद्देशिकम् (१) क्रयणं साध्वादिनिमित्तं क्रीतं तेन कृतं निर्वर्तितं क्रीतकृतम् (२) नियागमामन्त्रितस्य पिण्डस्य ग्रहणम् (३) अभिहृतं स्वकीयग्रामादेः साधुनिमित्तमभिमुखमानीतं अभ्याहृतम्। बहुवचनं स्वग्रामपरग्रामनिशीथादिभेदख्यापनार्थम् (४) रात्रिभुक्तं रात्रिभोजनं दिवसगृहीतं दिवसभुक्तं रात्रौ संनिधिरक्षणेन (१) दिवसगृहीतं रात्रौ भुक्तम्(२)रात्रौगृहीतं दिवसभुक्तं(३) रात्रौगृहीतं रात्रौ भुक्तम्(४)इति भेदचतुष्टयलक्षणम् (५) स्नानं देशसर्वभेदभिन्नम्। तत्र देशस्नानं शौचातिरेकेण अक्षिपक्ष्मप्रक्षालनमपि। सर्वस्नानं तु प्रतीतमेव (६) गन्धमाल्यं च गन्धग्रहणात् कोष्ठपुटादिपरिग्रहः (७) माल्यग्रहणाच्च ग्रथितवेष्टितादेर्माल्यस्य परिग्रहः (८) वीजनमुष्णकाले तालवृन्तादिना (९) इदमनाचरितम्। दोषाश्चेह आरम्भप्रवर्तनादयः स्वयं बुद्ध्या वाच्याः ॥ २ ॥

---

(टीका) उद्देसियं ति सूत्रमस्य व्याख्या। उद्देशनं साध्वाद्याश्रित्य दानारम्भस्येत्युद्देशः। तत्र भवमौद्देशिकम् (१) क्रयणं क्रीतम्। भावे निष्ठाप्रत्ययः। साध्वादिनिमित्तमिति गम्यते। तेन कृतं निर्वर्तितं क्रीतकृतम् (२) नियागमित्यामन्त्रितस्य पिण्डस्य ग्रहणं नित्यं तत्त्वनामन्त्रितस्य (३) अभिहडाणि य त्ति। स्वग्रामादेः साधुनिमित्तमभिमुखमानीतमभ्याहृतं बहुवचनं स्वग्रामपरग्रामनिशीथादिभेदख्यापनार्थम् (४) तथा रात्रिभक्तं रात्रिभोजनं दिवसगृहीतदिवसभुक्तादिचतुर्भंगलक्षणम् (५)। स्नानं च देशसर्वभेदभिन्नं देशस्नानमधिष्ठानशौचातिरेकेणाक्षिपक्ष्मप्रक्षालनमपि। सर्वस्नानं तु प्रतीतम् (६)। तथा गन्धमाल्यव्यजनं च गन्धग्रहणात्कोष्ठपुटादिपरिग्रहः (७) माल्यग्रहणाच्च ग्रथितवेष्टितादेर्माल्यस्य (८) वीजनं तालवृन्तादिना घर्म एवेदमनाचरितं दोषाश्चौद्देशिकादिष्वारम्भप्रवर्तनादयः (९) स्वाधियावगन्तव्या इति सूत्रार्थः।

संनिहीगिहिमत्ते य, रायपिंडे किमिच्छए ॥
संबाहण दंत पहोयणाय संपुच्छणे देहपलोयणा य ॥ ३ ॥

---

(अवचूरिः) सन्निधीयतेऽनेन आत्मा दुर्गताविति संनिधिः घृतगुडादीनां संचयक्रिया (९) गृहिमात्रं गृहस्थभाजनम् (१०) राजपिण्डोनृपाहारः (११) कः किमिच्छतीत्ति यो दीयते स किमिच्छकः (१२) संहनमस्थिमांसत्व ग्रोमसुखतया चतुर्धा मर्दनं (१३) दंतप्रधावनं चाङ्गुल्यादिना क्षालनम् (१४) संप्रश्नः संवादो सावद्यगृहस्थविषयः कीदृशोऽहमित्यादिरूपो वा (१५) देहप्रलोकनं चादर्शादौ (१६) ॥ ३ ॥

( अर्थ. ) संनिहित्ति ( संनिहि के० ) संनिधिः, जेथी आत्मा दुर्गतिने संनिधि एटले नजीक जाय छे, ते संनिधि एटले घृतगुमादिकनो संचय करवो, ते संनिधिनामक दशमुं अनाचारित ( गिहिमित्ते य के० ) गृह्यमत्रं च एटले गृहस्थनुं पात्र जोजनादिकने अर्थे लेवुं, ते अगियारमुं गृह्यमत्र नामक अनाचरित. ( रायपिंमे के० ) राजपिंमः एटले राजाएं आपेलो आहार लेवो, ते बारमुं राजपिंम नामक अनाचरित. ( किमिच्छए के० ) किमिच्छकः एटले "जे कोइ जोजननी इच्छा करनार हो ते अहिं आवो अने जोजन लइ जाओ." एवो घोष करीने ज्यां आहार अपाय छे, तेवा दानशालादिकनेविषे जे आहार लेवो, ते किमिच्छकनामा तेरमुं अनाचरित. ( संवाहणे के० ) संवाहनम् एटले जेथी अस्थि, मांस, त्वचा अने रोम एमने सुख थाय एवुं तैलादिकथी मर्दन करवुं ते चौदमुं संवाहन नामक अनाचरित. ( दंतपहोयणा य के० ) दंतप्रधावना च एटले अंगुल्यादिकें करी दांतण करवुं, मुख प्रक्षालन करवुं, ए पंदरमुं दंतप्रधावन नामक अनाचरित. ( संपुच्छण के० ) संप्रश्नः एटले गृहस्थने सावद्य प्रश्न ते कुशलक्षेमसंबंधी प्रश्न करवो, अथवा पोतानी शरीरनी शोजाना अजिमानथी एवुं पूछवुं के, हुं केवो छुं ? ए संप्रश्न नामक सोलमुं अनाचरित. ( देहपलोयणा य के० ) देहप्रलोकना च एटले दर्पण आदिकमां शरीरनी कांति जोवी, ते सत्तरमुं देहप्रलोकन नामक अनाचरित जाणवुं. ए संनिधि आदिकनुं आचरण करवामां परिग्रह, प्राणातिपात इत्यादि दोष छे ते पोतानी मेले जाणवा. ॥ ३ ॥

( दीपिका ) पुनरिदमनाचरितम् । संनिधीयतेऽनेन आत्मा दुर्गताविति संनिधिः । गुमघृतादीनां संचयकरणम् ( १० ) । गृह्यमत्रं च गृहस्थजाजनम् ( ११ ) । राजपिंमश्च नृपाहारः ( १२ ) । किमिच्छसि इत्येवं यो दीयते स किमिच्छकः । राजपिंमोऽन्यो वा सामान्येन ( १३ ) । तथा संवाधनं अस्थिमांसत्वग्रोमसुखतया चतुर्विधं मर्दनम् ( १४ ) । दन्तप्रधावनं चाङ्गुल्यादिना मुखक्षालनम् ( १५ ) । संप्रश्नः सावद्यो गृहस्थविषयः । शोजार्थं कीदृशो वाहमित्यादिरूपः ( १६ ) । देहप्रलोकनं च आदर्शादौ ( १७ ) । अनाचरितदोषाश्च संनिधिप्रजृतिषु परिग्रहप्राणातिपातादयः स्वबुद्ध्या वाच्याः ॥ ३ ॥

( टीका ) इदं चानाचरितमित्याह । संनिहित्ति सूत्रमस्य व्याख्या । संनिधीयतेऽनयात्मा डुर्गताविति संनिधिः । घृतगुमादीनां संचयक्रिया । गृह्यमत्रं गृहस्थजाजनं च तथा राजपिंमो नृपाहारः । किमिच्छतीत्येवं यो दीयते स किमिच्छकः रा-

जपिण्डोऽन्यो वा सामान्येन । तथा संबाधनमस्थिमांसत्वग्रोमसुखतया चतुर्विधं मर्दनम् । दन्तप्रधावनं चाङ्गुल्यादिना क्षालनम् । तथा संप्रश्नः सावद्यो गृहस्थविषयः। राढार्थं कीदृशो वाहमित्यादिरूपः । देहप्रलोकनं चादर्शादावनाचरितम् । दोषाश्च संनिधिप्रभृतिषु परिग्रहप्राणातिपातादयः स्वधियैव वाच्या इति सूत्रार्थः । अठ्ठावए य सूत्रमस्य व्याख्या । अष्टापदं चेति ।

अठ्ठावए य नालीए, छत्तस्स य धारणठ्ठाए ॥
तेगिछं पाहणापाए, समारंभं च जोइणो ॥ ४ ॥

(अवचूरिः) अठ्ठावए त्ति ।अष्टापदं द्यूतमर्थपदं वा गृहस्थमधिकृत्य निमित्तादिविषयं १७ । नालिका द्यूतभेदः । यत्र मा भूत्कलयाप्यन्यथाऽक्षपातनमिति नालिकाः पात्यंते। नालिकायाः प्रधानत्वख्यापनार्थं भेदेनोपादानं सकलद्यूतोपलक्षणार्थं च १८ । छत्रस्य धारणमात्मानं परं वा प्रत्यनर्थाय ग्लानाद्यालम्बनं मुक्त्वा । प्राकृतत्वादनुस्वारलोपोऽकारनकारलोपौ च दृष्टव्यौ १९ । चिकित्साया भावश्चैकित्स्यं व्याधिप्रतिक्रियारूपम् ( २० ) । उपानहौ पादयोरिति साभिप्रायकम् । आपत्कालपरिहारार्थम् उपग्रहधारणे न दोषः ( २१ ) । समारम्भश्च ज्योतिषोऽग्नेरिति ( २२ ) । दोषास्त्वष्टापदादीनां क्षुण्णा एवेति ॥ ४ ॥

( अर्थ ) अठ्ठावएत्ति ।(अठ्ठावए य के०) अष्टापदं च एटले द्यूत रमवुं, ते अढारमुं अष्टापदनामक अनाचरित. (नालीए के० ) नालिका एटले कलायें करी पासो पोतानी इछाप्रमाणे न पाडवो जोइयें माटे नलिकामां नाखीने रमवुं, एवुं एक जातनुं द्यूत, अथवा नालिकाशब्दें गंजीफो,सेत्रंज इत्यादि क्रीडा लेवी. ते क्रीडायें रमवुं ते नालिका नामक ओगणीशमुं अनाचरित. रोगादिनिमित्तविना ( छत्तस्स य के० ) छत्रस्य च एटले छत्रनुं (धारण के०) धारणं एटले धारण करवुं ते (णठ्ठाए के०) अनर्थाय एटले अनर्थने माटे छे. अर्थात् अनर्थकारि छे. ए वीशमुं छत्रधारणनामक अनाचरित. ( तेगिछं के० ) चैकित्स्यम् एटले सावद्य वैद्यक्रिया स्वार्थ अथवा परार्थ करवी, ते एकवीशमुं चैकित्स्यनामक अनाचरित. ( पाए के० ) पादयोः एटले पगनेविषे ( वाहणा के० ) उपानहौ एटले पगरखां पहेरवां, ते बावीशमुं उपानह् नामक अनाचरित. ( जोइणो के० ) ज्योतिषः एटले अग्निनो ( समारंभं के० ) समारंभः एटले आरंभ करवो, ते त्रेवीशमुं ज्योतिःसमारंभ नामक अनाचरित जाणवुं ॥ ४ ॥

( दीपिका ) किंच अष्टापदमिति।अष्टापदं द्यूतमर्थपदं वा गृहस्थमधिकृत्य निमित्तादि-

विषयम् अनाचरितम् १८ तथा नालिका चेति द्यूतविशेषलक्षणा यत्र माभूत् कलयाऽन्यथा पाशकपातनमिति नालिकया पात्यन्त इति।इयं च अनाचरितम् १९ छत्रस्य धारणमात्मानं परं वा प्रति अनर्थाय इति।आगाढग्लानाद्यालम्बनं मुक्त्वानाचरितं प्राकृतशैल्यात्रानुस्वारलोपः अकारणकारलोपौ च द्रष्टव्यौ। तथा श्रुतिप्रामाण्यादिति २० तेगिछंति चिकित्साया भावः चैकित्स्यं व्याधिप्रतिक्रियारूपम् अनाचरितम् २१ उपानहौ पादयोरनाचरिते।पादयोरिति साभिप्रायकं नतु आपत्कल्पपरिहारार्थमुपग्रहधारणेन २२ समारंभश्च समारम्भणं ज्योतिषो वह्नेः २३ दोषाश्च अष्टापदादीनां सुगमा एवेति ॥ ४ ॥

---

( टीका ) अष्टापदं द्यूतम् । अर्थपदं वा गृहस्थमधिकृत्य नीत्यादिविषयमनाचरितम्। तथा नालिका चेति द्यूतविशेषलक्षणा यत्र माभूत्कलयान्यथा पाशकपातनमिति नलिकया पात्यन्त इति। इयं चानाचरिता। अष्टापदेन सामान्यतो द्यूतग्रहणे सत्यभिनिवेशनिवन्धनत्वेन नालिकायाः प्राधान्यख्यापनार्थं भेदत उपादानम्। अर्थपदमेवोक्तार्थं तदित्यन्ये अभिदधति। अस्मिन् पक्षे सकलद्यूतोपलक्षणार्थं नालिकाग्रहणमष्टापदद्यूतविशेषपक्षे चोभयोरिति।तथा छत्रस्य च लोकप्रसिद्धस्य धारणमात्मानं परं वा प्रत्यनर्थायेत्यागाढग्लानाद्यालम्बनं मुक्त्वानाचरितम् । प्राकृतशैल्या चात्रानुस्वारलोपोऽकारनकारलोपौ च द्रष्टव्यौ तथाश्रुतिप्रामाण्यादिति । तथा तेगिछंति। चिकित्साया भावश्चैकित्स्यं व्याधिप्रतिक्रियारूपमनाचरितम् । तथोपानहौ पादयोरनाचरिते। पादयोरिति साभिप्रायकम्। नत्वापत्कल्पपरिहारार्थम् उपग्रहधारणेन। तथा समारम्भश्च समारम्भणं च ज्योतिषोऽग्नेस्तदनाचरितमिति। दोषा अष्टापदादीनां क्षुण्णा एवेति सूत्रार्थः ॥ ४ ॥

सिझायरपिंमं च, आसंदीपलियंकए ॥
गिहंतरनिसिझा य, गायस्सुव्वट्टणाणि य ॥ ५ ॥

( अवचूरिः ) शय्या वसतिस्तया तरति संसारमिति शय्यातरः २३ आसंदीपर्यङ्कौ मञ्चकखट्वे ( २४ ) गृहान्तरनिषद्या च द्वयोर्गृहयोरन्तरालोपवेशनम्। चात्पाटकादिग्रहः ( २५ ) गात्रोद्वर्त्तनानि च मलापनयनरूपाणि। चादन्यसंस्कारग्रहः ॥ ५ ॥

---

( अर्थ ) सिझायरत्ति। ( सिझायरपिंड के० ) शय्यातरपिंडः, शय्या एटले निद्रादि करवानुं स्थानक ते साधुने आपीने जे पोताना कर्मने हलवा करे छे, ते शय्यातर कहीयें, अने ते शय्यातरना घरनो जे पिंड एटले आहार ते चोवीसमुं अ-

जपिएडोऽन्यो वा सामान्येन । तथा संबाधनमस्थिमांसत्वग्रोमसुखतया चतुर्विधं मर्दनम् । दन्तप्रधावनं चाङ्गुल्यादिना क्षालनम् । तथा संप्रश्नः सावद्यो गृहस्थविषयः। राढार्थं कीदृशो वाहमित्यादिरूपः । देहप्रलोकनं चादर्शादावनाचरितम् । दोषाश्च संनिधिप्रभृतिषु परिग्रहप्राणातिपातादयः स्वधियैव वाच्या इति सूत्रार्थः । अठावए य सूत्रमस्य व्याख्या । अष्टापदं चेति ।

अठावए य नालीए, बत्तस्स य धारणठाए ॥
तेगिछं पाहणापाए, समारंभं च जोइणो ॥ ४ ॥

(अवचूरिः) अठावए त्ति ।अष्टापदं द्यूतमर्थपदं वा गृहस्थमधिकृत्य निमित्तादिविषयं १७ । नालिका द्यूतभेदः । यत्र मा भूत्कलयाप्यन्यथाऽक्षपातनमिति नालिकाः पात्यंते। नालिकायाः प्रधानत्वख्यापनार्थं भेदेनोपादानं सकलद्यूतोपलक्षणार्थं च १८ । बत्रस्य धारणमात्मानं परं वा प्रत्यनर्थाय ग्लानाद्यालम्बनं मुक्त्वा । प्राकृतत्वादनुस्वारलोपोऽकारनकारलोपौ च द्रष्टव्यौ १९ । चिकित्साया भावश्चैकित्स्यं व्याधिप्रतिक्रियारूपम् ( २० ) । उपानहौ पादयोरिति साभिप्रायकम् । आपत्कालपरिहारार्थम् उपग्रहधारणे न दोषः ( २१ ) । समारम्भश्च ज्योतिषोऽग्नेरिति ( २२ ) । दोषास्त्वष्टापदादीनां क्षुणा एवेति ॥ ४ ॥

( अर्थ ) अठावएत्ति।(अठावए य के०) अष्टापदं च एटले द्यूत रमवुं, ते अढारसुं अष्टापदनामक अनाचरित. (नालीए के० ) नालिका एटले कलायें करी पासो पोतानी इछाप्रमाणे न पाडवो जोइयें माटे नलिकामां नाखीने रमवुं, एवुं एक जातनुं द्यूत, अथवा नालिकाशब्दें गंजीफो,सेत्रंज इत्यादि क्रीडा लेवी. ते क्रीडायें रमवुं ते नालिका नामक ओगणीशमुं अनाचरित. रोगादिनिमित्तविना ( बत्तस्स य के० ) बत्रस्य च एटले बत्रनुं (धारण के०) धारणं एटले धारण करवुं ते (णठाए के०) अनर्थाय एटले अनर्थने माटे बे. अर्थात् अनर्थकारि बे. ए वीशमुं बत्रधारणनामक अनाचरित. ( तेगिछं के० ) चैकित्स्यम् एटले सावद्य वैद्यक्रिया स्वार्थ अथवा परार्थ करवी, ते एकवीशमुं चैकित्स्यनामक अनाचरित. ( पाए के० ) पादयोः एटले पगनेविषे ( वाहणा के० ) उपानहौ एटले पगरखां पहेरवां, ते बावीशमुं उपानह् नामक अनाचरित. ( जोइणो के० ) ज्योतिषः एटले अग्निनो ( समारंभं के० ) समारंभः एटले आरंभ करवो, ते त्रेवीशमुं ज्योतिःसमारंभ नामक अनाचरित जाणवुं ॥ ४ ॥

( दीपिका ) किंच अष्टापदमिति।अष्टापदं द्यूतमर्थपदं वा गृहस्थमधिकृत्य निमित्तादि-

विषयम् अनाचरितम् १८ तथा नालिका चेति द्यूतविशेषलक्षणा यत्र माभूत् कलयाऽन्यथा पाशकपातनमिति नालिकया पात्यन्त इति। इयं च अनाचरितम् १९ छत्रस्य धारणमात्मानं परं वा प्रति अनर्थाय इति। आगाढग्लानाद्यालम्बनं मुक्त्वानाचरितं प्राकृतशैल्यात्रानुस्वारलोपः अकारणकारलोपौ च द्रष्टव्यौ । तथा श्रुतिप्रामाण्यादिति २० तेगिच्छंति चिकित्सायां भावः चैकित्स्यं व्याधिप्रतिक्रियारूपम् अनाचरितम् २१ उपानहौ पादयोरनाचरिते। पादयोरिति साभिप्रायकं नतु आपत्कल्पपरिहारार्थमुपग्रहधारणेन २२ समारंभश्च समारम्भणं ज्योतिषो वह्नेः २३ दोषाश्च अष्टापदादीनां सुगमा एवेति ॥ ४ ॥

---

( टीका ) अष्टापदं द्यूतम् । अर्थपदं वा गृहस्थमधिकृत्य नीत्यादिविषयमनाचरितम् । तथा नालिका चेति द्यूतविशेषलक्षणा यत्र माभूत्कलयान्यथा पाशकपातनमिति नलिकया पात्यन्त इति । इयं चानाचरिता । अष्टापदेन सामान्यतो द्यूतग्रहणे सत्यभिनिवेशनिबन्धनत्वेन नालिकायाः प्राधान्यख्यापनार्थं भेदत उपादानम् । अर्थपदमेवोक्तार्थं तदित्यन्ये अभिदधति । अस्मिन् पक्षे सकलद्यूतोपलक्षणार्थं नालिकाग्रहणमष्टापदद्यूतविशेषपक्षे चोभयोरिति। तथा छत्रस्य च लोकप्रसिद्धस्य धारणमात्मानं परं वा प्रत्यनर्थायेत्यागाढग्लानाद्यालम्बनं मुक्त्वानाचरितम् । प्राकृतशैल्या चात्रानुस्वारलोपोऽकारनकारलोपौ च द्रष्टव्यौ तथाश्रुतिप्रामाण्यादिति । तथा तेगिच्छंति । चिकित्साया भावश्चैकित्स्यं व्याधिप्रतिक्रियारूपमनाचरितम् । तथोपानहौ पादयोरनाचरिते । पादयोरिति साभिप्रायकम् । नत्वापत्कल्पपरिहारार्थम् उपग्रहधारणेन । तथा समारम्भश्च समारम्भणं च ज्योतिषोऽग्नेस्तदनाचरितमिति । दोषा अष्टापदादीनां क्षुषा एवेति सूत्रार्थः ॥ ४ ॥

सिज्जायरपिंडं च, आसंदीपलियंकए ॥

गिहंतरनिसिज्जा य, गायस्सुवट्टणाणि य ॥ ५ ॥

---

( अवचूरिः ) शय्या वसतिस्तया तरति संसारमिति शय्यातरः २३ आसंदीपर्यङ्कौ मञ्चकखट्वे ( २४ ) गृहान्तरनिषद्या च द्वयोर्गृहयोरन्तरालोपवेशनम् । चात्पाटकादिग्रहः ( २५ ) गात्रोद्वर्त्तनानि च मलापनयनरूपाणि । चादन्यसंस्कारग्रहः ॥ ५ ॥

---

( अर्थ ) सिज्जायरत्ति । ( सिज्जायरपिंडं के० ) शय्यातरपिंडः, शय्या एटले निद्रादि करवानुं स्थानक ते साधुने आपीने जे पोताना कर्मने हलवा करे छे, ते शय्यातर कहीयें, अने ते शय्यातरना घरनो जे पिंड एटले आहार ते चोवीशमुं श-

य्यातरपिंरु अनाचरित जाणवुं. तथा (आसंदीपलियंकए के०) आसंदीपर्यंकौ एटले सादरी अने पलंग. उपलक्षणथी मांची, खाट, झोली इत्यादिक लेवा. हवे ते सादरी विगेरे उपर बेसवुं, ते पच्चीशमुं, छवीशमुं आसंदीपर्यंक नामक अनाचरित. (गिहंतरनिसिज्जा य के०) गृहांतरशय्या एटले बे घरोना मध्यनागमां सूवुं, अथवा उपासराथी बीजे घरे जइने सूवुं, च शब्दथी पटादिकनो परिग्रह पण जाणवो. ए सत्तावीशमुं गृहांतरशय्या नामक अनाचरित. (गायस्सुवट्टणाणि य के०) गात्रस्योद्वर्तनानि च, एटले शरीरना मलने दूर करवाने अर्थे उद्वर्तन एटले उवटणां करवां. ए अठ्ठावीशमुं अनाचरित जाणवुं ॥ ५ ॥

(दीपिका) शय्यातरपिंरुोऽप्यनाचरितः । शय्या वसतिस्तया तरति संसारमिति शय्यातरः । साधूनां वसतिदाता तस्य पिंरुः २४ आसन्दकपर्यङ्कौ लोकप्रसिद्धौ अनाचरितौ २५।२६ तथा गृहान्तरनिषद्या गृहमेव गृहान्तरं गृहयोर्वा अपान्तरालं तत्र उपवेशनम् । चशब्दात् पाटकादिपरिग्रहः २७ तथा गात्रस्य कायस्य उद्वर्तनानि पङ्कापनयनलक्षणानि । चशब्दादन्यसंस्कारपरिग्रहः ॥ ५ ॥

(टीका) किंच । सद्यायरसूत्रमस्य व्याख्या । शय्यातरपिएरुश्चानाचरितः । शय्या वसतिस्तया तरति संसारमिति शय्यातरः साधुवसतिदाता तत्पिएरुः । तथा आसन्दकपर्यङ्कौ अनाचरितौ । एतौ च लोकप्रसिद्धावेव । तथा गृहान्तरनिषद्यानाचरिता । गृहमेव गृहान्तरं गृहयोर्वा अपान्तरालं तत्रोपवेशनम् । चशब्दात्पाटकादिपरिग्रहः । तथा गात्रस्य कायस्योद्वर्तनानि चानाचरितानि । उद्वर्तनानि पङ्कापनयनलक्षणानि । चशब्दादन्यसंस्कारपरिग्रहः । इति सूत्रार्थः ॥ ५ ॥

गिहिणो वेआवडियं, जा य आजीववत्तिया ॥
तत्तानिवुमनोइत्तं, आउरस्सरणाणि य ॥ ६ ॥

(अवचूरिः) गृहिणो वैयावृत्त्यं गृहस्थं प्रत्यन्नादिसंपादनम् (२७) या चाजीववृत्तिता जातिकुलादिनिरात्मपालना (२८) तप्तं च तथानिर्वृतं चात्रिदंगोद्वृत्तं तप्तोजित्वं मिश्रोदकनोजित्वमित्यर्थः (२९) । आलुरस्मरणानि च क्षुधादिसमये पूर्वभुक्तादिस्मरणानि । दोषातुराणां वा शरणान्याश्रयदानादीनि (३०) ॥ ६ ॥

(अर्थ) गिहिणो त्ति । (गिहिणो के०) गृहिणः एटले गृहस्थनुं (वेआवडियं के०) वैयावृत्त्यम् एटले वेयावच्च करवुं, अशनादिक देवां, तथा गृहस्थनां कामकाज करवां. ते उंगणत्रीशमुं अनाचरित. (जाय आजीववत्तिया के०) या चाजीववृत्तिता एटले

पोतानी जाति, कुल इत्यादि तेणे करी पोतानुं उदरपोषण करवुं, ते त्रीशमुं आजीववृत्तितानामक अनाचरित. (तत्तानिव्वुडजोइत्तं के०) तप्तानिर्वृतजोजित्वम् एटले तप्त नाम तपावेलुं पण अनिर्वृत एटले त्रण उकाला आव्या विना जे प्रासुक थयुं नथी एवुं पाणी पीवुं. अर्थात् मिश्र उदकनुं पान करवुं ते एकत्रीशमुं तप्तानिर्वृतजोजित्व नामक आनाचरित. ( आउरस्सरणाणि य के० ) आतुरस्मरणानि च एटले भूखथी पीडित थवाथी पूर्वोपभुक्त अवस्थानां स्मरण करवां, अथवा आतुरशरणानि च एटले रोगेंकरी पीडा पामता लोकोने आश्रय देवो, ते बत्रीशमुं आतुरस्मरणनामा अनाचरित जाणवुं ॥ ६ ॥

---

(दीपिका) पुनर्गृहिणो गृहस्थस्य वैयावृत्त्यं व्यावृत्तस्य भावो वैयावृत्त्यं गृहस्थं प्रत्यन्नादिसंपादनमित्यर्थः २ए । तथा या च आजीववृत्तिता जातिकुलगणकर्मशिल्पानामाजीवनमाजीवः तेन वृत्तिः आजीववृत्तिः तस्या भाव आजीववृत्तिता जात्यादेराजीवनेन आत्मपालनमित्यर्थः ३० । तप्तानिर्वृतभोजित्वं तप्तं च तत् अनिर्वृतं तप्तानिर्वृतं अत्रिदंमोद्धृत्तं चेति समासः । उदकमिति शेषः । तस्य भोजित्वं मिश्र सचित्तोदकभोजित्वमित्यर्थः ३१ । तथा आतुरस्मरणानि च क्षुधादिना आतुराणां पीडितानां पूर्वोपभुक्तस्मरणानि । अथवा दोषातुराणामाश्रयदानादीनि ३२ ॥ ६ ॥

---

(टीका) तथा गिहिणोत्ति सूत्रमस्य व्याख्या । गृहिणो गृहस्थस्य वैयावृत्त्यं व्यावृत्तभावो वैयावृत्त्यं गृहस्थं प्रत्यन्नादिसंपादनमित्यर्थः । एतदनाचरितमिति । तथा चाजीववृत्तिता जातिकुलगणकर्मशिल्पानामाजीवनमाजीवस्तेन वृत्तिस्तद्भाव आजीववृत्तिता । जात्याद्याजीवनेनात्मपालनेत्यर्थः । इयं चानाचरिता । तथा तप्तानिर्वृतभोजित्वम् तप्तं च तदनिर्वृतं च अत्रिदण्डोद्धृतं चेति विग्रहः । उदकमिति विशेषणान्यथानुपपत्त्या गम्यते । तद्भोजित्वं मिश्रसचित्तोदकभोजित्वम् इत्यर्थः । इदं चानाचरितम् । तथातुरस्मरणानि च क्षुधाद्यातुराणां पूर्वोपभुक्तस्मरणानि च अनाचरितानि । आतुरशरणानि वा । दोषातुराश्रयदानानीति सूत्रार्थः॥ ६ ॥

मूलए सिंगबेरे य, उच्छुखंडे अनिव्वुडे ॥
कंदे मूले य सच्चित्ते, फले बीए य आमए ॥ ७ ॥

---

( अवचूरिः ) मूलको लोके प्रतीतः ( ३१ ) शृङ्गबेरकं चार्द्रकम् ( ३२ ) इक्षुखण्डं चानिर्वृतमपरिणतं सर्वत्रापि संबध्यते ( ३३ ) ( ३४ ) कंदो वज्रकंदादिः ( ३५ ) मूलं सट्टामूलादि ( ३६ ) सचित्तफलं त्रपुषीकर्कट्यादि ( ३७ ) बीजं तिलादि आमकं सचित्तम् ( ३८ ) ॥ ७ ॥

( अर्थ ) मूलएत्ति ( अनिवुडे के० ) अनिर्वृतं एटले पक्क थयो नथी एवो ( मूलए के० ) मूलकम् एटले मूलो, ( सिंगबेरे य के० ) शृंगबेरं च एटले आडुं, ( उच्छुखंडे के० ) इक्षुखंडम् एटले सर्व जातिनी सेलडी, ए त्रणे ठेकाणे अनिर्वृत ए विशेषण लगाडवुं. पूर्वोक्त एकत्रीश अने ए त्रण ए सर्व मलीने पात्रीश अनाचरित थयां. ( सचित्ते के० ) सचित्तम् एटले सचित्त एवा ( कंदे के०) कन्दः एटले वज्रादि कंद, तथा (मूले के०) मूलम् एटले मूल ए बे वस्तु सचित्त वापरवी, ते अनाचरित. पूर्वोक्त पात्रीश अनाचरित अने आ कन्दानाचरित तथा मूलानाचरित मलीने साडत्रीश अनाचरित थयां. ( आमए के० ) आमम् एटले लीलुं कांचुं एवां ( फले के० ) फलं, ते कर्कटी आदिक फल अने ( बीए के० ) तिलादिक बीज ए बे लीलां काचां वापरवां, ते क्रमें करी आडत्रीशमुं तथा उगणचालीशमुं अनाचरित जाणवुं ॥ ७ ॥

( दीपिका ) पुनः, मूलको लोके प्रतीतः ३ । शृङ्गबेरमार्द्रकम् ३४ । इक्षुखण्डं च लोकप्रतीततम् । अनिर्वृतग्रहणं सर्वत्र अभिसंबध्यते । इक्षुखण्डं च अपरिणतं छिपर्वान्तं यद्वर्तते । कन्दो वज्रकन्दादिः ३५ । मूलं च सट्टामूलादि सचित्तम् ३७ फलं कर्कव्यादि त्रपुषादि ३८। बीजं च तिलादि ३९ । किं० । आमकं सचित्तम् ॥ ७॥

( टीका ) किंच मूलएत्ति सूत्रमस्य व्याख्या । मूलको लोकप्रतीतः । शृङ्गबेरं चार्द्रकम् । तथेक्षुखण्डं च लोकप्रतीतम् । अनिर्वृतग्रहणं सर्वत्राभिसंबध्यते । अनिर्वृतमपरिणतमनाचरितमिति । इक्षुखण्डं चापरिणतं छिपर्वान्तं यद्वर्तते । तथा कन्दो वज्रकन्दादिः।मूलं च सट्टामूलादि सचित्तमनाचरितम् । तथा फलं त्रपुष्यादि। बीजं च तिलादि । आमकं सचित्तमनाचरितमिति सूत्रार्थः ॥ ७ ॥

सोवच्चले सिंधवे लोणे, रोमालोणे य आमए ॥
सामुद्दे पंसुखारे य, कालालोणे य आमए ॥ ८ ॥

( अवचूरिः ) सौवर्चलं ( ३९) सैन्धवं ( ४० ) लवणं खारी ( ४१ ) रुमालवणं चाकरविशेषस्तद्भवम् ( ४२ ) सामुद्रं लवणमेव ( ४३ ) पांशुक्षारश्चोषरलवणम् । यद्वा पांशुरूपः ( ४४ ) कृष्णलवणं पर्वतैकदेशजम् ( ४५ ) ॥ ८ ॥

( अर्थ ) सोवच्चलेत्ति । ( सोवच्चले के० ) सौवर्चलम् एटले संचल, ( सिंधवेके० ) सैंधवं एटले सिंधालूण, (लोणे के०) लवणम् एटले सांभरलोण ( रोमालोणे अ के० ) रुमालवणम् एटले वैद्यशास्त्रमां जेने रोमक क्षार कहे छे ते ( सामुद्दे के० ) सामुद्रम्

एटले समुद्रथी उत्पन्न थतुं मीठुं ते, (पंसुखारे य के०) पांसुक्षारश्च एटले पांसुक्षार नामें प्रसिद्ध छे ते, (कालालोणे य के०) काललवणम् एटले मेवाडमां उत्पन्न थतुं एक जातनुं लवण छे ते, ए सौवर्चलादिक छ वस्तु (आमए के०) आमकम् एटले सचित्त होय. तो ते वापरवा नहिं कारण के, ते प्रत्येक अनाचरित छे. पूर्वोक्त उंगणचालीश अने ए सात मलीने सर्व छेतालीश अनाचरित थयां ॥ ८ ॥

(दीपिका) पुनः सौवर्चलं ४० सैंधवं पर्वतैकदेशजातम् ४१ लवणं च सांजरलवणम् ४२ रुमालवणं च खानिलवणम् ४३। एतत्सर्वमामकं सचित्तमनाचरितम्। सामुद्रं लवणमेव ४४। पांशुक्षारश्चोषरलवणं ४५। कृष्णलवणम् पर्वतैकदेशजातम् ४६। सर्वमामकं ज्ञेयम् ॥ ८ ॥

(टीका) किंच सोवच्चलेत्ति सूत्रमस्य व्याख्या। सौवर्चलं सैन्धवं लवणं च सांजरलवणं रुमालवणं च।आमकमिति सचित्तमनाचरितम्। सामुद्रं लवणमेव।पांशुक्षारश्चोषरलवणम्।कृष्णलवणं च सैन्धवलवणपर्वतैकदेशजमामकमनाचरितमिति सूत्रार्थः॥८॥

धुवणे त्ति वमणे य, वत्थीकम्मविरेयणे ॥
अंजणे दंतवणे य, गायाभंगविभूसणे ॥ ९ ॥

(अवचूरिः) धूपनमात्मवस्त्रादेः। प्राकृतशैल्या अनागतव्याधिनिवृत्तये धूपनमित्यन्ये (४६) वमनं मदनफलादिना (४७) बस्तिकर्म पुटकेनाधिष्ठाने स्नेहदानम् (४८) विरेचनं दन्त्यादिना औषधविशेषेण (४९) अञ्जनं रसाञ्जनादि (५०) दन्तकाष्ठं च प्रतीतम् (५१) गात्राभ्यंगस्तैलादिना (५२) विभूषणं गात्रस्यैव (५३) ॥ ९ ॥

(अर्थ) धुवणत्ति। (धुवणत्ति के०) धूपनमिति एटले पोतानां वस्त्रादिकने सुगंधमय थवामाटे धूपे ते, अथवा केटला एक कहेछे, के धुवणत्ति एटले धूमपानमिति एटले रोगादिकनी उत्पत्ति नहीं थवी जोइयें, तेमाटे धूमपान करवुं, ते सुडतालीशमुं धूपननामा अनाचरित. (वमणे य के०) वमनं च एटले मदनफलादिक औषध लइने वांति करवी, ते अडतालीशमुं वमननामक अनाचरित. (वत्थीकम्म के०) वस्तिकर्म एटले रोगनाशार्थ स्नेहगुटिकादिकें करी अधोद्वारे पिचकारी मारवी, ते उंगणपचाशमुं वस्तिकर्म अनाचरित. (विरेअणे के०) विरेचनम् एटले मल शोधवा माटें त्रिफलादि औषध लेवां, ते पचाशमुं विरेचन अनाचरित. (अंजणे के०) अंजनम् एटले शरीर शोभाने अर्थें कज्जलादिकें करी

नेत्र आंजवां, ते एकावनमुं अंजन अनाचरित. ( दंतवणे य के० ) दंतवर्णश्च एटले दांतण करवुं, ते बावनमुं दंतवर्णानाचरित. ( गायाभंगविभूसणे के० ) गात्राभ्यंगविभूषणे, ते गात्रे एटले शरीरने विषे अभ्यंग करवो; ते त्रेपनमुं गात्राभ्यंग अनाचरित, अने विभूषण एटले शरीर उपर अलंकार धारण करवा, ते चोपनमुं भूषण अनाचरित जाणवुं ॥ ए ॥

( दीपिका ) धूपन मात्मवस्त्रादेः सौगन्ध्यनिमित्तमथवा अनागतव्याधिनिवृत्तिनिमित्तं धूमपानमित्यन्ये व्याख्यानयन्ति ४७ । वमनं च मदनफलादिना वान्तिः ४० । तथा बस्तिकर्म पुंड्केण अधिष्ठाने स्नेहदानम् ४ए । विरेचनं दन्त्यादिना ५० । तथाञ्जनं रसाञ्जनम् ५१ दन्तकाष्ठं च प्रतीतमेव ५२ तथा गात्राभ्यङ्गस्तैलादिना ५३ विभूषणं गात्राणामेव ५४ ॥ ए ॥

( टीका ) किं च धूवणे त्ति सूत्रमस्य व्याख्या । धूपनमित्यात्मवस्त्रादेरनाचरितम् । प्राकृतशैल्या अनागतव्याधिनिवृत्तये धूमपानमित्यन्ये व्याचक्षते । वमनं मदनफलादिना । बस्तिकर्म पुटकेनाधिष्ठाने स्नेहदानम् । विरेचनं दन्त्यादिना । तथा अञ्जनं रसाञ्जनादिना । दन्तकाष्ठं च प्रतीतम् । तथा गात्राभ्यङ्गस्तैलादिना । विभूषणं गात्राणामेवेति सूत्रार्थः ॥ ए ॥

सव्वमेयमणाइन्नं, निग्गंथाण महेसिणं ॥
संजमंमि अ जुत्ताणं, लहुभूयविहारिणं ॥ १० ॥

( अवचूरिः ) क्रियासूत्रमाह । सर्वमेतदौद्देशिकादि यदनन्तरमुक्तं तदनाचीर्णं निर्ग्रन्थानां महर्षीणां साधूनामित्यर्थः । संयमे वा तपसि च युक्तानां लघुभूतो वायुस्तद्वदप्रतिबद्धतया विहारो येषाम् ॥ १० ॥

( अर्थ ) हवे पूर्वोक्त प्रकारें चोपन बोलें करी चोपन अनाचार जे वर्जवा योग्य कह्यां, ते कोणें वर्जवा ते पण प्रथम "संजमे" इत्यादि गाथामां कह्युं छे; तोपण पाछुं शिष्यने विस्मरण नहीं थाय, ते माटे फरी ए अनाचार साधुयें वर्जवा एम कहे छे. सव्वं ति ( निग्गंथाणं के० ) निर्ग्रन्थानाम् एटले बाह्याभ्यन्तर परिग्रहरहित एवा, ( महेसिणं के० ) महर्षीणाम् एटले महोटा ऋषि एवा, ( संजमंमि अ जुत्ताणं के० )

१:– आ अनाचरितनी संख्या कोइ ठेकाणें बावन कोइ ठेकाणे त्रेपन अने कोइ ठेकाणे चोपन लीधी छे. मूल सूत्रमां समासघटित शब्दमां कोइ ठेकाणे बे अनाचरित आव्या छे तेनी संख्या एकज गणीयें तो सर्व संख्या बावन थाय छे; अने जुदी गणीए तो त्रेपन तथा चोपन थाय छे.

संयमे च युक्तानाम् एटले संयमने विषे हमेश युक्त रहेला एवा (लहुभूअविहारि- णं के०) लघुभूतविहारिणां एटले थोडा उपकरणथी हलवा तेथी वायुसरखो प्र- तिबंधरहित जेमनो विहार छे एवा साधुने (एयं के०) एतत् एटले ए चोपन बोलें करी युक्त एवुं (सव्वं के०) सर्वम् एटले संपूर्ण (अणाइन्नं के०) अनाचीर्णं एटले वर्जववारूप अनाचरित ते कह्युं ॥ १० ॥

(दीपिका) अथ क्रियासूत्रमाह। सर्वमेतत् पूर्वोक्तचतुःपञ्चाशद्भेदभिन्नमौदेशिका- दिकं यत् अनन्तरमुक्तं तत्सर्वमनाचरितं ज्ञातव्यम्। केषामित्याह। निर्ग्रन्थानां मह- र्षीणां साधूनामित्यर्थः। किंभूतानाम्। संयमे चशब्दात्तपसि युक्तानाम्। पुनः किं०। लघुभूतविहारिणां लघुभूतो वायुस्तद्वत् अप्रतिबद्धतया विहारो येषां ते ॥ १० ॥

(टीका) क्रियासूत्रमाह। सव्वमेयं ति सूत्रमस्य व्याख्या। सर्वमेतदौद्देशिकादि यदनन्तरमुक्तमिदमनाचरितम्। केषामित्याह। निर्ग्रन्थानां महर्षीणां साधूनामित्याह। त एव विशेष्यन्ते। संयमे चशब्दात्तपसि युक्तानामभियुक्तानां लघुभूतविहारिणां लघुभूतो वायुः। ततश्च वायुभूतोऽप्रतिबद्धतया विहारो येषां ते लघुभूतविहारिण- स्तेषां निगमनक्रियापदमेतदिति सूत्रार्थः ॥ १० ॥

पंचासवपरिन्नाया, तिगुत्ता छसु संजया ॥
पंचनिग्गहणा धीरा, निग्गंथा उज्जुदंसिणो ॥ ११ ॥

(अवचूरिः) किमित्यनाचरितं यतस्त एवंभूता भवन्तीत्याह पञ्चाश्रवा हिंसा- दयः परि समंताज्ज्ञातायैस्ते यत ईदृशा अतस्त्रिगुप्ताः पञ्चानामिन्द्रियाणां निगृह्ण- न्तीति निग्रहणाः। धीरा बुद्धिमन्तः स्थिरा वा निर्ग्रंथाः साधव ऋजुर्मोक्षं प्रति ऋजु- त्वात् संयमस्तं पश्यन्ति उपादेयतया संयमप्रतिबद्धा इत्यर्थः ॥ ११ ॥

(अर्थ.) हवे पूर्वोक्त साधुनां लक्षण कहे छे. पंचासवत्ति. (पंचासवपरिन्नाया के०) पंचाश्रवपरिज्ञाताः एटले हिंसादिक पांच आश्रवोने यावज्जीव जेमणें पच्चख्या छे एवा, (तिगुत्ता के०) त्रिगुप्ताः एटले मन, वचन अने काय ए त्रणें करी गुप्त, अर्थात् मनोगुप्ति, वचनगुप्ति अने कायगुप्ति एना धारण करनार, (छसु संजया के०) षट्सु संयताः एटले षड्जीवनिकायने विषे संयत, अर्थात् षड्जीवनिकाय उपर दया राखनार, (पंचनिग्गहणा के०) पंचनिग्रहणाः, पंचानां एटले दर्शन, रसन, घ्राण, स्पर्शन अने श्रवण ए पांच इंद्रियोने निग्रहणा एटले वश राखनार, अर्थात् जितें- द्रिय एवा, (धीरा के०) सातभयें करी रहित, (उज्जुदंसिणो के०) ऋजुदर्शिनः

एटले मोक्षमार्गने विषे सरल एवा संयमने जोनार अर्थात् उपयोगथी संयमना पालक एवा ( निग्गंथा के० ) निर्ग्रंथाः एटले निर्ग्रंथ साधुउं होय ले. ॥ ११ ॥

( दीपिका ) किमित्यनाचरितं यतस्त एवंभूता भवन्तीत्याह। किंभूतास्ते साधवः। पञ्च च ते आश्रवाश्च पञ्चाश्रवाः हिंसादयः परि समन्तात् ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया प्रत्याख्याता यैस्ते पञ्चाश्रवपरिज्ञाताः। यतः कारणात् ते एवंभूता अतएव त्रिगुप्ता मनोवाक्कायगुप्तिभिर्गुप्ताः। पुनः किं०। ठसु संजया षट्सु जीवनिकायेषु पृथिव्यादिषु सामस्त्येन यता यत्नवन्तः। पुनः किं०। पञ्चनिग्रहणाः पञ्चानामिन्द्रियाणां निग्रहणा निरोधकर्त्तारः। पुनः किं०। धीरा बुद्धिमन्तः स्थिरा वा। पुनः किंभूताः साधवः। ऋजुदर्शिनः। ऋजुर्मोक्षं प्रति ऋजुत्वात् संयमस्तं पश्यन्ति उपादेयतया इति ऋजुदर्शिनः संयमप्रतिबद्धाः ॥ ११ ॥

( टीका ) किमित्यनाचरितं यतस्त एवंभूता भवन्तीत्याह। पंचासवसूत्रम्। अस्य व्याख्या। पञ्चाश्रवा हिंसादयः परिज्ञाता द्विविधया परिज्ञया ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च परि समन्ताज्ज्ञाता यैस्ते पञ्चाश्रवपरिज्ञाताः। आहिताग्न्यादेराकृतिगणत्वान्न निष्ठायाः पूर्वनिपात इति समासो युक्त एव। परिज्ञातपञ्चाश्रवा इति वा। यत एव चैवंभूता अत एव त्रिगुप्ता मनोवाक्कायगुप्तिभिः। षट्संयताः षट्सु जीवनिकायेषु पृथिव्यादिषु सामस्त्येन यताः। पञ्चनिग्रहणा इति। निगृह्णन्तीति निग्रहणाः। कर्तरि ल्युट्। पञ्चानां निग्रहणाः। पञ्चानामितीन्द्रियाणाम्। धीरा बुद्धिमन्तः स्थिरा वा। निर्ग्रन्थाः साधवः। ऋजुदर्शिन इति। ऋजुर्मोक्षं प्रति ऋजुत्वात्संयमस्तं पश्यन्त्युपादेयतयेति ऋजुदर्शिनः संयमप्रतिबद्धाः। इति सूत्रार्थः ॥ ११ ॥

आयावयंति गिम्हेसु, हेमंतेसु अवाउडा ॥
वासासु पडिसंलीणा, संजया सुसमाहिया ॥ १२ ॥

( अवचूरिः ) ते चैतत्कुर्वन्ति आतापयन्ति ग्रीष्मेषु आतापनां कुर्वन्ति हेमन्तेषु शीतकालेषु अप्रावृता वर्षासु प्रतिसंलीना एकाश्रयस्थाः संयताः साधवः सुसमाहिता ज्ञानादियत्नपराः। ग्रीष्मादिषु बहुवचनं प्रतिवर्षं करणज्ञापनार्थम् ॥ १२ ॥

( अर्थ. ) हवे ते पूर्वोक्तगाथामां कहेला ऋजुदर्शी साधुउं समयने जोइने जे प्रमाणें करे ले, ते कहे ले. जे साधुउं ( गिम्हेसु के० ) ग्रीष्मेषु एटले ग्रीष्मकालने विषे अर्थात् उन्हालामां ( आयावयंति के० ) आतापयंति एटले अतापना करे ले, ( हेमंतेसु के० ) हेमंतेषु एटले हेमंतऋतु अर्थात् शियालाने विषे ( अवा-

उडा के० ) अप्रावृताः एटले वस्त्ररहित थका शीतपरीषह सहन करे छे, ( वासासु के० ) वर्षासु एटले वर्षाकालनेविषे ( पडिसंलीणा के० ) प्रतिसंलीनाः एटले एक स्थानकने विषे अंगोपांग संवरीने बेसे छे, एवा ते ( संजया के० ) संयताः एटले संयमना पालक साधु ( सुसमाहिया के० ) सुसमाहिताः एटले ज्ञानादिकने विषे यत्न करनार थाय छे ॥ १२ ॥

( दीपिका ) ते च ऋजुदर्शिनः कालं प्रस्तावमधिकृत्य यथाशक्ति एवं कुर्वन्ति । तथाहि आतापयन्ति ऊर्ध्वस्थानादिना आतापनाः कुर्वन्ति । कदा ग्रीष्मेषु उष्णकालेषु । पुनः कीदृशाः । हेमन्तेषु शीतकालेषु अप्रावृताः प्रावरणरहितास्तिष्ठन्ति । तथा वर्षासु वर्षाकालेषु प्रतिसंलीना एकाश्रयस्था भवन्ति । संयताः साधवः । पुनः किंभूताः । सुसमाहिता ज्ञानादिषु यत्नपराः ॥ १२ ॥

( टीका ) ते च ऋजुदर्शिनः कालमधिकृत्य यथाशक्त्येतत्कुर्वन्ति । आयावयंति त्ति सूत्रम् । अस्य व्याख्या । आतापयन्त्यूर्ध्वस्थानादिना आतापनां कुर्वन्ति ग्रीष्मेषूष्णकालेषु। तथा हेमन्तेषु शीतकालेष्वप्रावृता इति प्रावरणरहितास्तिष्ठन्ति । तथा वर्षासु वर्षाकालेषु संलीना इत्येकाश्रयस्था भवन्ति । संयताः साधवः सुसमाहिता ज्ञानादिषु यत्नपराः । ग्रीष्मादिषु बहुवचनं प्रतिवर्षकरणज्ञापनार्थमिति सूत्रार्थः ॥१२॥

परीसहरिउदंता, धूअमोहा जिइंदिया ॥
सवदुक्खपहीणठा, पक्कमंति महेसिणो ॥ १३ ॥

( अवचूरिः ) एतेषां फलमाह । दुःकराणि कृत्वा परीषहा एव रिपवस्ते दान्ता उपशमं नीता यैस्ते धूतमोहाः । मोहोऽज्ञानम् । जितेन्द्रियाः शब्दादिषु रागद्वेषरहिताः सर्वदुःखक्षयार्थं प्रक्रामन्ति प्रवर्तन्ते महर्षयः ॥ १३ ॥

( अर्थ. ) परीसहत्ति. वली, ( परीसहरिउदंता के० ) परिषहरिपुदांताः एटले क्षुधातृषादिक बावीस परीषह रूप जे शत्रुउ तेमने जेमणें जीत्या छे एवा, तथा ( धूअमोहा के० ) धूतमोहाः एटले जेमणें पोतानो मोह दूर कस्यो छे, वली ( जिइंदिया के० ) जितेंद्रियाः एटले इंद्रियोना शब्दादिक विषयोने विषे रागद्वेषरहित एवा, ( महेसिणो के० ) महर्षयः एटले महामुनि साधुउ ( सवदुक्खपहीणठा के० ) सर्वदुःखप्रक्षयार्थम् एटले शारीर, मानसिक विगेरे सर्व दुःखरूप आठ कर्म खपाववा माटे, ( पक्कमंति के० ) प्रक्रामंति एटले उद्यम करे छे. ॥ १३ ॥

( दीपिका ) पुनः किं० । परीषहा एव रिपवस्ते दान्ता उपशमं नीता यैस्ते । पुनः

किं० । धुतो मोहोऽज्ञानं यैस्ते । पुनः किं० । जितेन्द्रियाः शब्दादिविषयेषु रागद्वेषरहिताः । त एवंविधाः सर्वदुःखक्षयनिमित्तं प्रक्रामन्ति प्रवर्त्तन्ते । किंभूताः । महर्षयः ॥१३॥

(टीका) परीसहत्ति सूत्रम् । अस्य व्याख्या । मार्गाच्यवननिर्जरार्थं परिषोढव्याः क्षुत्पिपासादयः त एव रिपवस्तत्तुल्यधर्मत्वात्परीषहरिपवस्ते दान्ता उपशमं नीता यैस्ते परीषहरिपुदान्ताः । समासः पूर्ववत् । तथा धुतमोहा विक्षिप्तमोहा इत्यर्थः । मोहोऽज्ञानम् । तथा जितेन्द्रियाः शब्दादिषु रागद्वेषरहिता इत्यर्थः । त एवंभूताः सर्वदुःखप्रक्षयार्थं शारीरमानसाशेषदुःखप्रक्षयनिमित्तं प्रक्रामन्ति प्रवर्तन्ते । किंभूताः । महर्षयः साधव इति सूत्रार्थः ॥ १३ ॥

दुक्कराइं करित्ताणं, दुस्सहाइं सहेत्तु य ॥
केइ त्थ देवलोएसु, केइ सिज्झंति नीरया ॥ १४ ॥

(अवचूरिः) औद्देशिकादित्यागादीनि दुस्सहानि सहित्वातापनादीनि । केचनात्र देवलोकेषु सौधर्मादिषु गच्छन्तीति वाक्यशेषः । केचन सिद्धिं तेनैव भवेन सिद्धिं प्राप्नुवन्ति । नीरजस्का अष्टविधकर्ममुक्ताः । नत्वेकेन्द्रिया इव । वर्तमाननिर्देशस्त्रिकालविषयज्ञापनार्थः ॥ १४ ॥

(अर्थ.) पूर्वोक्त प्रकारें आचरण करनारा साधुने शुं फल थाय छे, ते कहे छे. दुक्कराइं ति. (दुक्कराइं के०) दुष्कराणि एटले आचरवाने अशक्य एवा "उद्देसियं" इत्यादि गाथाउंमां कहेला धर्मने (करित्ताणं के०) कृत्वा एटले आचरण करीने, अर्थात् पालन करीने, तथा (दुस्सहाइं के०) दुःसहानि एटले सहन करवाने अशक्य एवा आतापनादिकने (सहित्तु य के०) सहित्वा च एटले सहन करीने (केइ के०) केचित् एटले केटलाएक (अत्र के०) अत्र एटले आ (देवलोगेसु के०) देवलोकेषु एटले सौधर्मादिक देवलोकने विषे जाय छे, तथा (केइ के०) केचित् एटले केटलाक (नीरया के०) नीरजसः एटले कर्मरूप रजेंकरी रहित थका आ लोकमांज (सिज्झंति के०) सिध्यंति एटले सिद्ध थाय छे ॥ १४ ॥

(दीपिका) अथैतेषां फलमाह । एवं दुःकराणि औद्देशिकादित्यागादीनि कृत्वा तथा दुःसहानि आतापनादीनि सहित्वा केचन अत्र देवलोकेषु सौधर्मादिषु गच्छन्ति । इति शेषः । केचन सिद्ध्यन्ति तेनैव भवेन सिद्धिं प्राप्नुवन्ति । किंभूताः । नीरया । निर्गतं रजोऽष्टविधं कर्म येभ्यस्ते अष्टविधकर्मविप्रमुक्ताः नतु एकेन्द्रिया इव कर्मयुक्ताः ॥ १४ ॥

( टीका ) इदानीमेतेषां फलमाह । दुक्कराइ त्ति सूत्रम् । अस्य व्याख्या । एवं दुष्कराणि कृत्वौद्देशिकादित्यागादीनि तथा दुःसहानि सहित्वातापनादीनि । केचन तत्र देवलोकेषु सौधर्मादिषु गच्छन्तीति वाक्यशेषः । तथा केचन सिद्ध्यन्ति तेनैव भवेन सिद्धिं प्राप्नुवन्ति । वर्तमाननिर्देशः सूत्रस्य त्रिकालविषयत्वज्ञापनार्थः । नीरजस्का इत्यष्टविधकर्मविप्रमुक्ता न त्वेकेन्द्रिया इव कर्मयुक्ता एवेति सूत्रार्थः ॥ १४ ॥

खवित्ता पुव्वकम्माइं, संजमेण तवेण य ॥
सिद्धि मग्गमणुप्पत्ता, ताइणो परिणिव्वुडे त्ति [illegible] ॥ १५ ॥
इइ खुड्डुयायारकहज्झयणा तइया ॥ ३ ॥

---

( अवचूरिः ) ये देवलोके गतास्तेषां स्वरूपं तदाह । ततश्च्युत्वा क्षपित्वा पूर्वकर्माणि सावशेषाणि । केन । संयमेनोक्तलक्षणेन तपसा च सिद्धिमार्गं सम्यग्दर्शनादिरूपमनुप्राप्ताः सन्तस्त्रातारश्चात्मादीनां परिनिर्वान्ति सिद्धिं प्राप्नुवन्ति ॥ १५ ॥
इति क्षुल्लकाचारकथाख्यतृतीयाध्ययनावचूरिः ॥ ३ ॥

---

( अर्थ. ) हवे, जे साधु पूर्वोक्त धर्म पालीने देवलोके जाय छे, ते पण त्यांथी चव्या पछी आ आर्यदेशमां सत्कुलने विषे उपजीने सिद्ध थाय छे, ते कहे छे. खवित्तत्ति. देवलोकमांथी च्यवीने आलोकमांहे आवेला साधु ( संजमेण के० ) संयमेन एटले सत्तर भेदना संयमें करी, (तवेण य के०) तपसा च एटले बार प्रकारना तपें करी ( पुव्वकम्माइं के० ) पूर्वकर्माणि एटले पूर्वभवें करेला कर्मने ( खवित्ता के० ) क्षपयित्वा एटले खपावीने ( सिद्धिमग्गं के० ) सिद्धिमार्गं एटले मोक्षना मार्गप्रतें ( अणुप्पत्ता के० ) अनुप्राप्ताः एटले प्राप्त थयेला एवा ( ताइणो के० ) तायिनः एटले छकायजीवनुं पालन करनारा एवा साधु ( परिनिव्वुडे के० ) परिनिर्वान्ति एटले सर्वप्रकारें सिद्धिने पामे छे. त्तिबेमि ए पदनो अर्थ पूर्ववत् जाणवो. आ अध्ययनमां, साधुए आचारने विषेज धृति राखवी, परंतु अनाचार विषे राखवी नहीं एम कह्युं. ॥ १५ ॥ इति क्षुल्लकाचार कथा नामा अध्ययननो बालावबोध संपूर्ण ॥ ३ ॥

---

( दीपिका ) ये च एवंविधानुष्ठानतो देवलोकेषु गच्छन्ति तेऽपि ततश्च्युत्वा आर्यदेशे सुकुले जन्म प्राप्य शीघ्रं सिद्ध्यन्त्येव एतदाह । ते देवलोकात् क्षपयित्वा पूर्वकर्माणि अवशिष्टानि । केन इत्याह । संयमेन उक्तरूपेण सप्तदशभेदेन पुनः तपसा द्वादशविधेन सिद्धिमार्गं सम्यग्दर्शनादिलक्षणम् अनुप्राप्ताः सन्तः त्रातार आत्मा-

दीनां परिनिर्वान्ति सिद्धिं प्राप्नुवन्ति । इतिः समाप्तौ । ब्रवीमि इति न स्वबुद्ध्या किंतु तीर्थकरगणधरोपदेशेन ॥ १५ ॥

इति श्रीदशवैकालिकशब्दार्थवृत्तौ श्रीसमयसुन्दरोपाध्यायविरचितायां क्षुल्लकाचारकथाख्यं तृतीयमध्ययनं समाप्तम् ॥ ३ ॥

---

( टीका ) येऽपि चैवंविधानुष्ठानतो देवलोकेषु गच्छन्ति । तेऽपि ततश्च्युता आर्यदेशेषु सुकुले जन्मावाप्य शीघ्रं सिद्ध्यन्त्येवेत्याह । खवित्त त्ति सूत्रमस्य व्याख्या । ते देवलोकच्युताः क्षपयित्वा पूर्वकर्माणि सावशेषाणि । केनेत्याह । संयमेनोक्तलक्षणेन तपसा च एवं प्रवाहेण ॥ सिद्धिमार्गं सम्यग्दर्शनादिलक्षणमनुप्राप्ताः सन्तस्त्रातार आत्मादीनां परिनिर्वान्ति सर्वथा सिद्धिं प्राप्नुवन्ति। अन्ये तु पठन्ति। परिनिव्वुडत्ति। तत्रापि प्राकृतशैल्या छान्दसत्वाच्चायमेव पाठो ज्यायानिति । ब्रवीमीति पूर्ववदिति सूत्रार्थः । उक्तोऽनुगमः सांप्रतं नयाः । ते च पूर्ववद्द्रष्टव्याः। इति व्याख्यातं क्षुल्लकाचारकथाध्ययनम् ॥ ३ ॥ इति श्रीदशवैकालिके हरिभद्रसूरिकृतटीकायां तृतीयमध्ययनम् ॥ ३ ॥

अथ चतुर्थाध्ययनम् ।

सुअं मे आउसंतेणं भगवया एवम क्खायं इह
खलु छज्जीवणिया नामज्झयणं समणेणं भगवया
महावीरेणं कासवेणं पवेइया सुअक्खाया सुप-
न्नत्ता सेअं मे अहिज्जिउं अज्झयणं धम्मपन्नत्ती ॥

---

( अवचूरिः ) अथ चतुर्थाध्ययनावचूरिः । अनन्तराध्ययने धृतिराचारे कार्या इत्युक्तम् । सा च षड्जीवनिकायगोचरेति स उच्यते । श्रुतमाकर्णितम् । मे मया । आयुरस्यास्तीत्यायुष्मान् । तस्यामन्त्रणं हे आयुष्मन् । कः कमेवमाह । गौतमः सुधर्मस्वामी वा जंबूस्वामिनं प्रति । भगः समग्रैश्वर्यादिः सोऽस्यास्तीति भगवांस्तेन भगवता भुवनभर्त्रा वर्धमानस्वामिनेत्यर्थः । एवमिति प्रकारवचनः शब्दः । आख्यातमिति केवलज्ञानेनोपलभ्यावेदितम् । इहेति लोके प्रवचने वा खलुशब्दान्नान्यतीर्थकृत्प्रवचनेषु । षड् जीवनिकायाः प्रतिपाद्यत्वेन विद्यन्ते यस्यां ग्रन्थपद्धतौ सा षड्जीवनिकायिकेति । पूर्ववन्नामेत्यभिधानम् । अध्ययनं श्रुतविशेषः । इह च श्रुतं मया इत्यात्मपरामर्षेणैकान्तक्षणभङ्गापोहमाह । तत्रेत्थंभूतार्थानुपपत्तेरिति । उक्तं च । एगंतखणियपक्खे, गहणं चिअ सव्वहानवछाणं ॥ अनुसरणसासणाइं, कुत्त उ तेलुक्कसिद्धाइं ॥ १ ॥ तथायुष्मन्निति प्रधानगुणनिष्पन्नेनामन्त्रणवचसा गुणवते शिष्यायागमरहस्यं देयम् नागुणवत

इत्याह तदनुकम्पाप्रवृत्तेरिति। उक्तं च ॥ आमे घडेनिहित्तं, जहा जलं तं घडं विणासेइ ॥ इय सिद्धंतरहस्सं, अप्पाहारं विणासेइ ॥ १ ॥ आयुश्च प्रधानो गुणः सति तस्मिन्नव्यवछित्तिन्नावात् तथा तेन नगवता एवमाख्यातमिति। अनेन स्वमनीषिकानिरासाच्छास्त्रपारतन्त्र्यप्रदर्शनेन । नह्यसर्वज्ञेनात्मवतान्यतस्तथान्नूतात्सम्यगनिश्चित्य परलोकदेशना कार्येत्येतदाह । विपर्ययसंनवादित्युक्तं च ॥ किं एत्तो पावयरं, सम्मं अणहिगयधम्मसप्नावो ॥ अन्नं कुदेसणाए कठ्ठे रागम्मि पाडेइ ॥ १ ॥ अथवान्यथा व्याख्यायते सूत्रैकदेशः। आउसंतेणं ति नगवत एव विशेषणम्। आयुष्मता नगवता चिरजीविनेत्यर्थः। मङ्गलवचनं चैतदथवा जीविना साक्षादेवानेन च गणधरपरंपरागमस्य जीवनविमुक्तानादिशुद्धवक्तुश्चापोहमाह । देहाद्यन्नावेन तथाविधप्रयत्नान्नावादित्युक्तं च ॥ वयणं न काययोगा–नावेण य सो य अणादिसुद्धस्स । गहणंमि य नो हेऊ, सब्बं अत्तागमो कहणु ॥ १ ॥ अथवा आवसंतेणंति । गुरुमूलमावसता। अनेन च शिष्येण गुरुचरणसेविना सदा नाव्यमित्येतदाह ॥ ज्ञानादिवृद्धिसन्नावादुक्तं च ॥ नाणस्स होइ नागी, थिरयरउ दंसणे चरित्ते य ॥ धन्ना आवकहाए, गुरुकुलवासं न मुंचंति ॥ १ ॥ अथवा । आउसंतेणं। आमृशता नगवत्पादारविंदयुगलमुत्तमांगेन। अनेन च विनयप्रतिपत्तेर्गरीयस्त्वमाह । विनयस्य मोक्षमूलत्वात्। उक्तंच ॥ मूलं संसारस्स उ होंति कसाया अणंतपत्तस्स ॥ विणउ गणपउत्तो, डुक्खविमोक्खस्स हेउ त्ति ॥ १ ॥ कृतं प्रसंगेन प्रकृतमनुसरामः अत्र खलु षड्जीवनिकायिकानामाध्ययनमस्तीत्युक्तं सा च नगवता समग्रैश्वर्यादियुक्तेन महावीरेण काश्यपगोत्रेण प्रवेदिता केवलालोकेन । प्रकर्षेण वेदिता ज्ञाता इत्यर्थः। स्वाख्याता सदेवमनुष्यासुरायां पर्षदि कथिता सुष्ठु आख्याता। सुप्रज्ञप्ता। सूक्ष्मपरिहारासेवनेन स्वयं सम्यग् सेविता। सुष्ठु प्रज्ञप्ता वा आप्ता आसेवनद्वारेणात्मसात्कृता अनेकार्थत्वाद्धातूनां ज्ञपिरासेवनार्थः। तां चैवंन्नूतां षड्जीवनिकां श्रेयो मेऽध्येतुं पठितुं। ढान्दसत्वात्सामान्येन ममेत्यात्मनिर्देश इत्यन्ये। ततश्च श्रेय आत्मनोऽध्येतुमिति पठितुं श्रोतुं नावयितुं। कुत इत्याह। अध्ययनं धर्मप्रज्ञप्तिः । निमित्तकारणहेतुषु सर्वासां प्रायो दर्शनमिति वचनात् हेतौ प्रथमा। अध्ययनत्वात् अध्यात्मानयनाच्चेतसो विशुद्ध्यापादनादित्यर्थः। एतदेव कुत इत्याह। धर्मप्रज्ञप्तेः। प्रज्ञापनं प्रज्ञप्तिः। धर्मस्य प्रज्ञप्तिः ततो धर्मप्रज्ञप्तेः कारणाच्चेतसो विशुद्ध्यापादनाच्च धर्मप्रज्ञप्तिः। श्रेय आत्मनोऽध्येतुम्। अन्ये तु व्याचक्षते अध्ययनं धर्मप्रज्ञप्तिरिति पूर्वोपन्यस्ताध्ययनस्यैवोपादेयतया अनुवादमात्रमेतदिति ॥ १ ॥

( अर्थ. ) हवे चोथुं षड्जीवनिका नामक अध्ययन कहे छे. ए अध्ययननो आ प्रमाणे संबध छे केः—पूर्वोक्त कुल्लकाचारकथानामक अध्ययनमां कह्युं के, साधुए धृति जे राखवी ते आचारने विषेज राखवी, परंतु अनाचारविषे राखवी नहीं. ते आचार जे छे, ते घणुं करीने षड्जीवनिकायने आश्रयेंज छे, कह्युं छे केः— "छसु जीवनिकाएसु, जे बुहे संजए सया ॥ सो चेव होइ विसेए, परमछेण संजए ॥ १ ॥ " इति. माटे षड्जीवनिकायनुं व्याख्यान करवुं जोइयें. एवा संबंधथी आ अध्ययननी प्राप्ति थई. आ अध्ययनमां षड्जीवनिकायनुं विजागपूर्वक व्याख्यान कर्युं छे, माटे एने षड्जीवनिका एवे नामें करी कहे छे. हवे सूत्रनो अर्थ ॥ सुयं मे इति. सुधर्मास्वामी जंबूप्रतें कहे छे. ( आउसंतेणं के० ) हे आयुष्मन् ! एटले जेने परिपूर्ण आयुष्य छे एवा हे शिष्य ( मे के० ) मया एटले में ( सुयं के० ) श्रुतं एटले सांजल्युं छे, के ( नगवया के० ) नगवता, नगशब्दें करी परिपूर्ण एवा ऐश्वर्य, रूप, कीर्त्ति, श्री, धर्म अने प्रयत्न ए छ वस्तु लेवी. कह्युं छे के, " ऐश्वर्यस्य समग्रस्य, रूपस्य यशसः श्रियः ॥ ज्ञानवैराग्ययोश्चापि, षम्णां नग इतीङ्गना ॥ १ ॥ " ते जेमने छे, तेमने नगवान् कहिये. अर्थात् ऐश्वर्यादिक छ वस्तु जेमनी पासें परिपूर्ण छे एवा श्रीमहावीरस्वामीए ( एवं के० ) वक्ष्यमाणप्रकारें ( अरकायं के० ) आख्यातं एटले केवलज्ञानथी जाणीने कह्युं छे के, ( इह के० ) ए दशवैकालिक सूत्रनेविषे ( खलु के० ) निश्चयें करी ( छज्जीवणियाणामज्ञयणं के० ) षड्जीवनिकानामक अध्ययन छे. एमां शिष्यने आमंत्रण करवामाटे बीजुं पद न लेतां ' आउसंतेणं ' एज पद लीधुं छे, तेनुं तात्पर्य ए छे के, गुणवान् जे शिष्य छे, तेनेज आगमनुं रहस्य केहवुं, बीजाने केहवुं नही, कह्युं छे केः— " आमे घडे निहित्तं, जहा जलं तं घडं विणासेइ ॥ इअ सिद्धंतरस्सं, अप्पाहारं विणासेइ ॥ १ ॥ इति ॥ " माटे योग्यशिष्यनेज कहेवुं जोइयें तो शिष्यना गुण जे छे, तेमां आयुष्य छे ते प्रधान गुण छे, कारण के, तेनो अन्नाव होय तो बीजी बधी सामग्रीनो कांइ उपयोग नथी, माटे " आयुष्मन् " एम संबोधन कर्युं. अथवा आउसंतेणं ए नगवंतनुंज विशेषण करवुं. ते एवीरीतेः— आयुष्मता एटले चिरंजीव एवा नगवानें एम कह्युं छे. इति. अथवा ( आवसंतेणं के० ) आवसता एटले गुरुकुलनेविषे वास करनारा एवा ( मे के० ) मया एटले में सांजल्युं छे. एवो अर्थ करवो. तेथी एम सूचवे छे के, शिष्यें गुरुकुलने विषे रहीने निरंतर गुरुचरणनी सेवा करवी. अथवा ( आउसंतेणं के० ) आमृशता एटले नगवत्पादारविंदयुगलनेविषे मस्तकें करी स्पर्श करनारा एवा में सांजल्युं छे. एवो अर्थ करवो.

तेथी एम सिद्ध थाय छे के, शिष्यें गुरुनो विनय सारीरीतें साचववो. कारण के धर्मनुं मूल विनय छे, कह्युं छे केः–"मूलं संसारस्स य, होंति कसाया अणंतपत्तस्स ॥ विणउ ठाणपउत्तो, डुक्खविमुक्कस्स मोक्खस्स ॥ १ ॥ इति " अस्तु. षड्जीवनिकानामक अध्ययन छे एम कह्युं. ते षड्जीवनिकायिका कोणें कही ते कहे छे. ( समणेणं के० ) श्रमणेन एटले महातपस्वी एवा, ( जगवया के० ) समग्रैश्वर्यादिसंपन्न एवा, ( कासवेणं के० ) काश्यपेन एटले काश्यप गोत्र जेमनुं छे एवा, ( महावीरेणं के० ) महावीरेण एटले कषायादिशत्रुने जीतवामां महोटा वीर एवा वर्धमान स्वामीए; कह्युं छे केः–विदारयति यत्कर्म, तपसा च विराजते ॥ तपोवीर्येण युक्तश्च, तस्माद्वीर इति स्मृतः ॥ १ ॥ इति ॥ ( पवेइया के० ) प्रवेदिता एटले अलौकिकप्रजावथी जाणी, तथा ( सुअरकाया के० ) स्वाख्याता एटले सुरासुरमनुष्ययुक्त एवा समवसरण मध्ये रूडी रीते कही, तथा ( सुपन्नत्ता के० ) सुप्रज्ञप्ता एटले जेम कही तेमज अतिशयेंकरी पोते सेवन करी. अर्थात् आचरण करी. ते कारण माटे एवी षड्जीवनिकानुं ( अहिज्जिउं के० ) अध्येतुं एटले अध्ययन करवाथी ( मे के०) मारुं एटले आत्मानुं ( सेयं के० ) श्रेयः एटले कल्याण छे. कारण के, ( अज्झयणं के० ) ए अध्ययन जे छे ते ( धम्मपन्नत्ती के० ) धर्मप्रज्ञप्तिरूप छे, एटले एमां धर्मनी प्ररूपणा करी छे, तेथी आत्मानुं कल्याण निश्चयें करी थशेज ॥ १ ॥

---

( दीपिका ) व्याख्यातं क्षुल्लकाचारकथाख्यं तृतीयमध्ययनम्। अथ चतुर्थं षड्जीवनिकाख्यमध्ययनं व्याख्यायते । पूर्वोक्ताध्ययनेन अस्याध्ययनस्य अयं संबन्धः। पूर्वं साधुना आचारे धृतिः कार्या नत्वनाचार इत्युक्तम् । अयमेव च आत्मसंयमे उपायः।सच आचारः षड्जीवनिकायगोचरः।अतः षड्जीवनिकायाः प्रोच्यन्ते । तत्र सूत्रम्। श्रुतं अवधारितं मे इति मया अत्र श्रीसुधर्मस्वामी श्रीजम्बूस्वामिनं प्राह। हे आयुष्मन्। आयुरस्यास्तीति आयुष्मान् तस्य संबोधनं तेन जगत्प्रसिद्धेन जगवता समग्रैश्वर्यादियुक्तेन श्रीवर्धमानस्वामिना एवंप्रकारं वक्ष्यमाणमाख्यातं केवलज्ञानेन उपलज्य कथितम्। अथवा आउसंतेणं ति समग्रं जगवतो विशेषणम्। किंजूतेन जगवता आउसंतेणं आयुष्मता चिरजीविना इत्यर्थः।मङ्गलवचनमेतत्। अथवा आवसंतेणं ति पाठे मया इत्यस्य विशेषणम्। किंजूतेन मया। आवसता गुरुपादमूलसेविना। अथवा आमुसंतेणं ति पाठे किंजूतेन मया। आमृशता जगवत्पादारविन्दयुगलं मस्तकेन। अनेन गुरुविनयप्रतिपत्तिरुक्ता । किंजूतेन जगवता आख्यातम् इति पृष्टे आह। एषा खलु षड्जीवनिका नामाध्ययनं श्रमणेन महातपस्विना जगवता समग्रैश्वर्यादियुक्तेन महावीरेण कषायादिवैरिजयात् महासुजटेन किंजूतेन काश्यपेन

काश्यपगोत्रेण प्रवेदिता ज्ञाता । न कुतश्चित् आकर्ण्य ज्ञाता किंतु स्वयमेव केवलज्ञानेन प्रकर्षेण विदिता ज्ञाता । पुनः स्वाख्याता सुष्टु द्वादशपर्षन्मध्ये आख्याता । तथा सुप्रज्ञप्ता यथैव स्वाख्याता तथैव सूक्ष्मपरिहारासेवनेन प्रकर्षेण सम्यग् आसेविता इत्यर्थः । तां चैवंभूतां षड्जीवनिकां श्रेयो मे मम अध्येतुं श्रेयः पथ्यं हितं पठितुं श्रोतुं भावयितुम् । कुत इत्याह । अध्ययनं धर्मप्रज्ञप्तिः । निमित्तकारणहेतुषु सर्वासां प्रायो दर्शनमिति वचनात् । हेतौ प्रथमा । अध्ययनत्वात् अध्यात्मानयनाच्चेतसो विशुद्धापादनं चेतोविशुद्ध्यापादनाच्च श्रेय आत्मनोऽध्येतुमिति । अन्ये व्याचक्षते । अध्ययनं धर्मप्रज्ञप्तिरिति । पूर्वमुपन्यस्तस्य अध्ययनस्यैव उपादेयतया अनुवादमात्रम् ॥ १ ॥

---

( टीका ) इदानीं षड्जीवनिकायाख्यमारभ्यते अस्यचायमभिसंबन्धः । इहानन्तराध्ययने साधुना धृतिराचारे कार्या नत्वनाचारे अयमेव चात्मसंयमोपाय इत्युक्तम् । इह पुनः स आचारः षड्जीवनिकायगोचरः प्राय इत्येतदुच्यते । उक्तं च ॥ " छसु जीवनिकाएसु, जे बुहे संजए सया ॥ से चेव होइ विसेए, परमछेण संजए ॥१॥ " इत्यनेनाभिसंबन्धेनायातमिदमध्ययनम् । आह च भाष्यकारः ॥ जीवाहारो भन्नइ, आयारो तेणिमं तु आयायं ॥ छज्जीवणियज्झयणं, तस्सहिगारा इमे होंति ॥ २२२ ॥ व्याख्या ॥ जीवाधारो भण्यत आचारः । तत्परिज्ञानपालनद्वारेणेति भावः । येनैतदेवं तेनेदमायातमवसरप्राप्तम् । किं तदित्याह । षड्जीवनिकाध्ययनम् । अत्रान्तरे अनुयोगद्वारोपन्यासावसरः । तथा चाह । तस्य षड्जीवनिकाध्ययनस्यार्थाधिकारा एते भवन्ति वक्ष्यमाणलक्षणा इति गाथार्थः । तानाह ॥ जीवाजीवाहिगमो, चरित्तधम्मो तहेव जयणा य ॥ उवएसो धम्मफलं, छज्जीवणियाइ अहिगारा ॥ २२३ ॥ ॥ व्याख्या ॥ जीवाजीवाभिगमो जीवाजीवस्वरूपम् । अभिगम्यतेऽस्मिन्नित्यभिगम इति कृत्वा स्वरूपे च सत्यभिगम्यत इति भावः । तथा चारित्रधर्मः प्राणातिपातादिनिवृत्तिरूपः । तथैव यतना च पृथिव्यादिष्वारम्भपरिहारयत्नरूपा । तथा उपदेशः यथात्मा न बध्यत इत्यादिविषयः । तथा धर्मफलमनुत्तरज्ञानादि । एते षड्जीवनिकाया अधिकाराः । इति गाथार्थः । अत्रान्तरे गत उपक्रमः । निक्षेपमधिकृत्याह ॥ छज्जीवणियाए खलु, निक्खेवो होइ नामनिप्फन्नो ॥ एएसिं तिण्हं पि उ, पत्तेयपरूवणं वोछं ॥ २२४ ॥ व्याख्या ॥ षड्जीवनिकायाः प्रक्रान्तायाः खल्विति पूरणार्थो निपातः । निक्षेपो भवति नामनिष्पन्नः षड्जीवनिकायिकेत्ययमेव । यत एवमत एतेषां त्रयाणामपि षड्जीवनिकायपदानां प्रत्येकमित्येकमेकं प्रति प्ररूपणां सूत्रानुसारेण वक्ष्येऽभिधास्य इति गाथार्थः । तत्रैकस्याभावे षण्णामभाव इत्येकप्ररू-

पणामाह ॥ णामं ठवणा दविए, माउगपयसंगहेक्कए चेव ॥ पज्जवभावे य तहा, सत्तेए एक्कगा होंति ॥ २२५ ॥ व्याख्या ॥ इयं द्रुमपुष्पिकायां व्याख्यातेति नेह व्याख्यायते। संग्रहैककेन चात्राधिकारः। सांप्रतं द्व्यादीन् विहाय षट्कप्ररूपणामाह ॥ नामं ठवणा दविए, खेत्ते काले तहेव भावे अ ॥ एसो उ छक्कगस्स, निक्खेवो छव्विहो होइ ॥ २२६ ॥ व्याख्या ॥ तत्र नामस्थापने क्षुण्णे। द्रव्यषट्कं षड् द्रव्याणि सचित्ताचित्तमिश्राणि पुरुषकार्षापणालंकृतपुरुषलक्षणानि। क्षेत्रषट्कं षडाकाशप्रदेशाः। यद्वा भरतादीनि। कालषट्कं षट् समयाः षड्वा ऋतवः। तथैव भावे चेति भावषट्कं षड् भावा औदयिकादयः। अत्र च सचित्तद्रव्यषट्केनाधिकार इति गाथार्थः। आह। अत्र द्व्याद्यनभिधानं किमर्थम्। उच्यते। एकषडभिधानतः आद्यन्तग्रहणेन तत्प्रतेरिति। व्याख्यातं षट्पदमधुना जीवपदमाह ॥ जीवस्स उ निक्खेवो, परूवणा लक्खणं च अत्थित्तं ॥ अन्नामुत्तत्तं नि-च्चकारगो देहवावित्तं ॥ २२७ ॥ गुणिउड्ढगइत्तेया, निम्मयसाफल्लता य परिमाणे ॥ जीवस्स तिविहकालम्मि, परिक्खा होइ कायव्वा ॥ २२८ ॥ दो दारगाहाओ ॥ व्याख्या ॥ जीवस्य तु निक्षेपो नामादिः। प्ररूपणा द्विविधाश्च भवन्ति जीवा इत्यादिरूपा। लक्षणं चानादि। अस्तित्वं सत्त्वम् शुद्धपदवाच्यत्वादिना। अन्यत्वं देहात्। अमूर्तत्वं स्वतः। नित्यत्वं विकारानुपलम्भेन। कर्तृत्वं स्वकर्मफलभोगात्। देहव्यापित्वं तत्रैव तल्लिङ्गोपलब्ध्या। गुणित्वं योगादिना। ऊर्ध्वगतित्वमगुरुलघुभावेन। निर्मायता विकाररहितत्वेन। सफलता च कर्मणः। परिमाणं लोकाकाशमात्र इत्यादि। एवं जीवस्य त्रिविधकाल इति त्रिकालविषया परीक्षा भवति कर्तव्या। इति द्वारगाथाद्वयसमासार्थः। व्यासार्थस्तु भाष्यादवसेयः। तथाच निक्षेपमाह ॥ नामं ठवणा जीवो, दव्वजीवो य भावजीवो य ॥ ओहभवग्गहणंमि य, तब्भवजीवे य भावम्मि ॥ २२९ ॥ व्याख्या ॥ नामस्थापनाजीव इति। जीवशब्दः प्रत्येकमभिसंबध्यते। नामजीवः स्थापनाजीव इति तथा द्रव्यजीवश्च भावजीवश्च वक्ष्यमाणलक्षणः। तत्रौघेत्योघजीवः। भवग्रहणे चेति भवजीवः। तद्भवजीवश्च तद्भव एवोत्पन्नः। भावे भावजीव इति गाथासमासार्थः। व्यासार्थं त्वाह ॥ नामं ठवणगयाओ, दव्वे गुणपज्जवेहि रहिउ त्ति ॥ तिविहो य होइ भावे, ओहे भवतब्भवे चेव ॥ २३० ॥ व्याख्या ॥ नामस्थापने गते क्षुण्णत्वादिति भावः। द्रव्य इति द्रव्यजीवो गुणपर्यायाभ्यां चैतन्यमनुष्यत्वादिलक्षणाभ्यां रहितः। बुद्धिपरिकल्पितो नत्वसाविछंविधः संभवतीति। त्रिविधश्च भवति भाव इति भावजीवत्रैविध्यमाह। ओघजीवो भवजीवस्तद्भवजीवश्चेति प्रागाथोक्तमप्येतदिछंविधभाष्यकारशैलीप्रामाण्यतोऽदुष्टमेवेति। अन्ये तु पठन्ति ॥ "भावे उ तिहा भणिउं, तं पुण संखेवउ वोछं ॥"

नाव इति नावजीवः । त्रिधेति त्रिप्रकारो नणितो निर्युक्तिकारेण उंघजीवादिस्तमपि च नावार्थमधिकृत्य संक्षेपतो वक्ष्य इति गाथार्थः । तत्रौघजीवमाह ॥ संते आउयकम्मे, धरई तस्सेव जीवई उदए ॥ तस्सेव निज्जराए, मउं त्ति सिद्धो नयमएणं ॥ २३१ ॥ व्याख्या ॥ सति विद्यमान आयुष्ककर्मणि सामान्यरूपो ध्रियते सामान्येनैव तिष्ठति नवोदधौ । कथमिदमवस्थानमात्राज्जीवत्वमस्येत्याशङ्क्यात्रैवान्वर्थयोजनामाह । तस्यैवौघायुष्ककर्मणो जीवत्युदये । उदये सति जीवत्यासंसारं प्राणान्धारयत्यतो जीवनाज्जीव इति । तस्यैवौघायुष्ककर्मणो निर्जरया क्षयेण मृत इति सर्वथा जीवनानावात् । स च सिद्धो मृतो नान्यः विग्रहगतावपि तथा जीवनसद्भावात् । नयमतेनेति सर्वनयमतेनैव मृत इति गाथार्थः । उक्त उंघजीवितविशिष्ट उंघजीवः सांप्रतं नवजीवं तद्भवजीवं चाह ॥ जेण य धरइ नवगउ, जीवो जेण य नवाउ संकमई ॥ जाणाहि तं नवाउं, चउविहं तप्नवे डुविहं ॥ २३२ ॥ ॥ निरकेउं त्ति गयं ॥ व्याख्या ॥ येन च नारकाद्यायुष्केण ध्रियते तिष्ठति । नवगतो नारकादिनवस्थितो जीवस्तथा येन च मनुष्याद्यायुष्केण नवान्नारकादिलक्षणात्संक्रामति याति । मनुष्यादिनवान्तरमिति सामर्थ्याद्गम्यते । जानीहि विद्धि । तदिदंनूतं नवायुर्नवजीवितं चतुर्विधं नारकतिर्यङ्मनुष्यामरनेदेन । तथा तद्भवे तद्भवविषयमायुरिति वर्तते । तच्च द्विविधं तिर्यक्त्वतद्भवायुर्मनुष्यत्वतद्भवायुश्च । यस्मात्तावेवमृतौ सन्तौ नूयस्तस्मिन्नेव नव उत्पद्येते नान्ये । तद्भवजीवितं तस्मान्मृतस्य तस्मिन्नेवोत्पन्नस्य यत्तडुच्यत इति । अत्रापि च नावजीवाधिकारात्तद्भवजीवितविशिष्टश्च जीव एव ग्राह्यः । जीवितं तु तद्विशेषणत्वाडुक्तमिति गाथार्थः । उक्तो निक्षेपः । इदानीं प्ररूपणामाह ॥ डुविहा य हुंति जीवा, सुहुमा तह बायरा य लोगम्मि ॥ सुहुमा य सव्वलोए, दो चेव य बायरविहाणे ॥ २३३ ॥ व्याख्या ॥ द्विविधाश्च द्विप्रकाराश्च चशब्दान्नवविधाश्च पृथिव्यादिद्वीन्द्रियादिनेदेन नवन्ति जीवाः । द्वैविध्यमाह । सूक्ष्मास्तथा बादराश्च । तत्र सूक्ष्मनामकर्मोदयात्सूक्ष्मा बादरनामकर्मोदयाच्च बादरा इति । लोक इति लोकग्रहणमलोके जीवनवनव्यवच्छेदार्थम् । तत्र सूक्ष्माश्च सर्वलोक इति । चशब्दस्यावधारणार्थत्वात्सूक्ष्मा एव सर्वलोकेषु न बादराः । क्वचित्तेषामसंनवात् । द्वे एव च पर्याप्तकापर्याप्तकलक्षणे बादरविधाने बादरविधी । चशब्दात्सूक्ष्मविधाने च । तेषामपि पर्याप्तकापर्याप्तकरूपत्वादिति गाथार्थः । एतदेव स्पष्टयन्नाह ॥ सुहुमा य सव्वलोए, परियावन्ना नवंति नायव्वा ॥ दो चेव बायराणं, पद्यत्तियरे अ नायव्वा ॥ २३४ ॥ ॥ परूवणादारं गयं ति ॥ व्याख्या ॥ सूक्ष्मा एव पृथिव्यादयः सर्वलोके चतुर्दशरज्ज्वात्मके पर्या-

यापन्ना नवन्ति ज्ञातव्याः। पर्यायापन्ना इति तमेव सूक्ष्मपर्यायमापन्नाः । नावसूक्ष्मा नतु नूतनाविनो फव्यसूक्ष्मा इति नावः। तथा द्वौ नेदौ वादराणां पृथिव्यादीनां चशब्दात्सूक्ष्माणां च पर्याप्तकेतरौ ज्ञातव्यौ पर्याप्तकापर्याप्तकाविति गाथार्थः । उक्ता प्ररूपणा अधुना लक्षणमुच्यते । तथा चाह नाष्यकारः ॥ लक्खणमियाणि दारं, चिंधं हेऊ अ कारणं लिंगं ॥ लक्खणमिइ जीवस्स उ, आयाणाई इमं तं च ॥ २३५ ॥ व्याख्या ॥ लक्षणमिदानीं द्वारमवसरप्राप्तम्। अस्य च प्रतिपत्त्यङ्गतया प्राधान्यात्सामान्यतस्तावत्तत्स्वरूपमेवाह । चिह्नं हेतुश्च कारणं लिङ्गं लक्षणमिति। तत्र चिह्नमुपलक्षणं यथा पताका देवकुलस्य । हेतुर्निमित्तलक्षणं यथा कुम्नकारनैपुण्यं घटसौन्दर्यस्य । कारणमुपादानलक्षणं यथा मृन्मसृणत्वं घटवलीयस्त्वस्य। लिङ्गं कार्यलक्षणं यथा धूमोऽग्नेः। पर्यायशब्दा वा एत इति। लक्षणमित्येतल्लक्षणं लक्ष्यतेऽनेन परोक्षं वस्त्विति कृत्वा जीवस्य पुनरादानादि लक्षणमनेकप्रकारमिदम्। तच्च वक्ष्यमाणमिति गाथार्थः॥ आयाणे परिनोगे जोगुवओगे कसायलेसा य॥ आणापाणू इंदिय, बंधोदयनिज्जरा चेव ॥ २३६ ॥ चित्तं चेयणसन्ना, विन्नाणं धारणा य बुद्धी अ ॥ ईहामईवियक्का, जीवस्स उ लक्खणा एए ॥ २३७ ॥ दारं ॥ व्याख्या ॥ एतत्प्रतिद्वारगाथाद्वयमस्य व्याख्या। आदानं परिनोगस्तथा योगोपयोगौ। कषायलेश्याश्च। तथानापानौ इन्द्रियाणि वन्धोदयनिर्जराश्चैव। तथा चित्तं चेतना संज्ञा विज्ञानं धारणा च बुद्धिश्च तथा ईहामतिवितर्का जीवस्य तु लक्षणान्येतानि । तुशब्दस्यावधारणार्थत्वाज्जीवस्यैवेति प्रतिद्वारगाथाद्वयसमासार्थः। व्यासार्थस्तु नाष्यादवसेयस्तच्चेदम्॥ लक्खिज्जइत्ति नज्जइ, पच्चक्खियरो व जेण जो अत्थो॥ तं तस्स लक्खणं खलु, धूमुण्हाइ व्व अग्गिस्स॥ २३८ ॥ व्याख्या ॥ लक्ष्यत इति ज्ञायते कोऽसावित्याह। प्रत्यक्षोऽक्षिगोचरापन्न इतरो वा परोक्षः। येनोष्णत्वादिना योऽर्थोऽग्न्यादिस्तत्तस्य लक्षणं खल्विति। तदेव स्पष्टयति। धूमौष्ण्यादिवदग्नेरिति। स ह्यौष्ण्येन प्रत्यक्षो लक्ष्यते। परोक्षो धूमेनेति गाथार्थः । तत्रादानादीनां दृष्टान्तानाह ॥ अयगारकूरपरसू, अग्गिसुवन्ने अ खीरनरवासी॥ आहारो दिठंता, आयाणाईण जहसंखं ॥ २३ए ॥ व्याख्या ॥ अयस्कारः कूरस्तथा परशुरग्निः सुवर्णं क्षीरनरवास्यः। तथा आहारो दृष्टान्ता आदानादीनां प्रक्रान्तानां यथासंख्यं प्रतिज्ञायुल्लङ्घनेन चैतदनिधानं परोक्षार्थप्रतिपत्तिं प्रति प्रायः प्रधानाङ्गताख्यापनार्थमिति गाथार्थः। सांप्रतं प्रयोगानाह ॥ देहिंदियाइरित्तो, आया खलु गप्नगाहगयउगा॥ संडासा अयपिंडो, अयकाराइ व विन्नेओ॥ २४० ॥ व्याख्या ॥ देहेन्द्रियातिरिक्त आत्मा। खलुशब्दो विशेषणार्थः । कथंचिन्न सर्वथातिरिक्त एव तदसंवेद-

नादिप्रसंगादित्यनेन प्रतिज्ञार्थमाह । प्रतिज्ञा पुनरर्थेन्द्रियाणि आदेयादानानि विद्यमानादातृकाणि । कुत इत्याह । ग्राह्यग्राहकप्रयोगात् । ग्राह्या रूपादयः । ग्राहकाणीन्द्रियाणि । तेषां प्रयोगः स्वफलसाधनव्यापारस्तस्मान्न ह्यमीषां कर्मकरणभावः कर्तारमन्तरेण स्वकार्यसाधनप्रयोगः संभवत्यनेनापि हेत्वर्थमाह । हेतुश्चादेयादानरूपत्वादिति । दृष्टान्तमाह । संदंशादादानात् अयस्पिण्डादादेयात् अयस्कारादिवल्लोहकारवद्विज्ञेयः । अतिरिक्तो विद्यमान आदातेत्यनेनापि दृष्टान्तार्थमाह । दृष्टान्तस्तु संदंशकायस्पिण्डवत् । यस्तु तदनतिरिक्तः । न ततो ग्राह्यग्राहकप्रयोगः । यथा देहादिभ्य एवेति व्यतिरेकार्थः । व्यतिरेकस्तु यानि विद्यमानादातृकाणि न भवन्ति तान्यादानादेयरूपाण्यपि न भवन्ति । यथा मृतकद्रव्येन्द्रियादीनीति गाथार्थः । उक्तमादानद्वारमधुना परिभोगद्वारमाह ॥ देहो सभोत्तिउ खलु, भोयत्ता उयणाइथालं व ॥ अन्नप्पउत्तिगा खलु, जोगा परसु व्व करणत्ता ॥ २४१ ॥ व्याख्या ॥ देहः सभोक्तृकः । खल्विति प्रतिज्ञा । भोग्यत्वादिति हेतुः । उदनादिस्थालवत् । स्थालस्थितौदनवदिति दृष्टान्तः । भोग्यत्वं च देहस्य जीवेन तथा निवसतोपभुज्यमानत्वादित्युक्तं परिभोगद्वारम् । अधुना योगद्वारमाह । अन्यप्रयोक्तृकाः खलु योगाः । योगाः साधनानि मनःप्रभृतीनि करणानीति प्रतिज्ञार्थः । करणत्वादितिहेतुः । परशुवदिति दृष्टान्तः । भवति च विशेषे पक्षीकृते सामान्यं हेतुर्यथा अनित्यो वर्णात्मकः शब्दः शब्दत्वान्मेघशब्दवदिति गाथार्थः । उक्तं योगद्वारं सांप्रतमुपयोगद्वारमाह ॥ उवउगा नाभावो, अग्गि व्व सलक्खणापरिच्चागा ॥ सकसाया णाभावो, पज्जयगमणा सुवन्नं व ॥ २४२ ॥ व्याख्या ॥ उपयोगात्साकारानाकारभेदभिन्नान्नाभावो जीव इति गम्यते । कुत इत्याह । स्वलक्षणापरित्यागाडुपयोगलक्षणासाधारणात्मीयलक्षणापरित्यागात् । अग्निवद्यथाग्निरौष्ण्यादिस्वलक्षणापरित्यागान्नाभावस्तथा जीवोऽपीति गाथार्थः । प्रयोगस्तु सन्नात्मा स्वलक्षणापरित्यागादग्निवदिति । उक्तमुपयोगद्वारमधुना कषायद्वारमाह । सकषायत्वादचेतनविलक्षणासाधारणात्मीयलक्षणक्रोधादिपरिणामोपेतत्वादित्यर्थः । नाभावो जीवः । कुत इत्याह । पर्यायगमनात्क्रोधमानादिपर्यायप्राप्तेः सुवर्णवत्कटकादिपर्यायगमनोपेतसुवर्णवदिति प्रयोगार्थः । प्रयोगस्तु सन्नात्मा पर्यायगमनात्सुवर्णवदिति गाथार्थः । उक्तं कषायद्वारमिदानीं लेश्याद्वारमाह ॥ लेसाउ णाभावो, सुभपरिणमणसभावउ य खीरं व ॥ उस्सासा णाभावो, समसप्पावा खउ व नरो ॥ २४३ ॥ व्याख्या ॥ लेश्यातो लेश्यासद्भावेन नाभावो जीवः किंतु भाव इति । कुत इत्याह । परिणमनस्वभावत्वात्कृष्णादिद्रव्यसाचिव्येन जम्बूखादकादिदृष्टान्तसिद्धतथाविधपरिणामधर्मत्वात् क्षीरवदिति

प्रयोगार्थः । प्रयोगस्तु सन्नात्मा परिणामित्वात् क्षीरवदिति गतं लेश्याद्वारम् । प्राणापानद्वारमाह । उच्छ्वासादित्यचेतनधर्मविलक्षणप्राणापानसद्भावान्नाभावो जीवः किंतु भाव एवेति । श्रमसद्भावेन परिस्पन्दोपेतपुरुषवदिति प्रयोगार्थः । प्रयोगस्तु पुनरत्र व्यतिरेकी द्रष्टव्यः । सात्मकं जीवच्छरीरं प्राणादिमत्त्वाद्यत्तु सात्मकं न भवति तत्प्राणादिमदपि न भवति यथाकाशमिति गाथार्थः । उक्तं प्राणापानद्वारमधुना इन्द्रियद्वारमुच्यते ॥ अक्खाणेयाणि परिच्छिगाणि, वासाइवेह करणत्ता ॥ गहवेयगनिज्जरउ, कम्मस्सन्नो जहाहारो ॥ २४४ ॥ व्याख्या ॥ अक्षाणीन्द्रियाणि एतानीति लोकप्रसिद्धानि देहाश्रयाणि परार्थानि आत्मप्रयोजनानि वास्यादिवदिह करणत्वाल्लोके वास्यादिवदिति प्रयोगार्थः । आह । आदानान्येवेन्द्रियाणि तत् किमर्थं भेदोपन्यासः । उच्यते । निर्वृत्त्युपकरणद्वारेण द्वैविध्यख्यापनार्थम् । ततश्च तत्रोपकरणस्य ग्रहणमिह तु निर्वृत्तेरिति । प्रयोगस्तु परार्थाश्चक्षुरादयः संघातत्वाच्छयनासनादिवत् । न चायं विशेषविरुद्धः । कर्मसंबद्धस्यात्मनः संघातरूपत्वाभ्युपगमात् । गतमिन्द्रियद्वारमधुना बन्धादिद्वाराण्याह । ग्रहणवेदकनिर्जरकः । कर्मणोऽन्यो यथाहार इति । तत्र ग्रहणं कर्मणो बन्धः । वेदनमुदयः । निर्जरा क्षयः । यथाहार इत्याहारविषयाणि ग्रहणादीनि न कर्त्रादिव्यतिरेकेण तथा कर्मणोऽपीति प्रयोगार्थः । प्रयोगस्तु विद्यमानभोक्तृकमिदं कर्मग्रहणवेदननिर्जरणसद्भावादाहारवदिति गाथार्थः । उक्तानि बन्धादिद्वाराणि । व्याख्याता च प्रथमा प्रतिद्वारगाथा । सांप्रतं द्वितीयामाधिकृत्य चित्तादिस्वरूपव्याचिख्यासयाह ॥ चित्तं तिकालविसयं, चेयणपच्चक्खसन्नमणुसरणं ॥ विन्नाणणेगभेयं, कालमसंखेयरं धरणा ॥ २४५ ॥ व्याख्या ॥ चित्तं त्रिकालविषयम् उघतोऽतीतानागतवर्तमानग्राहि । चेतनं चेतना सा प्रत्यक्षवर्तमानार्थग्राहिणी । संज्ञानं संज्ञा । सा अनुस्मरणमिदं तदिति ज्ञानम् । विविधं ज्ञानं विज्ञानमनेकभेदमनेकप्रकारमनेकधर्मिणि वस्तुनि तथा तथाध्यवसाय इत्यर्थः । कालमसंख्येयेतरमसंख्येयं संख्येयं वा । धारणा अविच्युतस्मृतिवासनारूपा । तत्र वासनारूपासंख्येयवर्षायुषामसंख्येयं संख्येयवर्षायुषां संख्येयमिति गाथार्थः ॥ अत्थस्स ऊहबुद्धी, ईहा चेट्ठ अवगमो उ मई ॥ संभावणत्थतक्का, गुणपच्चक्खा घडो व्व ज्जि ॥२४६॥व्याख्या॥ अर्थस्योहबुद्धिः संज्ञिनः परनिरपेक्षार्थपरिच्छेद इति भावः । ईहा चेष्टा किमयं स्थाणुः किंवा पुरुष इति सदर्थपर्यालोचनरूपा । अर्थावगमस्त्वर्थपरिच्छेदस्तु शिरःकण्डूयनादिधर्मोपपत्तेः पुरुष एवायमित्येवंरूपा मतिः । संभावणत्थतक्कत्ति । प्राकृतशैल्या अर्थसंभावना । एवमेव चायमर्थ उपपद्यत इत्यादिरूपा

तर्का । इत्थं द्वाराणि व्याख्याय सर्वे एते चेतनादयोगुणा वर्तन्त इति जीवाख्यगुणिप्रतिपादकेन प्रयोगार्थेनोपसंहरन्नाह गुणप्रत्यक्षत्वाद्धेतोर्घटवदस्ति जीव इति गम्यते । एष गाथार्थः । एतदेव स्पष्टयति ॥ जम्हा चित्ताईया, जीवस्स गुणा हवंति पच्चरका ॥ गुणपच्चरकत्तणर्ज, घडु व जीवो अर्ज अत्थि ॥ २४७ ॥ व्याख्या ॥ यस्माच्चित्तादयोऽनन्तरोक्ता जीवस्य गुणा जीवस्य शरीरादिगुणविधर्मत्वात् । एते च नवन्ति प्रत्यक्षाः स्वसंवेद्यत्वात् । यतश्चैवं गुणप्रक्षत्वाद्धेतोर्घटवज्जीवः । अतोऽस्तीति प्रयोगार्थः । प्रयोगस्तु सन्नात्मा, गुणप्रत्यक्षत्वाद्धटवत् । नायं घटवदात्मनोऽचेतनत्वापादनेन विरुद्धः 'विरुद्धोऽसति बाधने' इति वचनात् । एतच्च प्रत्यक्षेणैव बाधनमिति गाथार्थः । व्याख्यातं मूलद्वारगाथाद्वयेन लक्षणद्वारमिदानीमस्तित्वद्वारावसरः । तथा चाह नाष्यकारः ॥ अत्थित्ति दारमहुणा, जीवस्सइ अत्थि विद्यए नियमा ॥ लोआययमयघायत्थमुच्चए तत्थिमो हेऊ ॥ २४८ ॥ व्याख्या ॥ अस्तीति द्वारमधुना सांप्रतमवसरप्राप्तम् । तत्रैतदुच्यते । जीवः सन् पृथिव्यादिविकारदेहमात्ररूपः । सन्निति सिद्धसाध्यता । नतु ततोऽन्योऽस्तीत्याशङ्कापनोदायाह । अस्त्यन्यश्चैतन्यरूपस्तदपि मातृचैतन्योपादानं नविष्यति परलोकयायी तु न विद्यते इति मोहापोहायाह । विद्यते नियमान्नियमेन तथा चाह । लोकायतमतघातार्थं नास्तिकानिप्रायनिराकरणार्थमुच्यत एतत्तस्य चानन्तरोदित एवानिप्राय इति सफलानि विशेषणानि । तत्र लोकायतमतविघाते कर्तव्ये अयं वक्ष्यमाणलक्षणो हेतुः । अन्यथानुपपत्तिरूपो युक्तिमार्ग इति गाथार्थः ॥ जो चिंतेइ सरीरे, नत्थि अहं स इव होइ जीवो त्ति ॥ न हु जीवंमि असंते, संसयउप्पायर्ज अन्नो ॥ २४९ ॥ व्याख्या ॥ यश्चिन्तयति शरीरे अत्र लोके प्रतीते नास्त्यहम् । स एव चिन्तयिता नवति जीव इति । कथमेतदेवमित्याह । न यस्माज्जीवेऽसति मृतदेहादौ संशयोत्पादकोऽन्यः प्राणादिश्चैतन्यरूपत्वात्संशयस्येति गाथार्थः । एतदेव नावयति ॥ जीवस्स एस धम्मो, जा ईहा नत्थि अत्थि वा जीवो ॥ खाणुमणुस्साणुगया, जह ईहा देवदत्तस्स ॥ २५० ॥ व्याख्या ॥ जीवस्यैष स्वनावः एष धर्मः । या ईहा सदर्थपर्यालोचनात्मिका । किंविशिष्टेत्याह । अस्ति नास्ति जीव इति । लोकप्रसिद्धं निदर्शनमाह । स्थाणुमनुष्यानुगता किमयं स्थाणुः किं वा पुरुष इत्येवंरूपा यथेहा देवदत्तस्य जीवतो धर्म इति गाथार्थः । प्रकारान्तरेणैतदेवाह ॥ सिद्धं जीवस्स अत्थित्तं, सद्दादेवाणुमीयए ॥ नासर्ज नुवि नावस्स, सद्दो हवइ केवलो ॥ २५१ ॥ व्याख्या ॥ सिद्धं प्रतिष्ठितं जीवस्योपयोगलक्षणस्यास्तित्वम् । कुत इत्याह । शब्दादेव जीव इत्यस्मादनुमीयते । कथमेतदेवमित्याह । नासत इति । नासतोऽविद्यमानस्य नुवि पृथिव्यां नावस्य पदा-

र्थस्य शब्दो भवति वाचक इति। खरविषाणादिशब्दैर्व्यभिचारमाशङ्क्याह। केवलः शुद्धोऽन्यपदासंस्पृष्टः। खरादिपदसंस्पृष्टाश्च विषाणादिशब्दा इति गाथार्थः। एतद्विवरणायैवाह भाष्यकारः॥ अत्थित्ति निव्विगप्पो,जीवो नियमाउ सद्दउ सिद्धी॥ कम्हा सुद्धपयत्ता,घडखरसिंगाणुमाणाउ॥२५२॥ व्याख्या॥ अस्तीति निर्विकल्पो जीवः। निर्विकल्प इति निःसंदिग्धः। नियमान्नियमेनैव प्रतिपन्नपेक्षया शब्दतः सिद्धिः वाचकाद्वाच्यप्रतीतेः। एतदेव प्रश्नद्वारेणाह। कस्मात् कुत एतदेवमित्याह। शुद्धपदत्वात् केवलपदत्वाज्जीवशब्दस्य घटखरशृङ्गानुमानादनुमानशब्दो दृष्टान्तवचनः। घटखरशृङ्गदृष्टान्तादिति प्रयोगार्थः। प्रयोगस्तु मुख्येनार्थेनार्थवान् जीवशब्दः शुद्धपदत्वाद्घटशब्दवत्। यस्तु मुख्येनार्थेनार्थवान् न भवति स शुद्धपदमपि न भवति। यथा खरशृङ्गशब्द इति गाथार्थः। पराभिप्रायमाशङ्क्य परिहरन्नाह॥ चोयगसुद्धपयत्ता, सिद्धी जइ एव सुण्णसिद्धि अम्हं पि॥ तं न भवइ संतेणं, जं सुन्नं सुन्नगेहं व॥२५३॥ व्याख्या॥ उक्तवच्छुद्धपदत्वात्सिद्धिर्यदि जीवस्य एवं तर्हि शून्यसिद्धिरस्माकमपि। शून्यनष्टशब्दस्यापि शुद्धपदत्वादित्यभिप्रायः। अत्रोत्तरमाह। तन्न भवति यदुक्तं परेण। कुत इत्याह। सता विद्यमानेन पदार्थेन यद्यस्माच्छून्यं शून्यमुच्यते। किंवदित्याह। शून्यगृहमिव। तथाहि। देवदत्तेन रहितं शून्यगृहमुच्यते। निवृत्तो घटो नष्ट इति। नत्वनयोर्जीवशब्दस्य जीववदवशिष्टं वाच्यमस्तीति गाथार्थः। प्रकारान्तरेणास्तित्वपक्षमेव समर्थयन्नाह॥ मिछा भवेउ सव्वछा, जे केई पारलोइया॥ कत्ता चेवोपभोत्ता य, जइ जीवो न विज्जइ॥२५४॥ व्याख्या॥ मिथ्या भवेयुरनृताः स्युः सर्वथा ये केचन पारलौकिका दानादयः। यदि किमित्याह। कर्ता चैव कर्मण उपभोक्ता च तत्फलस्य यदि जीवो न विद्यते। परलोकयायीति गाथार्थः। एतदेवाव्युत्पन्नशिष्यानुग्रहार्थं स्पष्टतरमाह॥ पाणिदयातवनियमा, बंभं दिक्खा य इंदियनिरोहो॥ सव्वं निरछमेयं, जइ जीवो न विज्जई॥२५५॥ व्याख्या॥ प्राणिदयातपोनियमाः करुणोपवासहिंसाविरत्यादयः। तथा ब्रह्म ब्रह्मचर्यं दीक्षा च योगलक्षणा इन्द्रियनिरोधः प्रव्रज्याप्रतिपत्तिरूपः। सर्वं निरर्थकं निष्फलमेतत्। यदि जीवो न परलोकयायीति गाथार्थः। किंच शिष्टाचरितो मार्गः शिष्टैरनुगन्तव्य इति। तन्मार्गख्यापनायाह॥ लोइया वेइया चेव, तहा सामाइया विऊ॥ निच्चो जीवो पिहो देहो, इइ सव्वे ववछिया॥२५६॥ व्याख्या॥ लोके भवा लोके वा विदिता इति लौकिका इतिहासादिकर्तारः। एवं वैदिकाश्चैव त्रैविद्यवृद्धाः तथा सामायिकास्त्रिपिटकादिसमयवृत्तयो विद्वांसः पण्डिताः। नित्यो जीवो नानित्यः। एवं पृथग् देहाच्छरीरादित्येवं सर्वे व्यवस्थिता नान्यथेति गाथार्थः। एतदेव व्याचष्टे॥ लोगे अ-

छेद्यच्छेद्यो, वेए सपुरीसदड्ढगसियालो ॥ समए यहमासि गउ, तिविहो दिवाइसंसारो ॥ २५८ ॥ व्याख्या ॥ लोकेऽछेद्योऽच्छेद्य आत्मा पठ्यते । यथोक्तं गीतासु ॥ "अछेद्योऽयमभेद्योऽयमविकार्योऽयमुच्यते ॥ नित्यः संततगः स्थाणुरचलोऽयं सनातनः ॥" इत्यादि । तथा वेदे सपुरीषो दग्धः शृगालः पठ्यत इति । यथोक्तम् । "शृगालो वै एष जायते यः सपुरीषो दह्यते । अथापुरीषो दह्यते आक्रोधुका अस्य प्रजाः प्राडुर्भवन्ति ।" इत्यादि । तथा समये "अहमासीजजः" इति पठ्यते । तथा च बुद्धवचनम् ॥ "अहमासं भिक्षवो हस्ती, षड्दन्तः शङ्खसंनिभः ॥ शुकः पञ्जरवासी च शकुन्तो जीवजीवकः ॥" इत्यादि । तथा त्रिविधो दिव्यादिसंसारः कैश्चिदिष्यते । देवमानुषतिर्यग्भेदेन । आदिशब्दाच्चतुर्विधः कैश्चिन्नारकाधिक्येनेति गाथार्थः । अत्रैव प्रकारान्तरेण तदस्तित्वमाह ॥ अत्थि सरीरविहाया, पइनिययागारयाइभावाउ ॥ कुंभस्स जह कुलालो, सो मुत्तो कम्मजोगाउ ॥ २५८ ॥ व्याख्या ॥ अस्ति शरीरस्यौदारिकादेर्विधाता । विधातेति कर्ता । कुत इत्याह । प्रतिनियताकारादिसद्भावात् । आदिमत्प्रतिनियताकारत्वादित्यर्थः। दृष्टान्तमाह । कुम्भस्य यथा कुलालो विधाता । कुलालवदेवमसावपि मूर्तः प्राप्नोतीत्याशङ्क्य परिहरन्नाह । असावात्मा यः शरीरविधाता असौ मूर्तः । कर्मयोगादिति मूर्तकर्मसंबन्धादिति गाथार्थः । अत्रैव शिष्यव्युत्पत्तयेऽन्यथा तद्ग्रहणविधिमाह ॥ फरिसेण जहा वाऊ, गिप्पई कायसंसिउ ॥ नाणाईहिं तहा जीवो, गिप्पई कायसंसिउ ॥ २५९ ॥ व्याख्या ॥ स्पर्शेन शीतादिना यथा वायुर्गृह्यते कायसंस्रतो देहसंगतः । तथा ज्ञानादिभिर्ज्ञानदर्शनेच्छादिभिर्जीवो गृह्यते कायसंस्रतो देहसंगत इति गाथार्थः। असकृदनुमानादस्तित्वमुक्तं जीवस्य। अनुमानं च प्रत्यक्षपूर्वकं न चैनं केचन पश्यन्तीति ततश्चाशोभनमेतदित्याशङ्क्याह ॥ अणिंदियगुणं जीवं, डुन्नेयं मंसचक्खुणा ॥ सिद्धा पासंति सवन्नू, नाणसिद्धा य साहुणो ॥ २६० ॥ व्याख्या ॥ अनिन्द्रियगुणमविद्यमानरूपादीन्द्रियग्राह्यगुणं जीवममूर्तत्वादिधर्मकं दुर्ज्ञेयं दुर्लक्षं मांसचक्षुषा छद्मस्थेन पश्यन्ति सिद्धाः सर्वज्ञाः । अञ्जनसिद्धादिव्यवच्छेदार्थं सर्वज्ञग्रहणम् । ततश्च ऋषभादय इत्यर्थः । ज्ञानसिद्धाश्च साधवो भवस्थकेवलिन इति गाथार्थः । सांप्रतमागमादस्तित्वमाह ॥ अत्तवयणं तु सत्थं, दिठा य तओ अइंदियाणं पि ॥ सिद्धी गहणाईणं, तहेव जीवस्स विन्नेया ॥ २६१ ॥ व्याख्या ॥ आप्तवचनं तु शास्त्रम् । आप्तो रागादिरहितः । तुशब्दोऽवधारणे । आप्तवचनमेव । अनेनापौरुषेयव्यवच्छेदमाह । तस्यासंभवादिति । दृष्टा च तत इत्युपलब्धा च तत आप्तवचनशास्त्रात् । अतीन्द्रियाणामपि इन्द्रियगोचरातिक्रान्तानामपि । सिद्धिर्ग्रहणादीनामिति उपलब्धिश्चन्द्रोपरागादीनामित्यर्थः ।

तथैव जीवस्य विज्ञेयेति । अतीन्द्रियस्याप्याप्तवचनप्रामाण्यादिति गाथार्थः । मूलद्वारगाथायां व्याख्यातमस्तित्वद्वारमधुनान्यत्वादित्रयव्याचिख्यासुराह ॥ अणत्तममुत्तत्तं, निच्चत्तं चेव जण्णए समयं ॥ कारणअविजागाई, हेऊहिं इमाहिं गाहाहिं ॥ ॥ २६२ ॥ व्याख्या ॥ अन्यत्वं देहादमूर्तत्वं स्वरूपेण । नित्यत्वं चैव परिणामिनित्यत्वं जण्यते । समकमेकैकेन हेतुना त्रितयमपि युगपदिति एककालमित्यर्थः । कारणाविजागादिनिर्वक्ष्यमाणलक्षणैर्हेतुजिरिमाजिस्तिसृजिर्निर्युक्तिगाथाजिरेवेति गाथार्थः ॥ कारणविजागकारण-विणासबंधस्स पच्चयाजावा ॥ विरुद्धस्स य अठस्स, पाउप्पावा विणासा य ॥ २६३ ॥ व्याख्या ॥ कारणविजागकारणविनाशबन्धस्य प्रत्ययाजावादित्यत्राजावशब्दः प्रत्येकमजिसंबध्यते । कारणविजागाजावान्न खलु जीवस्य पटादेरिव तन्त्वादिकारणविजागोऽस्ति कारणाजावादेव । एवं कारणविनाशाजावेऽपि योज्यम् । तथा बन्धस्य ज्ञानावरणादिपुद्गलयोगलक्षणस्य प्रत्ययाजावाद्धेतुत्वानुपपत्तेः । बन्धस्येति बध्यमानव्यतिरिक्तबन्धज्ञापनार्थमसमासः । व्यतिरेकी चायमन्वयव्यतिरेकावर्थसाधकाविति दर्शनार्थमिति । तथा विरुद्धस्य चार्थस्य पटादिनाशे जस्मादिरिव अप्राडुर्जावादविनाशाच्च । अप्राडुर्जावेऽनुत्पत्तौ सत्यामविनाशाच्च हेतोर्जीवस्य नित्यत्वं नित्यत्वादमूर्तत्वममूर्तत्वाच्च देहादन्यत्वमिति प्रतिपत्त्यानुगुण्यतो व्यत्ययेन साध्यनिर्देशः । वक्ष्यति च निर्युक्तिकारः ॥ "जीवस्स सिद्धमेवं, निच्चत्तममुत्तमन्नत्तं" ॥ इति गाथासमासार्थः । व्यासार्थस्तु जाष्यादवसेयः । तत्राव्युत्पन्नविनेयासंमोहनिमित्तं यथोपन्यासं तावद्वाराणि व्याख्याय पश्चान्निर्युक्तिकाराजिप्रायेण मीलयिष्यतीत्यत आह ॥ अन्नत्ति दारमहुणा, अन्नो देहा गिहाउ पुरिसो व ॥ तज्जीव तस्सरीरय-मयघायठं इमं जणियं ॥ २६४ ॥ व्याख्या ॥ अन्यो देहादिति द्वारमधुना । तदेतव्द्याख्यायते । अन्यो देहात् । जीव इति गम्यते । गृहादिगतपुरुषवदिति दृष्टान्तः । तद्भावेऽपि तत्र नियमतोऽजावादिति हेतुरज्यूह्यः । न चासिद्धोऽयं मृतदेहेऽदर्शनात् । प्रयोगफलमाह । तज्जीवतच्छरीरवादिमतविघातार्थमिदं प्रयोगरूपं जणितमिति गाथार्थः । प्रयोगान्तरमाह ॥ देहिंदियाइरित्तो, आया खलु तडुवलद्धअठाणं ॥ तव्विगमे वि सरणउं, गेहगवक्खेहिं पुरिसो व ॥ २६५ ॥ व्याख्या ॥ खलुशब्दो विशेषणार्थत्वात्कथंचिद्देहेन्द्रियातिरिक्त आत्मेति प्रतिज्ञार्थः । तडुपलब्धार्थानामिति संजवतः परामर्शत्वात् । इन्द्रियोपलब्धार्थानां तद्विगमेऽपीन्द्रियविगमेऽपि स्मरणादिति हेत्वर्थः । स्मरन्ति चान्धबधिरादयः पूर्वानुजूतं रूपादीति । गेहगवाक्षैः पुरुषवदिति दृष्टान्तः । प्रयोगस्तु कथंचिद्देहेन्द्रियातिरिक्त आत्मा तद्विगमेऽपि तडुपलब्धार्थानुस्मरणात् पञ्चवातायनोपलब्धार्थानुस्मर्तृदेवदत्तवदिति गाथार्थः । इन्द्रियोपलब्धि-

मत्वाशङ्कापोहायाह ॥ न उ इंदियाइं उवल-ऊिमंति विगएसु विसयसंभरणा ॥ जह गेहगवक्खेहिं, जो अणुसरिया स उवलद्धा ॥ २६६ ॥ व्याख्या ॥ न पुनरिन्द्रियाण्येवोपलब्धिमन्ति द्रष्टृणि । कुत इत्याह । विगतेष्विन्द्रियेषु विषयसंस्मरणात् तद्गृहीतरूपाद्यनुस्मृतेरन्धबधिरादीनामिति । निदर्शनमाह । यथा गेहगवाक्षैः करणभूतैः दृष्टानर्थाननुस्मरन् योऽनुस्मर्ता स उपलब्धा नतु गवाक्षा एवमत्रापीति गाथार्थः । उक्तमेकेन प्रकारेणान्यत्वद्वारमधुना अमूर्तद्वारावसर इत्याह भाष्यकारः ॥ संपयममुत्तदारं, अइंदियत्ता अछेयभेयत्ता ॥ रूवाइविरहउ वा, अणाइपरिणामभावाउ ॥ २६७ ॥ व्याख्या ॥ सांप्रतममूर्तद्वारम् । तद्व्याख्यायते । अमूर्तो जीवः अतीन्द्रियत्वात् द्रव्येन्द्रियाग्राह्यत्वात् । अछेद्याभेद्यत्वात् खङ्गशूलादिना । रूपादिविरहितश्च अरूपत्वादित्यर्थः । तथानादिपरिणामभावादिति स्वभावतोऽनाद्यमूर्तपरिणामत्वादिति गाथार्थः ॥ छउमत्थाणुवलंभा, तहेव सवन्नुवयणउ चेव ॥ लोयाइपसिद्धीउ, जीवो मुत्तो त्ति नायवो ॥ २६८ ॥ व्याख्या ॥ छद्मस्थानुपलम्भादवधिज्ञानिप्रभृतिभिरपि साक्षादगृह्यमाणत्वात्तथैव सर्वज्ञवचनाच्चैव सत्यवक्तृवीतरागवचनादित्यर्थः । लोकादिप्रसिद्धेर्लोकादावमूर्तत्वेन प्रसिद्धत्वात् । आदिशब्दाद्वेदसमयपरिग्रहः । अमूर्तो जीव इति ज्ञातव्यः । सर्वत्रैवेयं प्रतिज्ञेति गाथार्थः । उक्तममूर्तद्वारमधुना नित्यत्वद्वारप्रस्तावः । तथाचाह भाष्यकारः । णिच्चोत्ति दारमहुणा, णिच्चो अविणासि सासउ जीवो ॥ भावत्ते सइ जम्मा-भावाउ नहं व विन्नेउ ॥ २६९ ॥ व्याख्या ॥ नित्य इति । नित्यद्वारमधुनावसरप्राप्तं तद्व्याचिख्यासयाह । नित्यो जीव इति । एतावत्युच्यमाने परैरपि संतानस्य नित्यत्वाभ्युपगमात्सिद्धसाध्यतेति । तन्निराकरणायाह । अविनाशी क्षणापेक्षयापि न निरन्वयनाशधर्मा । एवमपि परिमितकालावस्थायी कैश्चिदिष्यते । कप्पट्ठाई पुढवी भिक्खू वेति वचनात्तदपोहायाह । शाश्वत इति । सर्वकालावस्थायी । कुत इत्याह । भावत्वे सति वस्तुत्वे सतीत्यर्थः । जन्माभावात् । अनुत्पत्तेर्नभोवदाकाशवद्विज्ञेयः । भावत्वे सतीति विशेषणं खरविषाणादिव्यवच्छेदार्थमिति गाथार्थः । हेत्वन्तराण्याह ॥ संसाराउ आलो-यणाउ तह पच्चभिन्नभावाउ ॥ खणभंगविघायत्थं, भणिओ तेलोक्कदंसीहिं ॥२७०॥ व्याख्या ॥ संसारादिति । संसरणं संसारस्तस्मात्स एव नारकः स एव तिर्यगादिरिति नित्यः । आलोचनादिति । आलोचनं करोम्यहं कृतवानहं करिष्येऽहमित्यादिरूपं त्रिकालविषयमिति नित्यः । तथा प्रत्यभिज्ञाभावात् स एष इति प्रत्यभिज्ञा प्रत्यय आविद्वदङ्गनादिसिद्धः । तदभेदग्राहीति नित्य इति । उक्ताभिधानफलमाह क्षणभङ्गविघातार्थं निरन्वयक्षणिकवस्तुवादविघातार्थं भणितं त्रैलोक्यदर्शिभिस्ती-

र्थकैरेतदनन्तरोदितं न पुनरेष एव परमार्थ इति गाथार्थः । एतदेव दर्शयति । लोगे
गेए समये, निच्चो जीवो विन्नासउ अम्हं ॥ इहरा संसाराई, सव्वं पि न जुज्जए तस्स ॥२७१
।व्याख्या॥ लोके नैनं छिन्दन्ति शस्त्राणीत्यादिवचनप्रामाण्याद्वेदेषु स एष अकृयोऽज
इत्यादिश्रुतिप्रामाण्यात्समये न प्रकृतिर्न विकृतिः पुरुष इति वचनप्रामाण्यात् ।
केमित्याह । नित्यो जीवः अप्रच्युतानुत्पन्नस्थिरैकस्वन्नावः । एकान्तनित्य एव न
वैतन्न्याय्यमेकस्वन्नावतया संसरणादिव्यवहारोच्छेदप्रसंगादिति वक्ष्यत्यत आह ।
वेन्नाषयास्माकं विकल्पेन न्नजनया स्यान्नित्य इत्यादिरूपया द्रव्यार्थादेशान्नित्यः
र्यायार्थादेशादनित्य इत्यर्थः । इतरथा यद्येवं नान्युपगम्यते । ततः संसारादि
संसारालोचनादि सर्वमेव न युज्यते । तस्यात्मनः स्वन्नावान्तरानापत्त्या एकस्वन्नाव-
तया वार्तमानिकन्नावातिरेकेण न्नवान्तरानापत्तेरेवममूर्तत्वान्यत्वयोरपि विन्नाषा वेदि-
तव्या । अन्यथा व्यवहारान्नावप्रसंगात् । एकान्तामूर्तस्यैकान्तदेहन्निन्नस्य वातिपाता-
द्यसंन्नवादित्यत्र बहु वक्तव्यं तत्तु नोच्यते अक्षरगमनिकामात्रत्वात्प्रारम्नस्येति गाथा-
र्थः । एवमन्यत्वादिद्वारत्रयं व्याख्यायाधिकृतनिर्युक्तिगाथां व्याचिख्यासुराह । कारण
अविन्नागाउ, कारणअविणासउ य जीवस्स ॥ निच्चत्तं विन्नेयं, आगासपडाणुमाणाउ
॥२७२॥व्याख्या॥ कारणाविन्नागात्पटादेस्तन्त्वादेरिव कारणविन्नागान्नावादित्यर्थः ।
कारणाविनाशतश्च।कारणाविनाशश्च कारणानामेवान्नावात्। किमित्याह। जीवस्यात्मनो
नित्यत्वं विज्ञेयम् । कुत इत्याह।आकाशपटानुमानात् । अत्रानुमानशब्दो दृष्टान्तवच-
नः।आकाशपटदृष्टान्तात्। ततश्चैवं प्रयोगः। नित्य आत्मा स्वकारणविन्नागान्नावादाका-
शवत् । तथा कारणविनाशान्नावादाकाशवदेव । यस्त्वनित्यस्तस्य कारणविन्नागन्नावः ।
कारणविनाशन्नावो वा यथा पटस्येति व्यतिरेकः । पटाद्धि तन्तवो विन्नज्यन्ते विन-
श्यन्ति चेति नित्यत्वसिद्धिः । नित्यत्वादमूर्तः । अमूर्तत्वाद्देहादन्य इति गाथार्थः ॥
निर्युक्तिगाथायां कारणविन्नागान्नावात्कारणविनाशान्नावाच्चेति द्वारद्वयं व्याख्याय सांप्रतं
बन्धस्य प्रत्ययान्नावादिति व्याचिख्यासुराह ॥ हेउप्पन्नवो बंधो, जम्माणंतरहयस्स नो
जुत्तो। तज्जोगविरहउ खलु, चोराइघडाणुमाणाउ ॥२७३॥व्याख्या॥ हेतुप्रन्नवो हेतुज-
न्मा बन्धो ज्ञानावरणादिपुद्गलयोगलक्षणः जन्मानन्तरमृतस्योत्पत्त्यनन्तरविनष्टस्य
न युक्तो न घटमानः । तद्योगविरहत इति तैर्बन्धहेतुन्निर्मिथ्यादर्शनाविरतिप्रमादक-
षाययोगलक्षणैर्यो योगः संबन्धस्तद्विरहतस्तदन्नावादेव खलुशब्दस्यावधारणार्थत्वात् ।
चौरादिघटानुमानादित्यनुमानशब्दो दृष्टान्तवचनः । चौरादिघटादिदृष्टान्तात् ।
नहि उत्पत्त्यनन्तरविनाशी चौरश्चौर्यक्रियान्नावे बध्यते । स्थायी हि घटो जला-
दिना संयुज्यते इति व्यतिरेकार्थः । प्रयोगश्चात्र न क्षणिक आत्मा बन्धप्रत्ययत्वाच्चौ-

रवत् । नित्यत्वामूर्तत्वदेहान्यत्वयोजना पूर्ववदिति गाथार्थः। निर्युक्तिगाथायां बन्धस्य प्रत्ययाभावादिति व्याख्यातमधुना विरुद्धस्य चार्थस्याप्रादुर्भावाविनाशाच्चेति व्याख्यायते ॥ अविणासी खलु जीवो, विगारणुवलंभओ जहागासं ॥ उवलब्भंति विगारा, कुंभाइविणासिदव्वाणं ॥ २५४ ॥ व्याख्या ॥ अविनाशी खलु जीवो नित्य इत्यर्थः। कुत इत्याह । विकारानुपलम्भाद्घटादिविनाशे कपालादिवद्विशेषादर्शनाद्यथाकाशमाकाशवदित्यर्थः । एतदेव स्पष्टयति । उपलभ्यन्ते विकारा दृश्यन्ते कपालादयः कुंभादिविनाशिद्रव्याणां न चैवमत्रेत्यभिप्रायः । नित्यत्वामूर्तत्वदेहान्यत्वयोजना पूर्ववत् । इति गाथार्थः । निर्युक्तिगाथायां बन्धस्य प्रत्ययाभावादिति गाथार्थः । प्रकृतसंबद्धामेव निर्युक्तिगाथामाह ॥ निरामयामयभावा, बालकयाणुसरणा उवट्ठाणा ॥ सुत्ताईहिं अगहणा, जाईसरणा थणभिलासा ॥ २५५ ॥ व्याख्या ॥ निरामयामयभावात् निरामयस्य नीरोगस्यामयभावाद्रोगोत्पत्तेः । उपलक्षणं चैतत्सामयनिरामयभावस्य । तथा चैवं वक्तार उपलभ्यन्ते । पूर्वं निरामयोऽहमासं संप्रति सामयो जातः। सामयो वा निरामय इति । न चैतन्निरन्वयलक्षणविनाशिन्यात्मन्युपपद्यते । उत्पत्त्यनन्तराभावादिति प्रयोगार्थः । प्रयोगस्त्ववस्थित आत्मा अनेकावस्थानुभवनाद्बालकुमाराद्यवस्थानुभवितृदेवदत्तवत् । नित्यत्वादमूर्तः । अमूर्तत्वाद्देहादन्य इति योजना सर्वत्र कार्या । तथा बालकृतानुस्मरणात् । कृतशब्दोऽत्रानुभूतवचनस्ततश्च बालानुभूतस्मरणात् । तथा च बालेनानुभूतं वृद्धोऽप्यनुस्मरन् दृश्यते । नच अन्येनानुभूतमन्यः स्मरत्यतिप्रसंगात् । नचेदमनुस्मरणं भ्रान्तं बाधासिद्धेः । न च हेतुफलभावनिबन्धनमेतन्निरन्वयक्षणविनाशपक्षे तस्यैवासिद्धेः हेतोरनन्तरक्षणेऽभावापत्तेः । असतश्च सद्भावविरोधादिति प्रयोगार्थः।प्रयोगस्त्ववस्थित आत्मा पूर्वानुभूतार्थानुस्मरणात्तदन्यैवंभूतपुरुषवत् । उपस्थानादिति कर्मफलोपस्थानमत्र गृह्यते । यद्येनोपात्तं कर्म स एव तत्फलमुपभुंक्ते । अन्यश्च क्रियाकालोऽन्यश्च फलकालः । एकाधिकरणं चैतद्द्वयमन्यथा स्वकृतवेदनासिद्धेः । अन्यकृतान्योपभोगस्य निरुपपत्तिकत्वात् कृतनाशाकृताभ्यागमप्रसंगात् । संतानपक्षेऽपि कर्तृभोक्तृसंतानिनोर्नानात्वाविशेषाद्भक्तिभेदात्तस्यैव तथाभावाभ्युपगमे नित्यत्वापत्तेरिति प्रयोगार्थः । प्रयोगश्चावस्थित आत्मा स्वकृतकर्मफलवेदनात्कृषीवलादिवत् । श्रोत्रादिभिरग्रहणात् श्रोत्रादिभिरिन्द्रियैरपरिछित्तेः। नच श्रोत्रादिभिरपरिछिद्यमानस्य असत्त्वमवग्रहादीनां स्वसंवेदनसिद्धत्वात् । बौद्धैरप्यतीन्द्रियज्ञानाभ्युपगमात् । ज्ञानस्य च गुणत्वात् । गुणस्य च गुणिनमन्तरेणाभावात् । प्राक्तनज्ञानस्यैव गुणित्वानुपपत्तेः । तस्यापि गुणत्वादिति प्रयोगार्थः । प्रयोगश्च नित्य आत्मा गुणित्वे सत्यतीन्द्रियत्वात् आकाशवत् । तथा जातिस्मरण

दिति । जातेरतिक्रान्तायाः स्मरणात् । न चेदमनुस्मरणमननुभूतस्यान्यानुभूतस्य च भवत्यतिप्रसंगात् । दृश्यते च क्वचिदिदं न चासौ प्रतारकः तत्कथितार्थसंवादनात् । अनुभवाविशेषे च सर्वेषामेव कस्मान्न भवतीति चेदुच्यते । कर्मप्रतिबन्धसंबन्धाद् दृष्टानुभवाभावादिह लोकेऽपि सर्वेषां सर्वत्रानुस्मरणादर्शनान्न खलु इह लोके सर्वत्रानुस्मरणदर्शनम् । तद्वदिहापि क्वचिज्जातौ सर्वेषामस्त्विति चेन्न । नष्टचेतसां सर्वत्रानुस्मरणशून्येन व्यभिचारादिति प्रयोगार्थः । प्रयोगश्च बालकृतानुस्मरणवद्द्रष्टव्य इति । तथा स्तनाभिलाषादिति । तदहर्जातबालकस्यापि स्तनाभिलाषदर्शनात् । नचान्यकालाननुभूतस्तनपानस्याथमुपपद्यते । प्रयोगश्च । तदहर्जातबालकस्याद्यस्तनाभिलाषोऽभिलाषान्तरपूर्वकोऽभिलाषत्वादन्यस्तनाभिलाषवत् । तद्वदप्रथमत्वसाधनादविरुद्धो हेतुरिति चेन्न प्रथमत्वानुभवेन बाधनात् । असति च बाधने विरुद्ध इति न्यायादन्यथा हेतूच्छेदप्रसंगादित्यत्र बहु वक्तव्यं तत्तु नोच्यते अक्षरगमनिकामात्रस्य प्रस्तुतत्वादिति। नित्यादिक्रियायोजना पूर्ववदिति निर्युक्तिगाथार्थः । एतामेव निर्युक्तिगाथां लेशतो व्याचिख्यासुराह भाष्यकारः ॥ रोगस्सामयसन्ना, बालकयं जं जुवाणुसंभरइ ॥ जं कयमन्नंमि भवे, तस्सेवन्नहुवन्नाणा ॥ २७६ ॥ व्याख्या ॥ रोगस्यामय इतिसंज्ञाबालकृतं किमपि वस्तु यद्यस्माद्युवानुस्मरति । तथा यत्कृतमन्यस्मिन् भवे कुशला कुशलं कर्म तस्यैव कर्मणोऽन्यत्र भवान्तरे उपस्थानात्सर्वत्र भावार्थयोजना कृतैवेति गाथार्थः ॥ णिच्चो अणिंदियत्ता, खणिउ नवि होइ संभरणा ॥ थणअभिलासा य तहा, अमउ नउ मिम्मउव्व घडो ॥ २७७ ॥ व्याख्या ॥ नित्य इति । सर्वत्र क्रियाभिसंबध्यते । अनिन्द्रियत्वाच्छ्रोत्रादिभिरग्रहणादित्यर्थः । विज्ञेयो ज्ञातव्यः । तथा च जातिस्मरणात् पाठान्तरं वा । क्षणिको न भवति । जातिस्मरणादित्येतदप्यदुष्टमेव विधिप्रतिषेधाभ्यां साध्यार्थाभिधानात् । स्तनाभिलाषाच्च । तथा अमयोऽयस्मात्सा नतु मृन्मय इव घटस्ततश्चाकारण इत्यर्थः । एतदपि नित्यत्वादिप्रसाधकमिति निर्युक्तिगाथायामनुपन्यस्तमप्युक्तम् सूक्ष्मधिया भाष्यकारेणेति गाथार्थः । तृतीयां निर्युक्तिगाथामाह सवन्नुवदिठत्ता, सकम्मफलभोयणा अमुत्तत्ता ॥ जीवस्स सिद्धमेवं, निच्चत्तममुत्तमन्नत्तं ॥२७८॥ व्याख्या ॥ सर्वज्ञोपदिष्टत्वादिति नित्यो जीव इति सर्वज्ञोक्तत्वात् । अवितथं च सर्वज्ञवचनं तस्य रागादिरहितत्वादिति । स्वकर्मफलभोजनादिति स्वोपात्तकर्मफलभोगादित्यर्थः । उपस्थापनादेतन्न भिद्यत इति चेन्न अभिप्रायापरिज्ञानात् । तत्र हि येन कृतं तस्मिन्नेव कर्तरि कर्मोपतिष्टत इत्युक्तम् । तच्चैकस्मिन्नपि जन्मनि संभवतीदं त्वन्यजन्मान्तरापेक्षयापि गृह्यत इति न दोषः । तथा अमूर्तत्वादिति मूर्तिरहितत्वादेतदपि श्रोत्रादिभिरग्रहणादित्यस्मान्न भिद्यत इति चेन्न । तत्र हि श्रोत्रादिभिर्न ग्रह-

रवत् । नित्यत्वामूर्तत्वदेहान्यत्वयोजना पूर्ववदिति गाथार्थः। निर्युक्तिगाथायां बन्धस्य प्रत्ययाभावादिति व्याख्यातमधुना विरुद्धस्य चार्थस्याप्राडुर्भावाविनाशाच्चेति व्याख्यायते ॥ अविणासी खलु जीवो, विगारणुवलंभर्ज जहागासं ॥ उवलप्भंति विगारा, कुंभाइविणासिदव्वाणं ॥ २३४ ॥ व्याख्या ॥ अविनाशी खलु जीवो नित्य इत्यर्थः। कुत इत्याह । विकारानुपलम्भाद्घटादिविनाशे कपालादिवद्विशेषादर्शनाद्यथाकाशमाकाशवदित्यर्थः । एतदेव स्पष्टयति । उपलभ्यन्ते विकारा दृश्यन्ते कपालादयः कुंभादिविनाशिद्रव्याणां न चैवमत्रेत्यभिप्रायः । नित्यत्वामूर्तत्वदेहान्यत्वयोजना पूर्ववत् । इति गाथार्थः । निर्युक्तिगाथायां बन्धस्य प्रत्ययाभावादिति गाथार्थः । प्रकृतसंबद्धामेव निर्युक्तिगाथामाह ॥ निरामयामयभावा, बालकयाणुसरणा उवठ्ठाणा ॥ सुत्ताईहिं अगहणा, जाईसरणा थणभिलासा ॥ २३५ ॥ व्याख्या ॥ निरामयामयभावात् निरामयस्य नीरोगस्यामयभावाद्रोगोत्पत्तेः । उपलक्षणं चैतत्सामयनिरामयभावस्य । तथा चैवं वक्तार उपलभ्यन्ते । पूर्वं निरामयोऽहमासं संप्रति सामयो जातः। सामयो वा निरामय इति । न चैतन्निरन्वयलक्षणविनाशिन्यात्मन्युपपद्यते । उत्पत्त्यनन्तराभावादिति प्रयोगार्थः । प्रयोगस्त्ववस्थित आत्मा अनेकावस्थानुभवनाद्बालकुमाराद्यवस्थानुभवितृदेवदत्तवत् । नित्यत्वादमूर्तः । अमूर्तत्वाद्देहादन्य इति योजना सर्वत्र कार्या । तथा बालकृतानुस्मरणात् । कृतशब्दोऽत्रानुभूतवचनस्ततश्च बालानुभूतस्मरणात् । तथा च बालेनानुभूतं वृद्धोऽप्यनुस्मरन् दृश्यते । नच अन्येनानुभूतमन्यः स्मरत्यतिप्रसंगात् । नचेदमनुस्मरणं भ्रान्तं बाधासिद्धेः । न च हेतुफलभावनिबन्धनमेतन्निरन्वयक्षणविनाशपक्षे तस्यैवासिद्धेः हेतोरनन्तरक्षणेऽभावापत्तेः। असतश्च सद्भावविरोधादिति प्रयोगार्थः।प्रयोगस्त्ववस्थित आत्मा पूर्वानुभूतार्थानुस्मरणात्तदन्यैवंभूतपुरुषवत् । उपस्थानादिति कर्मफलोपस्थानमत्र गृह्यते । यद्येनोपात्तं कर्म स एव तत्फलमुपभुङ्क्ते । अन्यश्च क्रियाकालोऽन्यश्च फलकालः । एकाधिकरणं चैतद्द्वयमन्यथा स्वकृतवेदनासिद्धेः । अन्यकृतान्योपभोगस्य निरुपपत्तिकत्वात् कृतनाशाकृताभ्यागमप्रसंगात् । संतानपक्षेऽपि कर्तृभोक्तृसंतानिनोर्नानात्वाविशेषाद्भक्तिभेदात्तस्यैव तथाभावाभ्युपगमे नित्यत्वापत्तेरिति प्रयोगार्थः । प्रयोगश्चावस्थित आत्मा स्वकृतकर्मफलवेदनात्कृषीवलादिवत् । श्रोत्रादिभिरग्रहणात् श्रोत्रादिभिरिन्द्रियैरपरिच्छित्तेः। नच श्रोत्रादिभिरपरिच्छिद्यमानस्य असत्त्वमवग्रहादीनां स्वसंवेदनसिद्धत्वात् । बौद्धैरप्यतीन्द्रियज्ञानाभ्युपगमात् । ज्ञानस्य च गुणत्वात् । गुणस्य च गुणिनमन्तरेणाभावात् । प्राक्तनज्ञानस्यैव गुणित्वानुपपत्तेः । तस्यापि गुणत्वादिति प्रयोगार्थः । प्रयोगश्च नित्य आत्मा गुणित्वे सत्यतीन्द्रियत्वात् आकाशवत् । तथा जातिस्मरणा

दिति । जातेरतिक्रान्तायाः स्मरणात् । न चेदमनुस्मरणमननुभूतस्यान्याजुभूतस्य च
भवत्यतिप्रसंगात् । दृश्यते च क्वचिदिदं न चासौ प्रतारकः तत्कथितार्थसंवादनात्
अनुभवाविशेषे च सर्वेषामेव कस्मान्न भवतीति चेदुच्यते । कर्मप्रतिबन्धसंबन्धाद
दृढानुभवाभावादिह लोकेऽपि सर्वेषां सर्वत्रानुस्मरणादर्शनान्न खलु इह लोके सर्वत्रा-
नुस्मरणदर्शनम् । तद्वदिहापि क्वचिज्जातौ सर्वेषामस्त्विति चेन्न । नष्टचेतसां सर्वत्रानु-
स्मरणशून्येन व्यभिचारादिति प्रयोगार्थः । प्रयोगश्च बालकृतानुस्मरणवद्द्रष्टव्य इति ।
तथा स्तनाभिलाषादिति । तदहर्जातबालकस्यापि स्तनाभिलाषदर्शनात् । नचान्यका-
लाननुभूतस्तनपानस्यायमुपपद्यते । प्रयोगश्च । तदहर्जातबालकस्याद्यस्तनाभिलाषोऽभि-
लाषान्तरपूर्वकोऽभिलाषत्वादन्यस्तनाभिलाषवत् । तद्वदप्रथमत्वसाधनादविरुद्धो हेतु-
रिति चेन्न प्रथमत्वानुभवेन बाधनात् । असति च बाधने विरुद्ध इति न्यायादन्यथा
हेतूच्छेदप्रसंगादित्यत्र बहु वक्तव्यं तत्तु नोच्यते अक्षरगमनिकामात्रस्य प्रस्तुतत्वा-
दिति। नित्यादिक्रियायोजना पूर्ववदिति निर्युक्तिगाथार्थः ।एतामेव निर्युक्तिगाथां ले-
शतो व्याचिख्यासुराह भाष्यकारः ॥ रोगस्सामयसन्ना, बालकयं जं जुवाणुसंभरइ ॥
जं कयमन्नंमि भवे, तस्सेवन्नभुवन्नाणा ॥ २७६ ॥ व्याख्या ॥ रोगस्यामय इतिसंज्ञा-
बालकृतं किमपि वस्तु यद्यस्माद्युवानुस्मरति । तथा यत्कृतमन्यस्मिन् भवे कुशला
कुशलं कर्म तस्यैव कर्मणोऽन्यत्र भवान्तरे उपस्थानात्सर्वत्र भावार्थयोजना कृतैवेति
गाथार्थः ॥ णिच्चो अणिंदियत्ता, खणिउ नवि होइ संभरणा ॥ थणअभिलासा य
तहा, अमउ नउ मिम्मउव घडो ॥ २७७ ॥ व्याख्या ॥ नित्य इति । सर्वत्र क्रियाभिसं-
बध्यते । अनिन्द्रियत्वाच्छ्रोत्रादिभिरग्रहणादित्यर्थः । विज्ञेयो ज्ञातव्यः । तथा च जाति-
स्मरणात् पाठान्तरं वा । क्षणिको न भवति । जातिस्मरणादित्येतदप्यदुष्टमेव विधिप्र-
तिषेधाभ्यां साध्यार्थाभिधानात् । स्तनाभिलाषाच्च। तथा असयोऽयमात्मा नतु मृन्मय
इव घटस्ततश्चाकारण इत्यर्थः । एतदपि नित्यत्वादिप्रसाधकमिति निर्युक्तिगाथायाम-
नुपन्यस्तमप्युक्तम् सूक्ष्मधिया भाष्यकारेणेति गाथार्थः । तृतीयां निर्युक्तिगाथामाह
सवन्नुवदिठत्ता, सकम्मफलभोयणा अमुत्तत्ता ॥ जीवस्स सिद्धमेवं, निच्चत्तममुत्तमन्नत्तं
॥२७८॥ व्याख्या ॥ सर्वज्ञोपदिष्टत्वादिति नित्यो जीव इति सर्वज्ञोक्तत्वात् । अवितथं
च सर्वज्ञवचनं तस्य रागादिरहितत्वादिति ।स्वकर्मफलभोजनादिति स्वोपात्तकर्मफल-
भोगादित्यर्थः । उपस्थापनादेतन्न भिद्यत इति चेन्न अभिप्रायापरिज्ञानात् । तत्र हि
येन कृतं तस्मिन्नेव कर्तरि कर्मोपतिष्ठत इत्युक्तम् । तच्चैकस्मिन्नपि जन्मनि संभवतीदं
त्वन्यजन्मान्तरापेक्षयापि गृह्यत इति न दोषः । तथा अमूर्तत्वादिति मूर्तिरहितत्वा-
देतदपि श्रोत्रादिभिरग्रहणादित्यस्मान्न भिद्यत इति चेन्न । तत्र हि श्रोत्रादिभिर्न गृह्य-

ते । इत्येतडुक्तमिह तु तत्स्वरूपमेव नियम्यते निरूप्यत इति । मूर्ताणूनामपि श्रोत्रादि- भिरग्रहणादिति द्वारत्रयमप्युपसंहरन्नाह ॥ जीवस्य सिद्धमेवं नित्यत्वममूर्तत्वमन्य- त्वमिति गाथार्थः। मूलद्वारगाथाद्वये व्याख्यातमन्यत्वादिद्वारत्रयमिदानीं कर्तृद्वारा- वसरस्तथाचाह ॥ कत्तत्ति दारमहुणा, सकम्मफलनोइणो जर्ड जीवा ॥ वाणियकि- सीवला इव, कविलमयनिसेहणं एयं ॥ २७ए ॥ व्याख्या ॥ कर्तेति द्वारमधुना तदेत- द्व्याख्यायते । स्वकर्मफलनोगिनो यतो जीवास्ततः कर्तार इति । वणिक्कृषीवलादय इव नह्यमी अकृतमुपभुञ्जते। इति प्रयोगार्थः। प्रयोगस्तु कर्तात्मा स्वकर्मफलनोक्तृत्वात्क- र्षकादिवत् । ऐदंपर्यमाह । कपिलमतनिषेधनमेतत्सांख्यमतनिराकरणमेतत्तत्राकर्तृवाद- प्रसिद्धेरिति गाथार्थः। मूलद्वारगाथाद्वये व्याख्यातं कर्तृद्वारमिदानीं देहव्यापित्वद्वा- रावसर इत्याह नाष्यकारः॥ वावित्ति दारमहुणा, देहवावी मर्जग्गिउण्हं व ॥ जीवो नउ सवगर्ज, देहे लिंगोवलंनार्ज ॥ २७० ॥ व्याख्या ॥ व्यापीति द्वारमधुना तदेतद्व्या- ख्यायते । देहव्यापी शरीरमात्रं व्याप्तुं शीलमस्येति तथा मत इष्टः प्रवचनज्ञैः जीवो नतु सर्वग इति योगः । तुशब्दस्यावधारणार्थत्वान्न चाएवादिमात्रः । कुत इत्याह । देहे लिङ्गोपलम्नात् शरीर एव सुखादितल्लिङ्गोपलब्धेः । अग्न्यौष्ण्यवत् । उष्णत्वं ह्यग्निलिङ्गं नान्यत्राग्नेर्नेत्स्वनग्नाविति गाथाप्रयोगार्थः । प्रयोगस्तु शरीर- नियतदेश आत्मा परमितदेशे लिङ्गोपलब्धेरग्न्यौष्ण्यवत्। इति गाथार्थः । व्याख्याता प्रथमा मूलद्वारगाथा । सांप्रतं द्वितीया व्याख्यायते । तत्र प्रथमं गुणीति द्वारं तद्व्याचिख्यासयाह नाष्यकारः ॥ अहुणा गुणित्ति दारं, होइ गुणेहिं गुणित्ति विन्नेर्ज ॥ ते नोगजोगउवर्ज-गमाइ रूवाइ व घडस्स ॥ २७१ ॥ व्याख्या ॥ अधुना गुणीति द्वारं तदेतद्व्याख्यायते । नवति गुणैर्हि गुणी । न तद्व्यतिरेकेणेत्येवं विज्ञेयः। अनेन गुण- गुणिनोर्नेदान्नेदमाह । ते नोगयोगोपयोगादयो गुणा इत्यादिशब्दादमूर्तत्वादिपरि- ग्रहः । निदर्शनमाह । रूपादय इव घटस्य गुणा इति गाथार्थः । व्याख्यातं मूलद्वार- गाथायां गुणिद्वारमधुनोर्ध्वगतिद्वारावसर इत्याह नाष्यकारः ॥ उद्धं गइत्ति अहुणा, अगुरुलहुत्ता सनावउद्धगइ ॥ दिठंतलाउएणं,एरंडफलाइएहिं व ॥२७२॥व्याख्या॥ उर्ध्व- गतिरित्यधुना द्वारं तदेतद्व्याख्यायते। अगुरुलघुत्वात्कारणात्स्वनावतः कर्मविप्रमुक्तः सन्नूर्ध्वगतिर्जीव इति गम्यते । यद्येवं तर्हि कथमधो गछत्यत्राह । दृष्टान्तोऽला- म्बुना तुम्बकेन यथा तत्स्वनावत ऊर्ध्वगमनरूपमपि मृल्लेपाज्जलेऽधो गछति । तदपग- मादूर्ध्वमा जलान्तादेवमात्मापि कर्मलेपादधो गछति। तदपगमादूर्ध्वमालोकान्तादिति। एरण्डफलादिनिश्च दृष्टान्त इत्यनेन दृष्टान्तबाहुल्यं दर्शयति। यथा चैरण्डफलमपि बन्धनपरिभ्रष्टमूर्ध्वं गछत्यादिशब्दादग्न्यादिपरिग्रह इति गाथार्थः । व्याख्यातं तृ-

तीयमूलद्वारगाथायामूर्ध्वगतिद्वारं सांप्रतं निर्मयद्वारव्याचिख्यासयाह ॥ अमर्ज य होइ जीवो, कारणविरहा जहेव आगासं ॥ समयं च होअनिच्चं, मिम्मयघडतंतुमाईयं ॥ २०३ ॥ व्याख्या ॥ अमयश्च भवति जीवः । न किम्मयोऽपीत्यर्थः । कुत इत्याह । कारणविरहात् अकारणत्वात् । यथैवाकाशमाकाशवदित्यर्थः । समयं वस्तु भवत्यनित्यम्। एतदेव दर्शयति । मृन्मयघटतन्त्वादौ । यथा मृन्मयो घटस्तन्तुमयः पट इत्यादि । न पुनरात्मा नित्य इति दर्शितम्। आहास्मिन्द्वारे सत्यमयो नतु मृन्मय इव घट इति प्राक्किमर्थमुक्तमित्युच्यते। अत एव द्वारादनुग्रहार्थमुक्तमिति लक्ष्यते । भवति चासकृच्छ्रवणादक्लेशेण परिज्ञानमित्यनुग्रहः। अतिगम्भीरत्वाद्भाष्यकारस्य न वयमभिप्रायं विद्म इति। अन्ये त्वभिदधत्यन्यकर्तृकैवासौ गाथेति गाथार्थः । व्याख्यातं द्वितीयमूलद्वारगाथायां निर्मयद्वारमधुना साफल्यद्वारावसरस्तथा चाह भाष्यकारः ॥ साफल्लदारमहुणा, निच्चानिच्चपरिणामिजीवम्मि ॥ होइ तयं कम्माणं, इहरेगसभावर्ज जुत्तं ॥ २०४ ॥ व्याख्या ॥ साफल्यद्वारमधुना तदेतद्व्याख्यायते। नित्यानित्य एव परिणामिनि जीव इति योगः । भवति तत्साफल्यं कालान्तरफलप्रदानलक्षणम् । केषामित्याह कर्मणां कुशलाकुशलानां कालभेदेन कर्तृभोक्तृपरिणामभेदे सत्यात्मनस्तदुभयोपपत्तेः कर्मणां कालान्तरफलप्रदानमिति। इतरथा पुनर्यद्येवं नाभ्युपगम्यते तत एकस्वभावतः कारणादयुक्तं तत्कर्मणां साफल्यमिति । एतदुक्तं भवति । यदि नित्य आत्मा कर्तृस्वभाव एव कुतोऽस्य भोगः, भोक्तृस्वभावे वा कर्तृत्वं क्षणिकस्य तु कालद्वयाभावादेवैतदुभयमनुपपन्नम्। उभये च सति कालान्तरफलप्रदानेन कर्म सफलमिति गाथार्थः । द्वितीयमूलद्वारगाथायां व्याख्यातं साफल्यद्वारमधुना परिमाणद्वारमाह॥ जीवस्स उ परिमाणं, विच्छरउ जाव लोगमेत्तं तु ॥ उगाहणा य सुहुमा, तस्स पएसा असंखेज्जा ॥ २०५ ॥ व्याख्या ॥ जीवस्य तु परिमाणं विततस्य विस्तरतो विस्तरेण यावल्लोकमात्रमेव। एतच्च केवलिसमुद्घातचतुर्थसमये भवति । तत्रावगाहना च सूक्ष्मा विततैकैकप्रदेशरूपा भवति । तस्य जीवस्य प्रदेशाश्चासंख्येयाः सर्वे एव लोकाकाशप्रदेशतुल्या इति गाथार्थः । अनेकेषां जीवानां गणनापरिमाणमाह ॥ पच्छेण व कुलएण व, जह कोइ मिणेज्ज सव्वधन्नाइ ॥ एवं मविज्जमाणा, हवंति लोगा अणंताउ ॥ २०६ ॥ व्याख्या ॥ प्रस्थेन वा चतुःकुडवमानेन कुडवेन वा चतुःसेतिकामानेन । यथा कश्चित्प्रमाता मिनुयात्सर्वधान्यानि व्रीह्यादीनि । एवं मीयमाना असद्भावस्थापनया भवन्ति लोका अनन्तास्तु जीवभृता इति भावः। आह, यद्येवं कथमेकस्मिन्नेव ते लोके माता इति। उच्यते, सूक्ष्मावगाहनया यत्रैकस्तत्रानन्ता व्यवस्थिता इह तु प्रत्येकावगाहनया चिन्त्य-

ते। इति न दोषः। दृष्टं च बादरद्रव्याणामपि प्रदीपप्रभापरमाण्वादीनां तथा परिणामतो भूयसामेकत्रैवावस्थानमिति गाथार्थः । व्याख्यातं द्वितीयमूलद्वारगाथायां परिमाणद्वारं तद्व्याख्यानाच्च द्वितीया मूलद्वारगाथा जीवपदं चेति । सांप्रतं निकायपदं व्याचिख्यासुराह ॥ णामं ठवणसरीरे, गई णिकायत्थिकाय दविए य ॥ माउगपज्ञवसंगह-भारे तह भावकाए य ॥ २७७॥ व्याख्या॥ नामस्थापने क्षुण्णे। शरीरकायः शरीरमेव तत्प्रायोग्याणुसंघातात्मकत्वात्। गतिकायो यो भवान्तरगतौ। स च तैजसकार्मणलक्षणः। निकायकायः षड्जीवनिकायः। अस्तिकायो धर्मास्तिकायादिः। द्रव्यकायश्च त्र्यादिघटादिसमुदायः। मातृकाकायस्त्र्यादीनि मातृकाक्षराणि । पर्यायकायो द्वेधा जीवाजीवभेदेन । जीवपर्यायकायो ज्ञानादिसमुदायः । अजीवपर्यायकायो रूपादिसमुदायः । संग्रहकायः संग्रहैकशब्दवाच्यस्त्रिकटुकादिवत् । भारकायः कापोतीदृष्टान्तेन व्याचक्ष्यते ॥ एको काउ डुहा जाउ, एगो चिठइ एगो मारिउ ॥ जीवंतो मएण मारिउ, तल्लव माणव केण हेउणा॥ २७८॥ व्याख्या॥ उदाहरणम्। एगो काहरो तलाए दो घडा पाणियस्स भरेऊण कावोडीए वहइ । सो एगो आउक्कायकायो दोसु घडेसु डुहा कउ । तउ सो काहरो गछंतो परकलिउ। एगो घडो भग्गो। तम्मि जो आउक्काउ सो मउ। इयरम्मि जीवइ । तस्स अभावे सो वि भग्गो। ताहे सो तेण पुव्वमएण मारिउ त्ति भण्णइ । अहवा एगो घडो आउक्कायभरिउ ताहे तमाउकायं डुहा काऊण अद्धो ताविउ सो मउ। अताविउ जीवइ। ताहे सो वि तछेव पक्खित्तो तेण मएण जीवंतो मारिउ त्ति । एस भारकाउ गउ । भावकायश्चौदयिकादिसमुदायः । इह च निकायः काय इत्यनर्थान्तरमिति कृत्वा कायनिक्षेप इत्यदुष्ट एवेति गाथार्थः॥ इछंपुण अहिगारो निकायकाएण होइ सुत्तंमि ॥ उच्चरिअछसरिसाण-कित्तणं सेसगाणं पि ॥२७९॥व्याख्या॥ अत्र पुनः सूत्र इति प्रयोगः सूत्र इत्यधिकृताध्ययने। किमित्याह। अधिकारो निकायकायेन भवति। अधिकारः प्रयोजनं, शेषाणामुपन्यासवैयर्थ्यमाशंक्याह। उच्चरितार्थसदृशानां उच्चरितो निकायः तदर्थतुल्यानां कीर्तनं संशब्दनं शेषाणामपि नामादिकायानां व्युत्पत्तिहेतुत्वात्प्रदेशान्तरोपयोगित्वाच्चेति गाथार्थः । व्याख्यातं निकायपदम् । उक्तो नामनिष्पन्नो निक्षेपः सांप्रतं सूत्रालापकनिष्पन्नस्यावसरः । इत्यादिचर्चः पूर्ववत्तावद्यावत्सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं तच्चेदम्। सुयं मे इत्यादि। श्रूयते तदिति श्रुतम् प्रतिविशिष्टार्थप्रतिपादनफलं वाग्योगमात्रं भगवता निसृष्टमात्मीयश्रवणकोटरप्रविष्टं क्षायोपशमिकभावपरिणामाविर्भावकारणं श्रुतमित्युच्यते । श्रुतमवधृतमवगृहीतमिति पर्यायाः। मयेत्यात्मपरामर्शः। आयुरस्यास्तीत्यायुष्मान् । कः कमेवमाह । सुधर्मा जम्बुस्वामिनमिति । तेनेति भुवनभर्तुः परा-

मर्शः । ज्गः समग्रैश्वर्यादिलक्षण इति । उक्तं च ॥ ऐश्वर्यस्य समग्रस्य रूपस्य यशसः श्रियः ॥ धर्मस्याथ प्रयत्नस्य षण्णां ज्ग इतीङ्गना ॥ सोऽस्यास्तीति ज्गवांस्तेन ज्गवता वर्धमानस्वामिनेत्यर्थः । एवमिति प्रकारवचनः शब्दः । आख्यातमिति केवलज्ञानेनोपलज्यावेदितम् । किमत आह । इह खलु षड्जीवनिकायनामाध्ययनमस्तीति वाक्यशेषः । इहेति लोके प्रवचने वा । खलु शब्दादन्यतीर्थकृत्प्रवचनेषु च षड्जीवनिकायेति पूर्ववत् । नामेत्यजिधानम् । अध्ययनमिति पूर्ववदेव । इह च श्रुतं च मयेत्यनेनात्मपरामर्शेनैकान्तक्षणजङ्गापोहमाह । तत्रैवंजूतार्थानुपपत्तेरित्युक्तं च ॥ एगंतखणियपक्खे, गहणं चिअ सवहा ण अत्ताणं ॥ अणुसरणसासणाइं, कुओ उ ते लोगसिद्धाइं ॥ तथा आयुष्मन्निति च प्रधानगुणनिष्पन्नेनामन्त्रणवचसा गुणवते शिष्यायागमरहस्यं देयं नागुणवत इत्याह तदनुकम्पाप्रवृत्तेरिति । उक्तं च ॥ आमे घडे निहत्तं, जहा जलं तं घडं विणासेइ ॥ इअ सिद्धंतरहस्सं, अप्पाहारं विणासेइ ॥ आयुश्च प्रधानो गुणः । सति तस्मिन्नव्यवच्छित्तिजावात्तथा तेन ज्गवता एवमाख्यातमित्यनेन स्वमनीषिकानिरासाच्छास्त्रपारतन्त्र्यप्रदर्शनेन नह्यसर्वज्ञेन अनात्मवता अन्यतस्तथाजूतात्सम्यगनिश्चित्य परलोकदेशना कार्येत्येतदाह । विपर्ययसंज्ञवाडुक्तं च ॥ किं एत्तो पावयरं, संमं अणहिगयधम्मसब्भावो ॥ अन्नं कुदेसणाए, कठ्ठयरागंमि पाडेइ ॥ अथवान्यथा व्याख्यायते सूत्रैकदेशः । आउसंतेणं ति ज्गवत एव विशेषणम् । आयुष्मता ज्गवता चिरजीविनेत्यर्थः । मङ्गलवचनं चैतदथवा जीवता साक्षादेव अनेन च गणधरपरंपरागमस्य जीवनवियुक्तानादिशुद्धवक्तृश्चापोहमाह । देहाद्यजावेन तथाविधप्रयत्नाजावात् । उक्तं च ॥ वयणं न कायजोगा-जावेण य सो अणादिसुद्धस्स ॥ गहणंमि य णो हेऊ, सत्थं अत्तागमो कहणु ॥ अथवा आवसंतेणं ति । गुरुकुलमावसता अनेन च शिष्येण गुरुचरणसेविना सदा जाव्यमित्येतदाह । ज्ञानादिवृद्धिसद्भावादिति । एतडुक्तं च । णाणस्स होइ जागी, थिरयरयो दंसणे चरित्ते य ॥ धन्ना आवकहाए, गुरुकुलवासं न मुंचंति ॥ अथवा आमुसंतेणं आमृशता ज्गवत्पादारविन्दयुगलमुत्तमाङ्गेन । अनेन च विनयप्रतिपत्तेर्गरीयस्त्वमाह । विनयस्य मोक्षमूलत्वात् । उक्तं च ॥ मूलं संसारस्स, होंति कसाया अणंतपत्तस्स ॥ विणओ ठाणपउत्तो, डुक्खविमुक्कस्स मोक्खस्स ॥ कृतं प्रसंगेन प्रकृतं प्रस्तुमः । तत्र इह खलु षड्जीवनिकायिका नामाध्ययनमस्तीत्युक्तम् । अत्राह । एषा षड्जीवनिकायिका केन प्रवेदिता प्ररूपिता वेत्यत्रोच्यते । तेनैव ज्गवता यत आह । समणेणं ज्गवया महावीरेणं कासवेणं पवेइया सुअक्खाया सुपन्नत्तेत्ति । सा च तेन श्रमणेन महातपस्विना ज्गवता समग्रैश्वर्यादियुक्तेन महावीरेण । शूर वीर विक्रान्ताविति कषायादिशत्रुजयान्महाविक्रान्तो

महावीरः । उक्तं च ॥ विदारयति यत्कर्म तपसा च विराजते ॥ तपोवीर्येण युक्तश्च तस्माद्वीर इति स्मृतः । महांश्चासौ वीरश्च महावीरः तेन महावीरेण। काश्यपेनेति काश्यपसगोत्रेण प्रवेदिता नान्यतः कुतश्चिदाकर्ण्य ज्ञाता । किंतर्हि । स्वयमेव केवलालोकेन प्रकर्षेण वेदिता प्रवेदिता विज्ञातेत्यर्थः । तथा स्वाख्यातेति सदेव-मनुष्यासुरायां पर्षदि सुष्ठु आख्याता स्वाख्याता। तथा सुप्रज्ञप्तेति। सुष्ठु प्रज्ञप्ता यथैवा-ख्याता तथैव सुष्ठु सूक्ष्मपरिहारासेवनेन प्रकर्षेण सम्यगासेवितेत्यर्थः । अनेकार्थत्वा-द्धातूनां ज्ञपिरासेवनार्थः । तां चैवंनूतां षड्जीवनिकायिकां श्रेयो मेऽध्येतुं श्रेयः पथ्यं हितम् । ममेत्यात्मनिर्देशः । बान्दसत्वात्सामान्येन ममेत्यात्मनिर्देश इत्यन्ये । ततश्च श्रेय आत्मनोऽध्येतुम् । अध्येतुमिति पठितुं श्रोतुं नावयितुम् । कुत इत्याह । अध्ययनं धर्मप्रज्ञप्तिः । निमित्तकारणहेतुषु सर्वासां प्रायो दर्शनमिति वचनात् हेतौ प्रथमा । अध्ययनत्वादध्यात्मानयनाच्चेतसो विशुद्ध्यापादनादित्यर्थः । एतदेव कुत इत्याह । ध-र्मप्रज्ञप्तेः प्रज्ञपनं प्रज्ञप्तिः धर्मस्य प्रज्ञप्तिः धर्मप्रज्ञप्तिः । ततो धर्मप्रज्ञप्तेः कारणा-च्चेतसो विशुद्ध्यापादना[illegible] श्रेय आत्मनोऽध्येतुमिति । अन्ये तु व्याचक्षते । अध्य-यनं धर्मप्रज्ञप्तिरिति । पूर्वोपन्यस्ताध्ययनस्यैवोपपादेयतयानुवादमात्रमेतदिति ॥

कयरा खलु सा बज्जीवणिया नामज्झयणं समणेणं नयवया म-हावीरेणं कासवेणं पवेइया सुअक्काया सुपन्नत्ता सेयं मे अहि-ज्जिउं धम्मपन्नत्ती ॥ इमा खलु सा बज्जीवणिया नामज्झयणं समणेणं नगवया महावीरेणं कासवेणं पवेइया सुअक्काया सुपन्नत्ता ॥ सेयं मे अहिज्जिउं अज्झयणं धम्मपन्नत्ती ॥

---

( अवचूरिः ) शिष्यः पृच्छति । कतरा खलु इत्यादि सूत्रम् उक्तार्थमेवानेनैत-द्दर्शयति । विहायाभिमानं संविग्नेन शिष्येण सर्वकार्येष्वेव गुरुः प्रष्टव्य इति आचार्य आह । इमा खल्वित्यादि सूत्रमुक्तार्थमेवानेनाप्येतद्दर्शयति गुणवते शिष्याय गुरुणा-प्युपदेशो दातव्य एवेति ।

---

(अर्थ.) हवे पूर्वोक्त अर्थसांनलीने शिष्यपूछे छे केः—कयरत्ति। हे गुरो ! महावीर स्वा-मीए कहेली षड्जीवनिकायिका ते केवी ? (अहीं 'समणेणं' एथी आरंनीने "धम्म-पन्नत्ती" ए सुधीनो सूत्रनो नाग जे छे, तेनो अर्थ उपर लख्यो छे, माटे फरी लखता नथी.) गुरु उत्तर कहे छेः—इमा खलु त्ति । ( इमा के० ) एषा एटले आ वक्ष्य माण प्रकारनी ( सा के० ) ते ( बज्जीवणियाणामज्झयणं के० ) षड्जीवनिका नामक अ-

ध्ययन भगवान् श्रीवर्धमानस्वामीए कह्युं छे. (एमां 'समणेणं' इत्यादिकनो अर्थ पूर्ववत् जाणवो.) इति।

---

(दीपिका.) ततः शिष्यः प्राह। उक्तार्थमेव। अनेन एतद्दर्शयति मानं त्यक्त्वा संवेगिना शिष्येण सर्वकार्येष्वेवं गुरुः प्रष्टव्यः। अथ शिष्येण प्रश्ने कृते गुरुराह। इमेति। एतत् सूत्रमपि उक्तार्थमेव अनेनापि एतद्दर्शयति। गुणवते शिष्याय गुरुणापि उपदेशो दातव्य एव।

---

(टीका) शिष्यः पृच्छति। कतरा खल्वित्यादि। सूत्रमुक्तार्थमेवानेनैतद्दर्शयति। विहायाभिमानं संविग्नेन शिष्येण सर्वकार्येष्वेव गुरुः प्रष्टव्य इति। आचार्य आह। इमा खल्वित्यादिसूत्रमुक्तार्थमेवानेनाप्येतद्दर्शयति। गुणवते शिष्याय गुरुणाप्युपदेशो दातव्य एवेति।

तं जहा। पुढविकाइया आउकाइया तेउकाइया वाउकाइया वणस्सइकाइया तसकाइया। पुढवि चित्तमंतमक्खाया अणेगजीवा पुढोसत्ता अन्नत्थ सत्थपरिणएणं। आउ चित्तमंतमक्खाया अणेगजीवा पुढोसत्ता अन्नत्थ सत्थपरिणएणं। वाउ चित्तमंतमक्खाया अणेगजीवा पुढोसत्ता अन्नत्थ सत्थपरिणएणं। वणस्सइ चित्तमंतमक्खाया अणेगजीवा पुढोसत्ता अन्नत्थ सत्थपरिणएणं॥

---

(अवचूरिः) तं जहा। तद्यथा। तद्यथेत्युदाहरणोपन्यासार्थः। पृथिवी काठिन्यादिरूपा सैव कायोऽङ्गं येषां ते पृथिवीकायाः पृथिवीकाया एव पृथिवीकायिकाः। आपो द्रवाः प्रतीता एव। तेज उष्णलक्षणं वायुश्चलनधर्मा वनस्पतिर्लतादिरूपः कायो येषां ते। त्रसनशीलास्त्रसाः काया अङ्गानि येषां ते। इह सर्वभूताधारत्वात् आदौ पृथ्वी, तत्प्रतिष्ठितत्वादापः, तत्प्रतिपक्षत्वात्तेजः, तदुपष्टम्भकत्वाद्वायुः, वायोः शाखादिप्रचालनादिगम्यत्वाद्वनस्पतिः। वनस्पतेस्त्रसोपग्रहत्वात्त्रसाः। चित्तं जीवलक्षणं तदस्यास्तीति चित्तवती सजीवेत्यर्थः। पाठान्तरं वा पुढवी चित्तमत्तमक्खाया। अत्र मात्रशब्दः स्तोकवाची। यथा सर्षपत्रिभागमात्रमिति। ततश्चित्तमात्रा स्तोकचित्तेत्यर्थः। आख्याता सर्वज्ञेन कथिता। इयं च, अनेके जीवा यस्यां सा अनेकजीवा न पुनरेकजीवा। यथा वैदिकानां पृथ्वी देवतेत्येवमादिवचनप्रामाण्यात् इति। अनेकजीवापि कैश्चिदेकभूतात्मापेक्षतयेष्यत एव। यथाहुरेके॥ एक एव हि भूतात्मा भूते भूते व्यवस्थितः॥ एकधा

बहुधा चैव दृश्यते जलचन्द्रवत् ॥ १ ॥ पृथग्जीवन्नावात् पृथक्सत्ता । अङ्गुलासंख्येयन्नागेऽप्यनेकजीवसमाश्रितेत्यर्थः । आह, यद्येवं जीवपिण्डरूपा पृथ्वी ततस्तस्यामुच्चारादिकरणेन नियमतस्तदतिपातादहिंसकत्वानुपपत्तेरित्यसंन्नवी साधुधर्मः । इत्यत्राह । अन्यत्र शस्त्रपरिणतायाः, शस्त्रपरिणतां पृथ्वीं विहायान्या चित्तवत्याख्यातेत्यर्थः । शस्त्रं धावनवल्गनोत्खननादि । एतानि स्वपरव्यापादकत्वात् कर्मबन्धनिमित्तत्वात् शस्त्रमिति ॥ तच्च किंचित्स्वकायशस्त्रं यथा कृष्णा मृन्नीलादिमृदः शस्त्रम् । एवं गन्धरसस्पर्शन्नेदेऽपि शस्त्रयोजना कार्या । तथा किंचित्परकायेति परकायशस्त्रम् । यथा पृथ्वी अप्तेजःप्रनृतयो वा पृथिव्यास्तडुनयं किंचिदिति किंचिडुनयशस्त्रं नवति यथा कृष्णा मृडुदकस्य पांशुमृदश्च । परस्परं रसगन्धादिन्निः यथा कृष्णमृदा कलुषितमुदकं नवति तदासौ कृष्णमृडुदकस्य पांशुमृदश्च शस्त्रं नवति । एष तावदागमः । अनुमानमप्यत्र विद्यते । सात्मका विद्रुमलवणोपलादयः पृथ्वीविकाराः समानजातीयांकुरोत्पत्त्युपलम्नात् । देवदत्तमांसांकुरवत् । एवमागमोपपत्तिन्यां स्थितं पृथ्वीकायिकानां जीवत्वम् । उक्तं च ॥ आगमश्चोपपत्तिश्च, संपूर्णं दृष्टिलक्षणम् ॥ अतीन्द्रियाणामर्थानां, सद्भावप्रतिपादने ॥ आगमो ह्याप्तवचनम् । एवं सात्मकं जलं नूमिखातस्वान्नाविकसंन्नवाद्दर्दुरवत् । सात्मकोऽग्निराहारेण वृद्धिदर्शनाद्बालकवत् । सात्मकः पवनः अपराप्रेरिततिर्यग्गतिनियमितदिग्गमनाद्गोवत् । सचेतनास्तरवः सर्वत्वगपहरणे मरणाद्गर्दन्नवत् । एवं च परिणतायां पृथिव्यामुच्चारादिकरणेऽपि नास्ति तदतिपात इत्यहिंसकत्वोपपत्तेः संन्नवी साधुधर्मः । एवमापश्चित्तवत्य आख्याताः । तेजश्चित्तवदाख्यातम् । वायुश्चित्तवानाख्यातः । वनस्पतिश्चित्तवानाख्यातः इत्येतदपि द्रष्टव्यम् ॥

---

( अर्थ. ) हवे, गुणवान् शिष्यने गुरुए पण अवश्य उपदेश करवो, एम सूचवता थका सूत्रकार कहे ढे. तंजहत्ति ( तंजहा के० ) तद्यथा एटले ते जेम ढे, तेम कहियें ढियें. प्रथम षड्जीवनिकायनां नाम कहे ढे. पुढविकाइय त्ति । ( पुढविकाइया के० ) पृथ्वीकायिकाः एटले कठिनस्पर्शलक्षण पृथ्वी ढे काय ते शरीर जेमनुं एवा जीव, ( आउकाइया के० ) अप्कायिकाः एटले शीतस्पर्श तथा स्रवणादि ढे लक्षण जेनुं एवुं उदक ते ढे काय ते शरीर जेमनुं एवा जीव; (तेउकाइया के०) तेजस्कायिकाः एटले उष्णस्पर्शलक्षण तेज ढे काय ते शरीर जेमनुं एवा जीव, ( वाउकाइया के० ) वायुकायिकाः एटले चलनात्मक वायु ढे काय ते शरीर जेमनुं एवा जीव; ( वणस्सइकाइया के० ) वनस्पतिकायिकाः एटले लतादिलक्षण वनस्पति ढे काय ते शरीर जेमनुं एवा जीव, अने (तसकाइया के०) त्रसकायिकाः एटले त्रसनशील ढे काय ते शरीर

जेमनुं एवा जीव ए षड्निकायना जीव जाणवा. अहीं प्रथम पृथ्वीकाय, बीजा अप्काय, त्रीजा तेउकाय इत्यादि जे क्रम राख्यो छे, तेनुं कारण एम छे केः—सर्वप्राणिमात्रनो आधार पृथ्वी छे, माटे प्रथम पृथ्वीकायना जीव कह्या. ते पृथ्वीने आधारें उदक रहे छे, माटे आधाराधेयभावसंबंधथी पृथ्वीकाय पछी बीजा अप्कायना जीव कह्या. ते उदकनुं प्रतिपक्षीभूत तेज छे माटे प्रतियोगिभावसंबंधथी अप्काय पछी त्रीजा तेजस्काय कह्या. ते तेजनो उपष्टंभक ( जीववानुं साधन ) वायु छे, माटे उपष्टंभकतालक्षण संबंधथी तेजस्काय कह्या. पछी चोथा वायुकाय जीव कह्या. ते वायुनुं ज्ञान, वृक्ष तथा लताना चलनवलनादिकथी थाय छे, ते माटे वायुकाय पछी पांचमा वनस्पतिकाय जीव कह्या. ते वनस्पतिकायने उपद्रव करनार त्रसकाय छे,माटे वनस्पतिकाय पछी छठा त्रसकाय जीव कह्या. हवे उपर जे षड्जीवनिकाय कह्या, तेमां कांइ पण संशय अथवा विरोध नहीं आववो जोइयें, माटे फरी तेज अर्थनुं स्पष्टीकरण करे छे. पुढविचित्ति ( पुढवी के० ) पृथ्वी जे छे ते ( चित्तमंतमक्खाया के० ) चित्तवती आख्याता, जेने चित्त एटले जीवलक्षण चैतन्य छे तेने चित्तवती कहिये, अर्थात् सचित्त एवी तीर्थंकरादिकें आख्याता एटले कहेली छे. वली ते पृथ्वी केवी छे तो के ( अणेगजीवा के० ) अनेकजीवा एटले अनेक छे जीव जेमां एवी छे. अर्थात् ए पृथ्वीकायमां अनेक जीवो छे, अर्थात् एक नथी. वली ते केवी छे तो के, ( पुढोसत्ता के० ) पृथक्सत्वा, एटले अंगुलना असंख्यातमा भाग प्रमाण अवगाहनामां रहेला अनेक जीवो पृथक् पृथक् जेमां छे एवी पृथ्वी छे. एवुं सांभलतांज शिष्य साशंक थइने पूछे छे केः—हे गुरो! जो जीवपिंडरूप पृथ्वी छे, तो ते पृथ्वीउपर साधु जो मलोत्सर्गादि क्रिया करे, तो अवश्य पृथ्वीकायनो अतिपात थायज, अने मलोत्सर्गादि क्रिया तो पृथ्वीउपर कस्यावगर बीजो कोइ उपायज नथी. अने एम ज्यारें थाय त्यारे साधुथी अहिंसकपणें रहेवायज नहीं,अने प्राणातिपातविरमणरूप जे साधुनो प्रधान धर्म छे तेनो वंध्यापुत्रनी परें असंभव प्राप्त थयो? ए शंकाना उत्तरमां सूत्रकार कहे छे. अन्नछत्ति । ( अन्नछ सछपरिणएणं के० ) अन्यत्र शस्त्रपरिणतायाः एटले शस्त्रेंकरी परिणाम पामेलीजे पृथ्वी ते विनानी बीजी पृथ्वी छे, ते सचित्त छे, ते सचित्त पृथ्वीनो अतिपात करवो नहीं. अर्थात् शस्त्रपरिणत जे पृथ्वी छे ते अचित्त होवाथी तेनेविषे मूत्रोत्सर्गादि करवामां हिंसादोष नथी, बीजी पृथ्वीउपर करवाथी हिंसादोष छे, तेमाटे साधुनुं अहिंसकपणुं जे छे ते जतुं नथी. हवे शस्त्र शब्दनो अर्थ कहियें छियें. जे जेनो नाश करे छे, ते तेनुं शस्त्र जाणवुं. जेम लौकिकमां शरीरनुं शस्त्र खड्गादिक प्रसिद्ध छे. अहीं पृथ्वीना शस्त्रनो

विचार करवानो बे, ते एवी रीतेंः—पृथ्वीनुं शस्त्र जे बे, ते त्रण प्रकारें बे, एक स्वकायशस्त्र, बीजुं परकायशस्त्र अने त्रीजुं स्वपरकायशस्त्र, तेमां कृष्णमृत्तिका (काली माटी) जे बे, ते स्वकायरूप श्वेतादिक मृत्तिकानुं शस्त्र बे, माटे तेने स्वकायशस्त्र कहियें, बीजुं शस्त्र ते जेम पृथ्वी जे बे ते जल, तेज आदिक परकायनुं शस्त्र बे, माटे ते परकायशस्त्ररूप जाणवी. त्रीजुं स्वपरकायशस्त्र ते जेम कृष्णमृत्तिका जे बे ते श्वेतादि मृत्तिकासहित उदकने कृष्णवर्ण करे बे; माटे कृष्णमृत्तिका जे बे, ते श्वेतादिमृत्तिकासहित उदकनी स्वपरशस्त्ररूप थई. एवा शस्त्रेंकरी परिणाम पामेली जे पृथ्वी बे, ते अचित्त बे, एम जाणवुं. वली आ सूत्रनो 'पुढविचित्तमत्तमरकाया' एवो पाठ पण केटलेक ठेकाणें बे. तो ते पक्षें एवो अर्थ करवो के पृथ्वी चित्तमात्रा आख्याता. एटले पृथ्वी जे बे ते सचित्तमां चित्तमात्रा अर्थात् जघन्य सचित्त बे, ते एकेंड्यिजीवरूप जाणवी. अही मात्रशब्द बे ते स्तोकवाची जाणवो. एवीरीतें आगमना प्रमाणथी पृथ्वी जे बे, ते एकेंड्यिजीवसमुदायरूप बे, एम कह्युं. ए अर्थ अनुमानथी पण सिद्ध थाय बे. ते आवीरीतें केः—विद्रुमलवणोपलादिकं सचित्तं समानजाजातीयांकुरोत्पत्त्युपलंजात् देवदत्तमांसांकुरवत् ॥ अर्थः—परवाला, लवण, पत्र इत्यादिक पृथ्वीना विकार जे बे ते सचित्त बे, कारण तेना अंकुर एक पढी एक सरखी जातना उपजे बे, जेम देवदत्तना मांसथी थयेलो पुत्ररूप मांसांकुर बे. एम आगम अने अनुमानथी पृथ्वी सचित्त बे, एम सिद्ध थयुं. (आउ के०) आपः एटले उदक ते (चित्तमंतमरकाया के०) चित्तवत्य आख्याताः एटले सचित्त बे, एम तीर्थंकरादिकें कह्युं बे. वली ते उदक अनेकजीव बे, अने पृथक्सत्व बे. (अहीं अनेकजीव अने पृथक्सत्त्व ए बे पदनो अर्थ पृथ्वीकायमां लखेलो बे ते प्रमाणे जाणवो.) परंतु (अन्नत्र सबपरिणएणं के०) अन्यत्र शस्त्रपरिणताभ्यः एटले शस्त्रपरिणत उदक जे बे ते विना बीजुं सर्व उदक सचित्त जाणवुं. (अहीं पण शस्त्रनो अर्थ उपर जे रीतें कहेलो बे, ते प्रमाणेंज जाणवो. तेमज आगल पण सर्वत्र अर्थ जाणवो.) तथा (तेउ के०) तेजः एटले तेज जे बे ते पण (चित्तमंत के०) सचित्त, अनेकजीव अने पृथक्सत्व कह्युं बे. पण (अन्नत्र सबपरिणएणं के०) अन्यत्रशस्त्रपरिणतेभ्यः एटले शस्त्रपरिणत तेज बोडीने बीजुं सर्व तेज सचित्त बे. तथा (वाऊ के०) वायुः एटले वायु (चित्तमंत० के०) सचित्त, अनेकजीव अने पृथक्सत्व एवो कह्यो बे. पण (अन्नत्र सबपरिणएणं के०) अन्यत्र शस्त्रपरिणतात् एटले शस्त्रपरिणत वायु जे बे ते बोडीने शेष सर्व वायु जे बे ते सचित्त बे. तथा (वणस्सई के०) वनस्पतिकाय जे बे ते पण (चित्तमंत के०) सचित्त, अनेकजीव अने पृथक्सत्व कह्यो बे; पण (अन्नबसबपरिणएणं

के०) अन्यत्र शस्त्रपरिणतात् एटले शस्त्रपरिणत वनस्पति वर्जीने शेष सर्व वनस्पति जे छे, ते सचित्त छे. ॥

---

(दीपिका) अथ षड्जीवनिकायमाह। तद्यथेति उदाहरणे। पृथिवी काठिन्यलक्षणा प्रतीता। सैव कायः शरीरं येषां ते पृथिवीकायाः पृथिवीकाया एव पृथिवीकायिकाः (१)। आपो द्रवाः प्रतीता एव। ता एव कायः शरीरं येषां तेऽप्कायाः। अप्काया एव अप्कायिकाः (२)। तेज उष्णस्पर्शलक्षणं प्रतीतम्। तदेव कायः शरीरं येषां ते तेजःकायाः तेजःकाया एव तेजःकायिकाः (३)। वायुश्चलनधर्मा प्रतीत एव। स एव कायःशरीरं येषां ते वायुकायाः वायुकाया एव वायुकायिकाः (४)। वनस्पतिर्लतादिरूपः प्रतीतः। स एव कायः शरीरं येषां ते वनस्पतिकायास्त एव वनस्पतिकायिकाः (५)। एवं त्रसनशीलाः त्रसाः प्रतीता एव। त एव कायाः शरीराणि येषां ते त्रसकायाः त्रसकाया एव त्रसकायिकाः (६)। इह च सर्वभूताधारत्वात् पृथिव्याः प्रथमं पृथिवीकायिकानामभिधानम्। विप्रतिपत्तिनिरासार्थं पुनराह। पुढवी चित्तमंतमक्खाया। पृथिवी चित्तं च जीवलक्षणं तदस्या अस्तीति चित्तवती सजीवा इत्यर्थः। पाठान्तरं वा पुढवीचित्तमत्तमक्खाया। अत्र मात्रशब्दः स्तोकवाची। यथासर्षपत्रिभागमात्रम्। पृथिवी चित्तमात्रा स्तोकचित्ता इत्यर्थः। तथाच प्रबलमोहोदयात्सर्वजघन्यं चैतन्यमेकेन्द्रियाणां तदधिकं द्वीन्द्रियादीनामिति। आख्याताः सर्वज्ञेन कथिताः। किंविशिष्टाः। पृथिवी अनेकजीवा, अनेके जीवा यस्यां सा अनेकजीवा न पुनरेकजीवा। यथा वैदिकानां पृथ्वी देवता इत्येवमादिवचनप्रामाण्यादिति। तथा अनेकजीवापि कैश्चित् एकभूतात्मापेक्षया मन्यते। यदाहुरेके॥ एक एव हि भूतात्मा भूते भूते व्यवस्थितः॥ एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥ १॥ अत एवाह। किंभूता पृथिवी। पुढोसत्ता। पृथक् सत्त्वाः प्राणिनो यस्यां सा पृथक्सत्वा। अङ्गुलस्य असंख्येयभागमात्रावगाहनैरनेकैः पार्थिवजीवैः समाश्रितेतिभावः। आह। यद्येवं जीवपिण्डरूपा पृथिवी तदा तस्यामुच्चारादिकरणेन नियमतस्तन्मरणात् अहिंसाया अनुत्पत्तिः स्यात्। तथा च सति साधुधर्मस्य असंभवः स्यात्। अतोऽत्राह। अन्यत्र शस्त्रपरिणतायाः शस्त्रपरिणतां पृथिवीं विहाय अन्या पृथिवी चित्तवती आख्याता इत्यर्थः। पृथिव्याः शस्त्रं त्रिधा। स्वकायशस्त्रं (१) परकायशस्त्रं (२) तदुभयशस्त्रं च (३)। तत्र स्वकीयशस्त्रं यथा कृष्णमृद् नीलादिमृदः शस्त्रम्। एवं गन्धरसस्पर्शसंभेदेऽपि शस्त्रयोजना कार्या (१)। परकायशस्त्रं यथा अतेजःप्रभृतीनां पृथिवी अथवा पृथिव्या अतेजःप्रभृतयः (२)। तदुभयं यथा कृष्णमृद् उदकस्य पांडुमृदश्च परस्परस्पर्शगन्धादिभिः।

यदा कृष्णमृदा कलुषितमुदकं नवति। तदा एषा कृष्णमृद् उदकस्य पाण्मृदश्च शस्त्रं नवति। एवं च परिणतायां पृथिव्यामुच्चारादिकरणेऽपि नास्ति तन्मरणं ततोऽहिंसाधर्मः साधूनां संनवत्येव। एवमापश्चित्तवत्य आख्याताः। तेजश्चित्तवदाख्यातम्। वायुश्चित्तवानाख्यातः। वनस्पतिश्चित्तवानाख्यात इत्याद्यपि ड्रष्टव्यम् ॥ ४ ॥

---

(टीका) तं जहा। पुढविकाइया इत्यादि। अत्र तद्यथेत्युदाहरणोपन्यासार्थः। पृथिवी काठिन्यादिलक्षणा प्रतीता सैव कायः शरीरं येषां ते पृथिवीकायाः पृथिवीकाया एव पृथिवीकायिकाः। स्वार्थिकष्ठक्। आपो ड्रवाः प्रतीता एव ता एव कायः शरीरं येषां तेऽप्कायाः अप्काया एव अप्कायिकाः। तेज उष्णलक्षणं प्रतीतं तदेव कायः शरीरं येषां ते तेजस्कायाः। तेजस्काया एव तेजस्कायिकाः। वायुश्चलनधर्मा प्रतीतः स एव कायः शरीरं येषां ते वायुकायाः। वायुकाया एव वायुकायिकाः। वनस्पतिर्लतादिरूपः प्रतीतः स एव कायः शरीरं येषां ते वनस्पतिकायाः। वनस्पतिकाया एव वनस्पतिकायिकाः। एवं त्रसनशीलास्त्रसाः प्रतीता एव। त्रसाः कायाः शरीराणि येषां ते त्रसकायाः। त्रसकाया एव त्रसकायिकाः। इह च सर्वनूताधारत्वात् पृथिव्याः प्रथमं पृथिवीकायिकानामनिधानं तदनन्तरं तत्प्रतिष्ठितत्वादप्कायिकानामपि तदनन्तरं तत्प्रतिपक्षत्वात्तेजस्कायिकानाम्। तदनन्तरं तेजस उपष्टम्नकत्वाद्वायुकायिकानाम्। तदनन्तरं वायोः शाखाप्रचलनादिगम्यत्वाद्वनस्पतिकायिकानाम्। तदनन्तरं वनस्पतेस्त्रसोपग्राहकत्वात्त्रसकायिकानामिति। विप्रतिपत्तिनिरासार्थं पुनराह। पुढवीचित्तमंतमरकाया। पृथिवी उक्तलक्षणा चित्तवतीति। चित्तं जीवलक्षणं तदस्या अस्तीति चित्तवती सजीवेत्यर्थः। पाठान्तरं वा। पुढवि चित्तमत्तमरकाया। अत्र मात्रशब्दः स्तोकवाची। यथा सर्षपत्रिनागमात्रमिति। ततश्च चित्तमात्रा स्तोकचित्तेत्यर्थः। तथा च प्रबलमोहोदयात्सर्वजघन्यं चैतन्यमेकेन्द्रियाणां तदन्यधिकं द्वीन्द्रियादीनामिति। आख्याता सर्वज्ञेन कथिता। इयं चानेकजीवा। अनेके जीवा यस्यां सानेकजीवा। न पुनरेकजीवा यथा वैदिकानाम् पृथिवी देवतेत्येवमादिवचनप्रामाण्यादिति। अनेकजीवापि केैश्चिदेकनूतात्मापेक्षयेष्यत एव। यथाहुरेके ॥ एक एव हि नूतात्मा, नूते नूते व्यवस्थितः ॥ एकधा बहुधा चैव, दृश्यते जलचन्द्रवत् ॥ १ ॥ अत आह। पृथक्सत्वा पृथग्नूताः सत्त्वा आत्मानो यस्यां सा पृथक्सत्वा। अङ्गुलासंख्येयनागमात्रावगाहनया पारमार्थिक्यानेकजीवसमाश्रितेति नावः। आह। यद्येवं जीवपिण्डरूपा पृथिवी ततस्तस्यामुच्चारादिकरणे नियमतस्तदतिपातादहिंसकत्वानुपपत्तिरित्यसंनवी साधुधर्म इत्यत्राह अन्यत्र शस्त्रपरिण-

तायाः।शस्त्रपरिणतां पृथिवीं विहाय परित्यज्यान्या चित्तवत्याख्यातेत्यर्थः। अथ किमिदं पृथिव्याः शस्त्रमिति शस्त्रप्रस्तावात्सामान्यत एवेदं द्रव्यभावभेदभिन्नमभिधित्सुराह। दव्वं सत्थग्गिविसं, नेहविलाखारलोणमाईयं ॥ भावो उ डुप्पउत्तो, वायाकाउ अविरई अ ॥ २९० ॥ व्याख्या ॥ द्रव्यमिति द्वारपरामर्शः। तत्र द्रव्यशस्त्रं खड्गादि। अग्निविषस्नेहाम्लानि प्रसिद्धानि। क्षारलवणादीनि। अत्र तु क्षारः करीरादिप्रभवः। लवणं प्रतीतम्। आदिशब्दात्करीषादिपरिग्रहः। उक्तं द्रव्यशस्त्रमधुना भावशस्त्रमाह। भावस्तु दुःप्रयुक्तौ वाक्कायौ अविरतिश्च भावशस्त्रमिति। तत्र भावो दुःप्रयुक्त इत्यनेन द्रोहाभिमानेर्ष्यादिलक्षणो मनोदुःप्रयोगो गृह्यते। वाग्दुःप्रयोगस्तु हिंस्रपरुषादिवचनलक्षणः।कायदुःप्रयोगस्तु धावनवल्गनादिः। अविरतिस्त्वविशिष्टा प्राणातिपातादिपापस्थानकप्रवृत्तिः। एतानि स्वपरव्यापादकत्वात्कर्मबन्धनिमित्तत्वाद्भावशस्त्रमिति गाथार्थः। इह न भावशस्त्रेणाधिकारः। अपितु द्रव्यशस्त्रेण। तच्च त्रिप्रकारं भवतीत्याह ॥ किं वी सकायसत्थं, किं वी परकाय तदुभयं किं वि॥ एयं तु दव्वसत्थं, भावे असंजमो सत्थं ॥२९१॥व्याख्या॥ किंचित्स्वकायशस्त्रं यथा कृष्णा मृद् नीलादिमृदः शस्त्रम्। एवं गन्धरसस्पर्शभेदेऽपि शस्त्रयोजना कार्या। तथा किंचित्परकायेति परकायशस्त्रं यथा पृथ्वी अप्तेजःप्रभृतीनामप्तेजःप्रभृतयो वा पृथिव्याः। तदुभयं किंचिदिति। किंचित्तदुभयशस्त्रं भवति। यथा कृष्णा मृदुदकस्य स्पर्शरसगन्धादिभिः पाण्डुमृदश्च। यदा कृष्णमृदा कलुषितमुदकं भवति। तदासौ कृष्णमृदुदकस्य पाण्डुमृदश्च शस्त्रं भवति। एवं तु द्रव्यशस्त्रम्। तुशब्दोऽनेकप्रकारविशेषणार्थः।एतदनेकप्रकारं द्रव्यशस्त्रम्। भाव इति द्वारपरामर्शः। असंयमः शस्त्रं चरणस्येति गाथार्थः। एवं च परिणतायां पृथ्व्यामुच्चारादिकरणेऽपि नास्ति तदतिपात इत्यहिंसकत्वोपपत्तेः संभवी साधुधर्म इति। एष तावदागमः। अनुमानमप्यत्र विद्यते। सात्मका विद्रुमलवणोपलादयः पृथिवीविकाराः समानजातीयाङ्कुरोत्पत्त्युपलम्भात् देवदत्तमांसाङ्कुरवत्।एवमागमोपपत्तिभ्यां व्यवस्थितं पृथिवीकायिकानां जीवत्वम्। उक्तं च॥ आगमश्चोपपत्तिश्च, संपूर्णं दृष्टिलक्षणम् ॥ अतीन्द्रियाणामर्थानां सद्भावप्रतिपत्तये॥ १॥ आगमो ह्याप्तवचनमाप्तं दोषक्षयाद्विदुः॥ वीतरागोऽनृतं वाक्यं, न ब्रूयाद्धेत्वसंभवात् ॥ २ ॥ इत्यलं प्रसंगेन। एवमापश्चित्तवत्य आख्याताः। तेजश्चित्तवदाख्यातम्। वायुश्चित्तवानाख्यातः। वनस्पतिश्चित्तवानाख्यातः। इत्याद्यपि द्रष्टव्यम्। विशेषस्त्वभिधीयते। सात्मकं जलं भूमिखातस्वाभाविकसंभवात् दर्दुरवत्। सात्मकोऽग्निः आहारेण वृद्धिदर्शनात् बालकवत्। सात्मकः पवनः अपरप्रेरिततिर्यग्नियमितनिर्गमनाद्गोवत्। सचेतनास्तरवः सर्वत्वगपहरणे मरणाद्गर्दभवत्॥

तं जहा । अग्गबीया मूलबीया पोरबीया खंधबीया बीयरुहा संमुच्छिमा तणलया वणस्सइकाइया सबीया चित्तमंतमरकाया अणेगजीवा पुढोसत्ता अन्नञ सत्थपरिणएणं ॥

---

( अवचूरिः ) इदानीं वनस्पतिजीवविशेषप्रतिपादनायाह । अग्गबीया इति। अग्रं बीजं येषां ते अग्रबीजाः कोरण्टकादयः । मूलं बीजं येषां ते मूलबीजा उत्पलकन्दादयः। पर्व बीजं येषां ते पर्वबीजा इक्ष्वादयः। स्कन्धो बीजं येषां ते स्कन्धबीजाः शल्लक्यादयः। बीजाद्रोहन्तीति बीजरुहाः शाल्यादयः। संमूर्छन्तीति संमूर्छिमाः। प्रसिद्धबीजाभावेन पृथ्वीवर्षादिसमुद्भवास्तृणादयः । न चैते न संभवन्ति दग्धभूमावपि संभवात् । तृणलतावनस्पतिकायिका इत्यत्र तृणलताग्रहणं स्वगतानेकभेदप्रदर्शनार्थम् । वनस्पतिकायिकग्रहणं सूक्ष्मबादराद्यशेषवनस्पतिभेदसंग्रहार्थम् । एतेन पृथिवीप्रभृतीनामपि स्वगताः पृथिवीशर्करादयस्तथावश्यायमिहिकादयः तथा उग्रमण्डलिकादयो भेदाः सूचिता इति। एतेऽनन्तरोदिता वनस्पतिविशेषाः सबीजाः स्वस्वनिबन्धनकारणजीवत्वकारणवन्तः चित्तवन्त आख्याताः ॥

---

( अर्थ. ) हवे वनस्पतिकाय जीवनुं विशेषें करी वर्णन करे छे. ( तं जहा के० ) तद्यथा ते जेम केः- एक तो ( अग्गबीया के० ) अग्रबीजाः एटले अग्र भागने विषे जेमने बीज छे एवा कोरंटकादिक जाणवा. बीजा ( मूलबीया के० ) मूलबीजाः एटले मूलने विषे जेमने बीज छे, एवा कमलकंदादिक जाणवा. त्रीजा ( पोरबीया के० ) पर्वबीजाः एटले पर्वने विषे जेमने बीज छे, एवा इक्षु आदिक जाणवा. चोथा ( खंधबीया के० ) स्कंधबीजाः एटले स्कंधने विषे जेमने बीज छे, ते सालइ तथा वड प्रमुख जाणवा. पांचमा ( बीयरुहा के० ) बीजरुहाः एटले बीज वाव्याथी जे उगे छे, ते शाली गोधूमादिक जाणवा. छठा ( संमुच्छिमा के० ) संमूर्छिमाः एटले जेमनुं बीज दीठामां आवतुं नथी, एवा तृणलतादिक जाणवा. ए संभवता नथी एवी शंका न करवी, कारण के ए तृणादिक दग्ध भूमिने विषे पण उत्पन्न थाय छे. ए पूर्वें कहेला ( तणलया वणस्सइकाइया के० ) तृण, लता, सूक्ष्म बादरादिक वनस्पतिकाय जीव जे छे, ते ( सबीया के० ) बीजसहित अने ( चित्तमंतमरकाया के० ) सचित्त अनेकजीव अने पृथक्सत्व एवा तीर्थकरादिके कह्या छे. पण ( अन्नञ सत्थपरिणएणं के० ) अन्यत्र शस्त्रपरिणतात् एटले शस्त्रपरिणत वनस्पतिकाय वर्जीने बीजा सर्व वनस्पतिकाय सचित्त छे. एवी

रीतें जल, तेज, वायु अने वनस्पति ए सचित्त छे, एम आगम प्रमाणथी कह्युं. ए विषे अनुमान प्रमाण पण छे. ते एवी रीतेंः—जलं सचित्तं भूमिखातस्वाभाविकसंभवात् दर्दुरवत् ॥ अर्थः— जल जे छे ते सचित्त छे, कारण देडकानी परे भूमि खणतां ते जमीनमांथी नीकलीने चाले छे. तथा, अग्निः सचित्तः आहारेण वृद्धिदर्शनात् बालवत् ॥ अर्थः— अग्निरूप तेज जे छे ते सचित्त छे, कारण बालकनी परें काष्ठ घृतादिक आहार आप्याथी तेनी वृद्धि थाय छे. तथा, वायुः सचित्तः अपरप्रेरिततिर्यग्नियमितदिग्गमनात् गोवत् ॥ अर्थः— वायु जे छे, ते सचित्त छे, कारण के गायप्रमुखनी परें बीजे कोइये प्रेरणा कस्या वगर नियमित दिशाने विषे चाले छे. तथा, तरवः सचित्ताः सर्वत्वगपहरणे मरणात् गर्दभवत् अर्थः—वनस्पति काय जे वृक्ष प्रमुख छे,ते सचित्त छे, कारण तेनी सर्व त्वचा जो काढी होय तो गर्दभनी परे मरण पामे छे. एवुं अनुमान पण प्रमाण जाणवुं ॥

---

( दीपिका. ) इदानीं वनस्पतिजीवानां विशेषभेदप्रतिपादनार्थमाह । तद्यथा । अग्रं बीजं येषां ते अग्रबीजाः कोरण्टकादयः । एवं मूलं बीजं येषां ते मूलबीजा उत्पलकन्दादयः । पर्व बीजं येषां ते पर्वबीजा इक्ष्वादयः । स्कन्धो बीजं येषां ते स्कन्धबीजाः शल्लक्यादयः । बीजाद्रोहन्तीति बीजरुहाः शाल्यादयः । संमूर्छन्तीति संमूर्छिमाः प्रसिद्धबीजाभावेऽपि पृथिवीवर्षादिसमुद्भवाः । ते तथाविधास्तृणादयः । न च एते न संभवन्ति दग्धभूमावपि संभवात् । तथा तृणलता वनस्पतिकायिका इत्यत्र तृणलताग्रहणं स्वगतानेकभेदसंदर्शनार्थं वनस्पतिकायिकग्रहणं सूक्ष्मबादरादिकानेकवनस्पतिभेदसंग्रहार्थम् । एतेन पृथिव्यादीनामपि स्वगता भेदाः सूचिताः । कथमित्याह । पृथिव्यः शर्करादयः, आपोऽवश्यायमिहिकादयः, अग्नयोऽङ्गारज्वालादयः, वायवो झञ्झामण्डलिकादयः । एतेऽग्रबीजादयः सबीजाश्चित्तवन्त आख्याताः कथिता इति । एतेन पूर्वकथिता विशेषाः सजीवाः स्वस्वनिबन्धनाश्चित्तवन्तः आत्मवन्त आख्याताः कथिताः । एते च अनेकजीवा इत्यादिकभुवगण्डिका पूर्ववत् ॥

---

( टीका. ) वनस्पतिजीवविशेषप्रतिपादनायाह । तं जहा अग्गबीया इत्यादि । तद्यथेत्युपन्यासार्थः । अग्रबीजा इत्यग्रं बीजं येषां ते अग्रबीजाः कोरण्टकादयः । एवं मूलं बीजं येषां ते मूलबीजा उत्पलकन्दादयः । पर्व बीजं येषां ते पर्वबीजा इक्ष्वादयः । स्कन्धो बीजं येषां ते स्कन्धबीजाः शल्लक्यादयः । तथा बीजाद्रोहन्तीति बीजरुहाः शाल्यादयः । संमूर्छन्तीति संमूर्छिमाः । प्रसिद्धबीजाभावेन पृथिवीवर्षादिसमुद्भवास्तथाविधास्तृणादयः । न चैते न संभवन्ति दग्धभूमावपि संभ-

कृतः। अथ तस्यैवार्थतो गुरुतामाह । जो राजादयः जिनमतादन्यत्र कपिलादिमत ईदृशं यत् पूर्वमुक्तं आचारगोचरं वस्तु यल्लोके प्राणिलोके परमदुश्चरमत्यन्तदुष्करं वस्तु। विपुलस्थानभाजिनः। कोऽर्थः। विपुलस्थानं विपुलमोक्षहेत्वात् संयमस्थानं तद्भजते सेवत इत्येवंशीलः विपुलस्थानभाजी तस्य विपुलस्थानभाजिनः साधोः न भूतं न भविष्यति ॥ ५ ॥

---

( टीका. ) धर्मार्थकामानित्युक्तम् । तदेतत्सूत्रस्पर्शनिर्युक्त्या निरूपयति । तत्र धर्मनिक्षेपो यथा प्रथमाध्ययने। नवरं लोकोत्तरमाह ॥ धम्मो बावीसविहो, अगार-धम्मोणगारधम्मो अ ॥ पढमो अ बारसविहो, दसहा पुण बीयउं होइ ॥ १२ ॥व्याख्या॥ धर्मो द्वाविंशतिविधः सामान्येन द्वाविंशतिप्रकारः। अगारधर्मो गृहस्थधर्मः। अनगारधर्मश्च साधुधर्मः। प्रथमश्चागारधर्मो द्वादशविधः। दशधा पुनर्द्वितीयोऽनगारधर्मो भवतीति गाथासमासार्थः॥१२॥व्यासार्थं चाह॥ पंचय अणुवयाइं गुणवयाइं च होंति तिन्नेव॥ सिक्खावयाइं चउरो, गिहिधम्मो बारसविहो अ ॥ १३ ॥ व्याख्या ॥ पंचाणुव्रतानि स्थूलप्राणातिपातविरत्यादीनि गुणव्रतानि च भवन्ति त्रीण्येव दिग्व्रतादीनि । शिक्षापदानि चत्वारि सामायिकादीनि । गृहिधर्मो द्वादशविधस्तु एष एवाणुव्रतादिः । अणुव्रतादिस्वरूपं चावश्यके चर्चितत्वान्नोक्तमिति गाथार्थः ॥ १३ ॥ साधुधर्ममाह । खंती अ मद्दवज्जव, मुत्ती तवसंजमे अ बोधव्वे॥सच्चं सोचं आकिं-चणं च वंभं च जइ-धम्मो॥१४॥व्याख्या॥क्षान्तिश्च मार्दवम् आर्जवं मुक्तिः तपःसंयमौ च बोद्धव्यौ सत्यं शौचमाकिंचन्यं ब्रह्मचर्यं च यतिधर्म इति गाथाक्षरार्थः। भावार्थः पुनर्यथा प्रथमाध्ययने॥१४॥धम्मो एसुवइठो, अत्थस्स चउविहो उ निक्खेवो॥उहेण छविहत्थो, चउसठिविहो विभागेणं ॥१५॥व्याख्या॥ धर्म एष उपदिष्टो व्याख्यातः। अधुनात्वर्थावसरस्तत्रेदमाह । अर्थस्य चतुर्विधस्तु निक्षेपो नामादिभेदात् । तत्रौघेन सामान्यतः षड्विधोऽर्थ आगमनोआगमव्यतिरिक्तो द्रव्यार्थः । चतुःषष्टिविधो विभागेन विशेषेणेति गाथासमुदायार्थः ॥ १५ ॥ अवयवार्थं त्वाह ॥ धन्नाणि रयणथावर, दुपयचउप्पय तहेव कुविअं च ॥ उहेण छविहत्थो, एसो धीरेहिं पन्नत्तो॥ १६॥व्याख्या॥धान्यानि यवादीनि, रत्नं सुवर्णं, स्थावरं भूमिगृहादि, द्विपदं गन्त्र्यादि, चतुष्पदं गवादि, तथैव कुप्यं च ताम्रकलशाद्यनेकविधम् । ओघेन षड्विधोऽर्थ एषोऽनन्तरोदितः धीरैस्तीर्थंकरगणधरैः प्रज्ञप्तः प्ररूपित इतिगाथार्थः ॥१६॥ एनमेव विभागतोऽभिधित्सुराह ॥ चउवीसा चउवीसा, तिग दुगदसहा अणेगविह एव॥सवेसिं पि इमेसिं,विभागमहं पवक्खामि॥१७॥व्याख्या चतुर्विंशति चतुर्विंशतीति चतुर्विंशतिविधो धान्यार्थो रत्नार्थश्च। त्रिद्विदशधेति। त्रिविधः

तेम थवाथी देशविराधना तथा सर्वविराधनारहित थाय छे, ते माटे प्रथम अ-वगुणो कहेछे. ( जाइं के० ) यानि एटले जे ( दस अठय ठाणाइं के० ) दशाष्टकस्थानानि एटले दस अने आठ मली अढार स्थानकोने आश्रय करीने (बालो के०) बालः एटले बालक ( अवरज्झई के० ) अपराध्यति एटले अपराध करे छे. ते कवी रीते अपराध करे छे तो के, ( तब्र के० ) तत्र एटले ते अढार स्तानकमाहेलुं ( अन्नयरे ठाणे के०)अन्यतरस्मिन् स्थाने एटले हर कोइ एक स्थानकनेविषे प्रमादथी जे वर्त्ते, ते ( निग्गंथत्ताउ के० ) निर्ग्रंथत्वतः एटले निर्ग्रंथ पणा थकी ( नस्सइ के० ) भ्रश्यति एटले भ्रष्ट थाय छे, एटले साधुनां व्रत नांगे छे.॥ ७ ॥

( दीपिका. ) ते च गुणा अगुणपरिहारेण अखण्डा अस्फुटिताश्च नवन्तीति प्रथम-मगुणा उच्यन्ते । बालोऽज्ञानी यानि दशाष्टौ अष्टादश स्थानानि असंयमस्थानानि वक्ष्यमाणलक्षणानि आश्रित्य अपराध्यति तत्सेवनया अपराधं प्राप्नोति । कथमपराध्यतीत्याह । तत्र अन्यतरे अष्टादशानामसंयमस्थानानां मध्ये एकतरस्मिन्नपि स्थाने वर्तमानः प्रमादेन निर्ग्रन्थत्वान्निर्ग्रन्थनावाद् भ्रश्यति निश्चयनयेन अपैति । कः पूर्वोक्तो बाल इति ॥ ७ ॥

( टीका. ) ते चागुणपरिहारेणाखंडास्फुटितान्नवन्तीति अगुणास्तावडुच्यन्ते दसत्ति सूत्रम् । दशाष्टौ च स्थानान्यसंयमस्थानानि वक्ष्यमाणलक्षणानि यान्याश्रित्य बालोज्ञोऽपराध्यति तत्सेवनयापराधमाप्नोति । कथमपराध्यतीत्याह । तत्रान्यतरे स्थाने वर्तमानः प्रमादेन निर्ग्रन्थत्वान्निर्ग्रन्थनावाद्भ्रश्यति निश्चयनयेनापैति बाल इति सूत्रार्थः ॥ ७ ॥

वयछक्कं कायछक्कं, अकप्पो गिहिनायणं ॥
पलियंकनिसज्जा य, सणाणं सोहवज्जणं ॥ ८ ॥

( अवचूरिः ) कानि पुनस्तानि स्थानानीत्याह । व्रतषट्कं प्राणातिपातविरत्यादीनि रात्रिंनोजनविरतिषष्ठानि । कायषट्कं पृथिव्यादयः । अकल्पः शिक्षकस्थापनाकल्पादिर्वक्ष्यमाणः। गृहिनाजनं गृहस्थसंबन्धिकांस्यनाजनादि। पर्यङ्कः शयनीयविशेषः। निषद्या। स्नानं देशसर्वनेदभिन्नं शोनावर्जनं विनूषणपरित्यागः वर्जनमिति सर्वत्र योज्यम् ॥ ८ ॥

( अर्थ. ) हवे ते अढारे स्थानकनां नाम कही तेने वर्जवानो उपदेश कहे छे. ( वयछक्कं के० ) व्रतषट्कं एटले १ प्राणातिपात, २ मृषावाद, ३ अदत्तादान, ४ अ-ब्रह्मचर्य, ५ परिग्रह, ६ रात्रिनोजन ए छ तथा ( कायछक्कं के० ) कायषट्कं एटले

७ पृथ्वीकाय,८ अप्काय,ए तेजस्काय,१० वायुकाय, ११ वनस्पतिकाय अने १२ त्रसकाय तेनी विराधना तथा ( अकप्पो के० ) अकल्पः एटले १३ अकल्प आचारादिक, ( गिहिन्नायणं के० ) गृहिन्नाजनं एटले १४ गृहस्थनुं न्नाजन कांस्यपात्रादिक तथा ( पलिअंक के० ) १५ पर्यंकः एटले ढालीयो तथा ( निसज्जा के० ) निषद्या एटले १६ बेसवानां अनेक प्रकारनां आसन (सिणाणं के०) स्नानं एटले १७ स्नान करवुं ते ( सोन्ना के० ) १८ शोन्ना ए अढार स्थानक ( वज्जणं के० ) वर्जनं एटले वर्जवां. ॥ ८ ॥

---

( दीपिका. ) कानि पुनस्तानि स्थानानीत्याह । व्रतषट्कं प्राणातिपातविरमणमृषावादविरमणादत्तादानविरमणब्राह्मविरमण परिग्रहविरमणरात्रिन्नोजनविरमणरूपम् । तथा कायषट्कं पृथिव्यप्तेजोवायुवनस्पतित्रसकायरूपम् । अकल्पकः शिक्षकस्थापनाकल्पादिर्वक्ष्यमाणः । १३ गृहिन्नाजनं गृहस्थसंबन्धिकांस्यन्नाजनादि प्रतीतम् । १४ पर्यङ्कः शयनीयविशेषः प्रतीतः । १५ निषद्या च गृह एकानेकरूपा । १६ स्नानं देशतः सर्वतश्च द्वेधा । १७ शोन्नावर्जनं च विन्नूषापरित्यागः । १८ वर्जनशब्दः प्रत्येकमन्निसंबध्यते । स्नानवर्जनमित्यादि ॥ ८ ॥

---

( टीका. ) अमुमेवार्थं सूत्रस्पर्शनिर्युक्त्या स्पष्टयति । अठारस ठाणाइं, आयारकहाए जाइं न्नणियाइं ॥ तेसिं अन्नतरागं, सेवंतु न होइ सो समणो ॥३३॥व्या०॥ अष्टादश स्थानान्याचारकथायां प्रस्तुतायां यानि न्नणितानि तीर्थकरैः । तेषामन्यतरस्थानं सेवमानो न न्नवत्यसौ श्रमण आसेवक इति गाथार्थः ॥ ३३ ॥ कानि पुनस्तानि स्थानानीत्याह निर्युक्तिकारः ॥ वयछक्कं कायछक्कं, अकप्पो गिहिन्नायणं ॥ पलियंकनिसेज्जा य सिणाणं सोहवज्जणं ॥३४॥ व्या०॥ व्रतषट्कं प्राणातिपातनिवृत्त्यादीनि रात्रिन्नोजनविरतिषष्ठानि षड् व्रतानि । कायषट्कं पृथिव्यादयः षड् जीवनिकायाः । अकल्पः शिक्षकस्थापनाकल्पादिर्वक्ष्यमाणः । गृहिन्नाजनं गृहस्थसंबन्धि कांस्यन्नाजनादि प्रतीतम् । पर्यङ्कः शयनीयविशेषः प्रतीतः । निषद्या च गृह एकानेकरूपा । स्नानं देशसर्वन्नेदन्निन्नम् । शोन्नावर्जनं विन्नूषापरित्यागः । वर्जनमिति च प्रत्येकमन्निसंबध्यते । शोन्नावर्जनं स्नानवर्जनमित्यादीति गाथार्थः ॥ ८ ॥

तत्थिमं पढमं ठाणं, महावीरेण देसिअं ॥
अहिंसा निउणा दिठा, सवन्नूएसु संजमो ॥ ए ॥

---

( अवचूरिः ) तत्राष्टादशविधस्थानगणे व्रतषट्कं वा अनासेवनद्वारेणेदं वक्ष्यमाणलक्षणं प्रथमं गुणस्थानं महावीरेण देशितं कथितम् । अहिंसा निपुणा आ-

धाकर्माद्यपरिन्नोगाद् दृष्टा साक्षात्कर्मसाधकत्वेनोपलब्धा । अस्यामेव महावीरदेशितायां सर्वन्नूतेषु सर्वन्नूतविषयः संयमो नान्यत्र ॥ ए ॥

---

( अर्थ. ) (तत्थिमं के०) तत्रेदं एटले ते अढारस्थानकमाहेलुं आ (पढमं के०) प्रथमं एटले प्रथम (ठाणं के०) स्थानं एटले स्थानक (महावीरेण के०) महावीरस्वामीए (देसिअं के०) देशितं एटले अनासेवनद्वारे करी कहेलुं छे. ते केम तथा शुं कहेलुं छे तो के, (अहिंसा के०) जीवदया (निउणा के०) निपुणा एटले नली घणा सुखनी देनारी एवी(दिठा के०) दृष्टा एटले दीठी छे. ते कारण माटे (सव्वन्नूएसु के०) सर्वन्नूतेषु एटले प्राणिमात्रने विषे (संजमो के०) संयमः एटले संयम राखवो. अर्थात् दया राखवी. ॥ए॥

---

( दीपिका. ) गुणा अष्टादशस्थानेषु अखण्कास्फुटिताः कर्तव्यास्तत्र विधिमाह । तत्र अष्टादशविधस्थानगणे व्रतषट्के वा महावीरेण नगवता इदं वक्ष्यमाणलक्षणं प्रथमं स्थानमनासेवनद्वारेण देशितं कथितम् । किं तदित्याह । अहिंसा न हिंसा अहिंसा जीवदया । इयं च सामान्यतः प्रन्नूतैर्दर्शितेत्यत आह । किंन्नूताहिंसा । निपुणा आधाकर्माद्यपरिन्नोगतः कृतकारितादिपरिहारेण सूक्ष्मा न आगमद्वारेण देशिता । अपि तु दृष्टा साक्षात्कर्मसाधनत्वेनोपलब्धा । किमिति इयमेव निपुणा इत्याह । यतोऽस्यामेव महावीरदेशितायां सर्वन्नूतेषु सर्वन्नूतविषयः संयमो नान्यत्र उद्दिश्य कृतादिन्नोगविधानादिति ॥ ए ॥

---

( टीका. ) व्याख्याता सूत्रस्पर्शनिर्युक्तिरधुना सूत्रान्तरं व्याख्यायते । अस्य चायमन्निसंबन्धः। गुणा अष्टादशसु स्थानेषु अखण्कास्फुटिताः कर्तव्यास्तत्र विधिमाह । तत्थिमं ति सूत्रम् । तत्राष्टादशविधे स्थानगणे व्रतषट्के वा अनासेवनाद्वारेणेदं वक्ष्यमाणलक्षणं प्रथमं स्थानं महावीरेण नगवतापश्चिमतीर्थकरेण देशितं कथितम् । यद्युताहिंसेति । इयं च सामान्यतः प्रन्नूतैर्दर्शितेत्यत आह । निपुणा आधाकर्माद्यपरिन्नोगतः कृतकारितादिपरिहारेण सूक्ष्मा । नो आगमद्वारेण देशिता । अपितु दृष्टा साक्षात्कर्मसाधनत्वेनोपलब्धा । किमितीयमेव निपुणेत्यत आह । यतोऽस्यामेव महावीरदेशितायां सर्वन्नूतेषु सर्वन्नूतविषयः संयमो नान्यत्रोद्दिश्यकृतादिन्नोगविधानादिति सूत्रार्थः ॥ ए ॥

जावंति लोए पाणा, तसा अडुव थावरा ॥
ते जाणमजाणं वा, न हणे णो विघायए ॥ १० ॥

---

( अवचूरिः ) यावन्तो लोके प्राणास्त्रसास्तथा स्थावराश्च तान् रागाद्यन्निन्नूतो

व्यापादनबुद्ध्या जानन्वा पारतन्त्र्येण वा न हन्यात्। नापिघातयेदन्यैः। एकग्रहणे तज्जातीयग्रहणाद् घ्नतोऽप्यन्यान्न समनुजानीयात्॥ १०॥

(अर्थ.) ए पूर्वोक्त जीवहिंसानिषेधने स्पष्ट करी कहे छे. (जावंति के०) यावन्ति एटले जेटला (लोए के०) लोके एटले लोकने विषे (तसा के०) त्रसाः एटले त्रस एवा (अडुव के०) अथवा (थावरा के०) स्थावराः एटले स्थावर एवा (पाणा के०)प्राणिनः एटले जीवो छे. (ते के०) तान् एटले ते जीवने (जाणमजाणं वा के०) जानन्नजानन्वा एटले जाणते प्रयोजने अने अजाणते प्रमादे करी (न हणे के०) न हन्यात् एटले हणे नहि. तेम (णोविघायए के०) नापिघातयेत् एटले अनेरा पासे विघात करावे नहि. अने विघात करनार बीजाने अनुमोदे नहि.॥ १०॥

(दीपिका.) एतदेव स्पष्टयन्नाह। यतो हि भगवत इयमाज्ञा यावन्तो लोके केचन प्राणिनस्त्रसा द्वीन्द्रियादयः। अथवा स्थावराः पृथिव्यादयस्तान् जानन् रागाद्यभिभूतो व्यापादनबुद्ध्या अजानन् वा प्रमादपारतन्त्र्येण साधुस्तान् जीवान् न हन्यात् स्वयम्। नचाभिघातयेदन्यैर्नच घ्नतोऽप्यन्यान् समनुजानीयात्। अतो निपुणदृष्टेति॥ १०॥

(टीका.) एतदेव स्पष्टयन्नाह। जावंति सूत्रम्। यतो हि भागवत्याज्ञा। यावन्तः केचन लोके प्राणिनस्त्रसा द्वीन्द्रियादयः। अथवा स्थावराः पृथिव्यादयः। तान् जानन् रागाद्यभिभूतो व्यापादनबुद्ध्या अजानन्वा प्रमादपातन्त्र्येण न हन्यात् स्वयम्। नापि घातयेदन्यैः। एकग्रहणे तज्जातीयग्रहणाद् घ्नतोऽप्यन्यान्न समनुजानीयादतो निपुणा दृष्टेति सूत्रार्थः॥ १०॥

सवे जीवा वि इच्छंति, जीविउं न मरिज्जिउं॥
तम्हा पाणिवहं घोरं, निग्गंथा वज्जयंति णं॥ ११॥

(अवचूरिः) सर्वे जीवा अपि इच्छन्ति जीवितुं न मर्तुं प्राणस्य वल्लभत्वात्। यस्मादेवं तस्मात्प्राणिवधं घोरं रौद्रं दुःखहेतुत्वान्निर्ग्रन्था वर्जयन्ति। णमलंकारे॥ ११॥

(अर्थ.) जीव अहिंसाथीज केम भव्य कहेवाय ते कहे छे. (सवे वि के०) सर्वेऽपि एटले सर्वे पण (जीवा के०) जीवो (जीविउं के०) जीवितुं एटले जीववाने (इच्छंति के०) इच्छा करे छे. परंतु (मरिज्जिउं के०) मर्तुं एटले मरवाने. इच्छा करता नथी. कारण के, सर्व प्राणीने जीववानी आशा परिपूर्ण रहे छे. (तम्हा के०) तस्मात् एटले ते कारण माटे (निग्गंथा के०) निर्ग्रन्थाः एटले निर्ग्रंथ एवा साधुर्ज (घोरं के०)

घोरं एटले नयंकर एवा ( पाणवहं के० ) प्राणवधं एटले प्राणिवधने ( वज्जयंति के० ) वर्जयंति एटले त्याग करे छे. णं छे ते वाक्यालंकारने अर्थे छे. ॥ ११ ॥

( दीपिका. ) ननु अहिंसैव कथं नव्येत्यत आह । तस्मात्कारणाद् निग्रन्थाः साधवः प्राणवधं वर्जयन्ति । किंनूतं प्राणवधम् । घोरं रौद्रं डुःखहेतुत्वात् । तस्मात् कस्मात् । यतः सर्वे जीवा अपि सुखितादिनेदनिन्ना जीवितुमिच्छन्ति न मर्तुम् । कथम् । प्राणवल्लनत्वात्तेषां सर्वेषाम् । णमिति वाक्यालंकारे ॥ ११ ॥

( टीका. ) अहिंसैव कथं साध्वीत्येतदेवाह । सव त्ति सूत्रम् । सर्वे जीवा अपि डुःखितादिनेदनिन्ना इच्छन्ति जीवितुं न मर्तुं प्राणवल्लनत्वात् । यस्मादेवं तस्मात्प्राणवधं घोरं रौद्रं डुःखहेतुत्वाद् निग्रन्थाः साधवो वर्जयन्ति नावतः । णमिति वाक्यालंकार इति सूत्रार्थः ॥ ११ ॥

अप्पणठा परठा वा, कोहा वा जइ वा नया ॥
हिंसगं न मुसं बूआ, नो वि अन्नं वयावए ॥ १२ ॥

( अवचूरिः ) उक्तः प्रथमस्थानविधिः । द्वितीयस्थानमाह । आत्मार्थमात्मनिमित्तमग्लान एव ग्लानोऽहं समानेन कार्यं परार्थमेव वा क्रोधाद्वा त्वं दास इति । एकग्रहणे तज्जातीयग्रहणम् । मानाद्बहुश्रुतोऽहम् । मायातो निक्षाटनासमर्थोऽहम् । लोनाद्नोजनान्तरान्नलान्ने सति प्रान्तस्य शुद्धस्याप्यशुद्धमिदमित्यादि । नयात्किंचिद्वितथं कृत्वा प्रायश्चित्तनयान्न कृतम् । हिंसकं परपीडाकारि न ब्रूयात् । नाप्यन्यं वादयेदन्यं वदन्तमपि न समनुजानीयात् ॥ १२ ॥

( अर्थ. ) हवे बीजुं व्रत कहे छे. ( अप्पणठा के० ) आत्मार्थं एटले पोताने अर्थे तथा ( परठं के० ) परार्थं एटले पारके अर्थे ( कोहा वा के० ) क्रोधाद्वा एटले क्रोध थकी एटले तुं दास छे इत्यादि वाक्योए करी ( जइ वा के० ) यदि वा एटले अथवा मानमायालोने करी तथा ( नया के० ) नयाद्वा एटले नये करी (हिंसगं के०) हिंसकं एटले हिंसा जेथी थाय तेवुं (मुसं के०) मृषा एटले खोटुं ( न बूआ के० ) न ब्रूयात् एटले बोले नहि. अने ( अन्नं वि के० ) अन्यमपि एटले बीजाने पण ( नो वयावए के० ) नो वादयेत् एटले बोलावे नहि. ॥ १२ ॥

( दीपिका. ) उक्तः प्रथमस्थानविधिः । अथ द्वितीयस्थानविधिमाह । साधुर्मृषावचनं न ब्रूयात् स्वयमात्मना । नापि मृषा अन्यं वादयेत् । एकग्रहणे तज्जातीयग्रहणादिति न्यायेन अन्यान् मृषा ब्रुवतो न समनुजानीयात् । किंनूतं मृषा । हिंसकं

परपीडाकारि। सर्वमेव किमर्थं न वदेत्। आत्मार्थमात्मनिमित्तम्। कथम्। अग्लान एव ग्लानोऽहं ममानेन कार्यमित्यादिरूपम्। तथा परार्थं वा परनिमित्तं वा एवमेव पूर्ववत्। तथा क्रोधाद्वा त्वं दास इत्यादिरूपम्। एकग्रहणेन तज्जातीयानां ग्रहणमिति न्यायात्। मानात्। कथम्। अबहुश्रुत एवाहं बहुश्रुत इत्यादिरूपम्। मायातो वा। कथम्। भिक्षाटनस्यालस्येन मम पादपीडा वर्त्तत इत्यादिरूपम्। लोभाद्वा। कथम्। शोभनतरस्यान्नस्य लाभे सति अन्तप्रान्तस्याहारस्य एषणीयत्वेऽप्यनेषणीयमिदमित्यादिरूपम् उ यदि वा भयात्। कथम्। किंचित् पापं कृत्वा प्रायश्चित्तभयान्न कृतं मयेति वदति। एवं हास्यादिष्वपि योजना कार्या॥ १२॥

(टीका.) उक्तः प्रथमस्थानविधिः। अधुना द्वितीयस्थानविधिमाह। अप्पणठ त्ति सूत्रम्। आत्मार्थमात्मनिमित्तमग्लान एव ग्लानोऽहं ममानेन कार्यमित्यादि। परार्थं वा परनिमित्तं वा। एवमेव तथा क्रोधाद्वा त्वं दास इत्यादि। एकग्रहणे तज्जातीयग्रहणमिति मानाद्वाबहुश्रुत एवाहं बहुश्रुत इत्यादि। मायातो भिक्षाटनपरिजिहीर्षया पादपीडा ममेत्यादि। लोभाच्छोभनतरान्नलाभे सति प्रान्तस्यैषणीयत्वेऽप्यनेषणीयमिदमित्यादि। यदि वा भयात् किंचिद्वितथं कृत्वा प्रायश्चित्तभयान्न कृतमित्यादि। एवं हास्यादिष्वपि वाच्यम्। अतएवाह। हिंसकं परपीडाकारि सर्वमेव न मृषा ब्रूयात् स्वयम्। नाप्यन्यं वादयेत्। एकग्रहणे तज्जातीयग्रहणाच्च ब्रुवतोऽप्यन्यान्न समनुजानीयादित्यादीति सूत्रार्थः॥ १२॥

मुसावाउ उ लोगम्मि, सवसाहूहिं गरिहिउ॥
अविस्सासो अ भूआणं, तम्हा मोसं विवज्जए॥ १३॥

(अवचूरिः) मृषावादो हि लोके सर्वसाधुभिर्गर्हितो निन्दितः सर्वव्रतापकारित्वात् प्रतिज्ञातापालनात्। अविश्वास्यश्चाविश्वसनीयश्च भूतानां मृषावादी स्यात्। यस्मादेवं तस्मान्मृषावादं विवर्जयेत्॥ १३॥

(अर्थ.) वळी पण ते मृषावाद वर्जवो एम कहे छे. (सवलोअम्मि के०) सर्वलोके एटले सर्व लोकने विषे (मुसावाउ के०) मृषावादः एटले मृषावाद (सवसाहूहिं के०) सर्वसाधुभिः एटले सर्व साधुउए (गरिहिउ के०) गर्हितः एटले जगत्मां निंदित छे. कारण के, ते सर्वने तापकारक छे. तेथी प्रतिज्ञा पालन करातो नथी (च के०) तथा वळी मृषावाद करनार पुरुष (भूआणं के०) भूतानां एटले प्राणिमात्रोने (अविस्सासो के०) अविश्वास्यः एटले विश्वास करवा अयोग्य एवो

थाय छे. ( तम्हा के० ) तस्मात् एटले तेमाटे ( मोसं के० ) मृषा एटले मृषावादने ( विवज्जए के० ) विवर्जयेत् एटले त्याग करे. अर्थात् मृषावाद न करे. ए वीजुं स्थानक कह्युं. ॥ १३ ॥

---

( दीपिका. ) किमित्येतदेव मृषावदनं नेत्याह। मृषावदो हि लोके सर्वस्मिन्नेव सर्वसाधुनिर्गर्हितो निन्दितोऽस्ति। सर्वत्र तापकारित्वात्प्रतिज्ञातस्यापरिपालनात्। पुनर्मृषावादादविश्वास्योऽविश्वसनीयश्च नूतानां प्राणिनां मृषावादी नवेत्। यस्मादेवं तस्मात्साधुर्मृषावादं विवर्जयेत् ॥ १३ ॥

---

( टीका. ) किमित्येतदेवमित्याह। मुसावाउ त्ति सूत्रम्। मृषावादो हि लोके सर्वस्मिन्नेव सर्वसाधुनिर्गर्हितो निन्दितः। सर्वत्रतापकारित्वात्। प्रतिज्ञातापालनात्। अविश्वास्यश्चाविश्वसनीयश्च नूतानां मृषावादी नवति। यस्मादेवं तस्मान्मृषावादं विवर्जयेदिति सूत्रार्थः ॥ १३ ॥

चित्तमंतमचित्तं वा, अप्पं वा जइ वा बहुं ॥
दंतसोहणमित्तं वि, उग्गहंसि अजाइया ॥ १४ ॥

---

( अवचूरिः ) उक्तो द्वितीयस्थानविधिः। तृतीयस्थानमाह। चित्तवद् द्विपदादि। अचित्तवद्धिरण्यादि। अल्पं वा मूल्यतः प्रमाणतश्च। यदि वा बहु मूल्यप्रमाणाभ्यां दन्तशोधनमात्रमपि तथाविधं तृणाद्यवग्रहे यस्य यत्तत्तमयाचित्वा न गृह्णन्ति ॥१४॥

---

( अर्थ. ) हवे त्रीजुं स्थान कहे छे. ( चित्तमंतं के० ) चित्तवत् एटले द्विपदादि ( वा के०) वली (अचित्तं के०) अचित्तवत् एटले हिरण्यादि (अप्पं के०) अल्पं एटले अल्पमूल्यवालुं (जइवा के०)यदिवा एटले अथवा (बहुं के०)बहु एटले मूल्यथी अथवा प्रमाणथी मोटुं ( दंतसोहणमित्तं पि के० ) दन्तशोधनमात्रमपि एटले दंतशोधनमात्र ते एक तृणमात्र पण ( अजाइआ के० ) अयाचित्वा एटले माग्या विना ( उग्गहंसि के० ) अवग्रहे एटले गृहस्थना अवग्रहमां पडेली वस्तुने साधु ग्रहण न करे. ॥१४॥

---

( दीपिका. ) उक्तो द्वितीयस्थानविधिः। सांप्रतं तृतीयस्थानविधिमाह। साधवोऽयाचित्वा कदाचनापि न किमपि गृह्णन्ति। यतः साधूनां सर्वमवग्रहयाचने गृहस्थैर्दत्तं ग्राह्यं नान्यथा। किं तदाह। चित्तवद् द्विपदादि। अचित्तवद् वा हिरण्यादि। अल्पं वा मूल्यतः प्रमाणतश्च। यदि वा बहु मूल्यप्रमाणाभ्यामेव। किं बहुना। दन्तशोधनमात्रमपि तथाविधं तृणाद्यपि। एतावता साधवस्तृणाद्यप्यदत्तं न गृह्णन्ति किमन्यत्॥१४॥

---

( टीका. )उक्तो द्वितीयस्थानविधिः। तृतीयस्थानविधिमाह। चित्तमंत त्ति सूत्रम्।

चित्तवद्विपदादि वा । अचित्तवद्वा हिरण्यादि । अल्पं वा मूल्यतः प्रमाणतश्च । यदि वा बहु मूल्यप्रमाणाभ्यामेव । किं बहुना । दन्तशोधनमात्रमपि तथाविधं तृणादि । अवग्रहे यस्य तत्तमयाचित्वा न गृह्णन्ति साधवः कदा चनेति सूत्रार्थः ॥ १४ ॥

तं अप्पणा न गिण्हंति नो वि गिण्हावए परं ॥
अन्नं वा गिण्हमाणं वि, नाणुजाणंति संजया ॥ १५ ॥

---

( अवचूरिः ) तच्चित्तवदादि आत्मना न गृह्णन्ति विरतत्वात् । नापि ग्राहयन्ति परं विरतत्वादेव । अन्यं वा गृह्णन्तमपि स्वयमेव न समनुजानन्ति संयताः ॥ १५ ॥

---

( अर्थ. ) फरीने पण तेज वात कहे छे.(संजया के०)संयताः एटले संयत जे साधुउं ते ( तं के० ) ते पूर्वोक्त सचित्त अने अचित्त वस्तुने ( अप्पणा के० ) आत्मना एटले पोते (न गिण्हंति के०) न गृह्णंति एटले ग्रहण करता नथी. तथा (परं के०) बीजापासे (नो वि गिण्हावए के०) नापि ग्राहयन्ति एटले ग्रहण करावे पण नहि. (वा के०) वली (गिण्हमाणं पि के०) गृह्णन्तमपि एटले ग्रहण करतो होय तेने पण पोते (नाणुजाणंति के० ) नानुजानंति एटले अनुमोदना आपे नहि. ॥ १५ ॥

---

( दीपिका. ) पुनस्तदेवाह । संयताः तमिति तत्पूर्वोक्तं चित्तवदचित्तवदादि आत्मना स्वयं न गृह्णंति विरतत्वात् । नापि परं प्रति ग्राहयन्ति विरतत्वादेव । तथा अन्यं वा गृह्णन्तमपि स्वयमेव न समणुजाणंति नानुमन्यन्ते ॥ १५ ॥

---

( टीका. ) एतदेवाह । तं ति सूत्रम् । तच्चित्तवदादि आत्मना न गृह्णन्ति विरतत्वान्नापि ग्राहयन्ति परं विरतत्वादेव । तथान्यं वा गृह्णन्तमपि स्वयं नानुजानन्ति नानुमन्यन्ते संयता इति सूत्रार्थः ॥ १५ ॥

अबंभचरिअं घोरं, पमायं दुरहिठ्ठिअं ॥
नायरंति मुणी लोए, भेआययणवज्जिणो ॥ १६ ॥

---

( अवचूरिः ) उक्तस्तृतीयस्थानविधिः । चतुर्थस्थानविधिमाह । अब्रह्मचर्यं घोरं दुर्गतिहेतुत्वात् प्रमादमूलत्वाद् दुराश्रयं दुस्सेवमनन्तभवहेतुत्वाद् नाचरन्ति पुनर्ये लोके भेदश्चारित्रभेदस्तदायतनं तत्स्थानं तद्वर्जिनः ॥ १६ ॥

---

( अर्थ. ) चतुर्थ स्थानविधि कहे छे. (भेयाययणवज्जिणो के०) भेदायतनवर्जिनः एटले भेद जे चारित्रभेदना स्थानक तेने वर्जता अर्थात् चारित्रातिचारथी भय पामता एवा (मुणी के०)मुनयः एटले मुनियो (लोए के०) लोके एटले मनुष्य लोकने विषे (दुरहिठ्ठिअं के०) दुरधिष्ठितं एटले दुराराध्य एवा तथा (पमायं के०) प्रमादं एटले

प्रमादनुं मूलकारण एवा अने ( घोरं के० ) घोरं एटले रौद्रगतिनुं हेतुरूप एवा ( अबंभचरिअं के० ) अब्रह्मचर्य एटले अब्रह्मने (नायरंति के०) नाचरंति एटले आचरण करता नथी. अर्थात् अब्रह्मसेवन करता नथी. ॥ १६ ॥

---

( दीपिका. ) तृतीयस्थानविधिरुक्तः । अथ चतुर्थस्थानविधिमाह । मुनयो लोके मनुष्यलोकेऽब्रह्मचर्यं प्रतीतं नाचरन्ति न सेवन्ते । किंभूतमब्रह्म । घोरं रौद्रानुष्ठानहेतुत्वात् । पुनः किंभूतमब्रह्म। प्रमादं प्रमादवत्। कथम्। सर्वदा प्रमादमूलत्वात्। पुनः किंभूतमब्रह्म। डुरधिष्ठितं डुराश्रयं डुःसेवं विदितजिनवचनेन अनन्तसंसारहेतुत्वात्। यतश्चैवमतएव मुनयोऽब्रह्म न सेवन्त इत्यर्थः। किंभूता मुनयः। भेदायतनवर्जिनः। भेदश्चारित्रभेदस्तस्यायतनं स्थानमिदमब्रह्मचर्यमेव। उक्तन्यायात्तद्वर्जिनश्चारित्रातिचारभीरव इत्यर्थः॥ १६ ॥

---

( टीका. ) उक्तस्तृतीयस्थानविधिः। चतुर्थस्थानविधिमाह। अबंभ त्ति सूत्रम्। अब्रह्मचर्यं प्रतीतं घोरं रौद्रं रौद्रानुष्ठानहेतुत्वात्। प्रमादं प्रमादवत् सर्वप्रमादमूलत्वात्। डुराश्रयं डुस्सेव्यं विदितजिनवचनेनानन्तसंसारहेतुत्वात्। यतश्चैवमतो नाचरन्ति नासेवन्ते मुनयो लोके मनुष्यलोके। किंविशिष्टा इत्याह। भेदायतनवर्जिनो भेदश्चारित्रभेदस्तदायतनं तत्स्थानमिदमेवोक्तन्यायात्तद्वर्जिनश्चारित्रातिचारभीरव इति सूत्रार्थः॥ १६ ॥

मूलमेयमहम्मस्स, महादोससमुस्सयं ॥
तम्हा मेहुणसंसग्गं, निग्गंथा वज्जयंति णं ॥ १७ ॥

---

( अवचूरिः ) बीजमधर्मस्य पापस्य महतां दोषाणां चौर्यप्रवृत्त्यादीनां समुच्छ्रयं संघातं विदितैहिकापायाः तस्मात् मैथुनसंसर्गं संबन्धं योषिदालापाद्यपि निर्ग्रन्था वर्जयन्ति। णं वाक्यालंकारे॥ १७ ॥

---

( अर्थ. ) वली पण ( अहम्मस्स के० ) अधर्मस्य एटले अधर्मनुं ( मूलं के० ) मूल तथा ( महादोससमुस्सयं के० ) महादोषसमुच्छ्रयं एटले चोरी प्रमुख महोटा दोषोनी उत्पत्तिनुं स्थानक छे, तेमां महादोषनो संचय छे, ( तम्हा के० ) तस्मात् एटले ते कारण माटे ( निग्गंथा के० ) निर्ग्रंथाः एटले निर्ग्रंथ एवा साधुउ ( एयं के० ) एतत् एटले आ ( मेहुणसंसग्गं के० ) मैथुनसंसर्गं एटले मैथुनना संसर्गने ( वज्जयंति के० ) वर्जयंति एटले त्याग करे छे. णं ए वाक्यालंकारार्थ छे. ॥१७॥

( दीपिका. ) अथ एतदेव निगमयति। एं इति वाक्यालंकारे। निर्ग्रन्थाः साधवः तस्मात् कारणात् मैथुनसंसर्गं मैथुनसंबन्धं योषित आलापाद्यपि वर्जयन्ति। तस्मात् कस्मात्। यत एतदब्रह्मसेवनमधर्मस्य पापस्य मूलं बीजमिति परलोकसंबन्धी अपायः। कष्टं पुनरेतद् महादोषसमुच्छ्रयं महतां दोषाणां चौर्यप्रवृत्त्यादीनां समुच्छ्रयं संघातवदिति इहलोकसंबन्धी अपायः। कष्टमिति उभयलोककष्टदातृत्वाद् मैथुनवर्जनं युक्तं साधूनाम्॥ १७॥

( टीका. ) एतदेव निगमयति। मूलं ति सूत्रम्। मूलं बीजमेतदधर्मस्य पापस्येति पारलौकिकोऽपायः। महादोषसमुच्छ्रयं महतां दोषाणां चौर्यप्रवृत्त्यादीनां समुच्छ्रयं संघातवदित्यैहिकोऽपायः। यस्मादेवं तस्मान्मैथुनसंसर्गं मैथुनसंबन्धं योषिदालापाद्यपि निर्ग्रन्था वर्जयन्ति। णमिति वाक्यालङ्कार इति सूत्रार्थः॥ १७॥

बिडमुब्भेइमं लोणं, तिल्लं सप्पिं च फाणिअं॥
न ते संनिहिमिछंति, नायपुत्तवओरया॥ १८॥

( अवचूरिः ) उक्तश्चतुर्थस्थानविधिः। पञ्चमस्थानविधिमाह। बिडं गोमूत्रादिपक्वमुद्भेद्यं सामुद्रादि। यद्वा। बिडं प्रासुकमुद्भेद्यमप्रासुकमेवं द्विधा लवणम्। तैलं सर्पिश्च। फाणितं द्रवगुड एतल्लवणाद्येवमन्यच्च न ते साधवः संनिधिं कुर्वन्ति पर्युषितं न स्थापयन्ति ज्ञातपुत्रवचोरताः॥ १८॥

( अर्थ. ) हवे पंचम स्थानविधि कहे छे. ( नायपुत्तवओरया के० ) ज्ञातपुत्रवचोरताः एटले महावीर स्वामीना वचनमां रक्त एवा अर्थात् महावीर स्वामीना वचन प्रमाणे चालनार एवा साधुओ ( बिडं के० ) बिडलवण अथवा गोमूत्रादिपक्व एवुं ( लोणं के० ) लवण तथा ( उब्भेइमं के० ) उद्भेद्यं एटले समुद्रना जलथी थतुं लवण अथवा बिड एटले प्रासुक अने उद्भेद्य एटले अप्रासुक लवण कह्युं तथा ( तिल्लं के० ) तैलं एटले तेल ( सप्पिं के० ) सर्पिः एटले घृत ( फाणिअं के० ) फाणितं एटले गोलनी राब ( ते के० ) ते सर्व वस्तुओने ( संनिहिं के० ) संनिधिं एटले रात्रिवास राखवाने ( न इछंति के० ) इछता नथी.॥ १८॥

( दीपिका. ) चतुर्थस्थानविधिः प्रोक्तः। अथ पञ्चमस्थानविधिमाह। साधव एतेषां सन्निधिं न कुर्वंति पर्युषितम्। कोऽर्थः। रात्रौ रक्षितं न स्थापयन्ति। किंविशिष्टाः साधवः। ज्ञातपुत्रवचोरताः। ज्ञातपुत्रः श्रीवर्द्धमानस्वामी तस्य वचने निस्संगताप्रतिपादनतत्परे रता आसक्ताः। केषां सन्निधिं न कुर्वन्ति तान्याह। विडं गोमू-

त्रादिपक्वम् १ उद्भेद्यं सामुद्रादि २ विडं प्रासुकमुद्भेद्यमप्रासुकमित्येवं द्विप्रकारं लवणं तथा तैलं ३ सर्पिश्च घृतं ४ फाणितं द्रवगुडः ५ एतच्च लवणाद्यपि एवं द्विप्रकार-मन्यच्च रात्रौ न रक्षन्तीत्यर्थः ॥ १७ ॥

( टीका. ) प्रतिपादितश्चतुर्थस्थानविधिः । इदानीं पञ्चमस्थानविधिमाह । विडत्ति सूत्रम् । बिडं गोमूत्रादिपक्वं, उद्भेद्यं सामुद्रादि । यद्वा बिडं प्रासुकमुद्भेद्यमप्रासुक-मप्येवं द्विप्रकारं लवणम् । तथा तैलं सर्पिश्च फाणितम् । तत्र तैलं प्रतीतं, सर्पिर्घृतं, फाणितं द्रवगुडः । एतल्लवणाद्येवंप्रकारमन्यच्च न ते साधवः संनिधिं कुर्वन्ति पर्युषितं स्थापयन्ति । ज्ञातपुत्रवचोरता नगवद्वर्धमानवचसि निःसंगताप्रतिपादनपरे सक्ता इति सूत्रार्थः ॥ १७ ॥

लोहस्सेसणुफासे, मन्ने अन्नयरामवि ॥
जे सिआ सन्निहिं कामे, गिही पवइए न से ॥ १ए ॥

( अवचूरिः ) संनिधिदोषमाह । लोनस्यैषोऽनुस्पर्शोऽनुनावः । यदेतत्संनिधिकरण-म् । मन्ये मन्यन्ते प्राकृतत्वादेकवचनम् । एवमाहुस्तीर्थकरगणधरा अन्यतरामपि यः स्यात्संनिधिं कामयते सेवते । गृहस्थोऽसौ न प्रव्रजितः। प्रव्रजितस्य डुर्गतेरनावात् ॥ १ए ॥

( अर्थ. ) हवे संनिधि राखवाना दोष कहे बे. जे संनिधिनुं करवुं बे, ते ( एस के० ) एषः एटले आ चारित्रने विघ्न करनार चतुर्थ कषाय एवा ( लोनस्स के० ) लोनस्य एटले लोननो (अणुफास के०) अनुस्पर्शः एटले महिमा बे. ते कारण माटे हुं (मन्ने के०) मन्ये एटले मानुं बुं के (जे के०) ये एटले जे साधुर्ड ( अन्नयरामवि के०) अ-न्यतरामपि एटले थोडी पण ( संनिहिं के० ) सनिधिं एटले संनिधिने ( सिआ के०) स्यात् कदाचित् एटले जो कदाचित् ( कामे के० ) कामयते एटले सेवन करे, तो ते साधु ( गिही के० ) गृही एटले गृहस्थ जाणवो. पण ( से के० ) ते ( पवइए के० ) प्रव्रजितः एटले प्रव्रजित ( न के०) नथी. संनिधि एटले संनिधीयते एटले नजीक कराय बे आत्माने नरकादिकने विषे जेथी तेने संनिधि कहियें. ॥ १ए ॥

( दीपिका. ) अथ सन्निधिदोषमाह । लोनस्य चारित्रविघ्नकारिणश्चतुर्थकषा-यस्य एषोऽनुस्पर्श एषोऽनुनावो यडुत संनिधीकरणमिति । यतश्चैवमतो मन्ये मन्यन्ते प्राकृतशैल्या एकवचनम् । एवं तीर्थकरगणधरा आहुः । अन्यतरां स्तोकामपि यः स्यात् यः कदाचित् संनिधिं कामयते सेवते कामी । अतः स नावतो गृही गृहस्थः । नासौ

प्रव्रजितः । कस्माद्दुर्गतिनिमित्तानुष्ठानप्रवृत्तेः । संनिधीयते नरकादिषु आत्मा अनेनेति संनिधिरिति शब्दार्थात् । प्रव्रजितस्य च दुर्गतिगमनाभावादिति ॥ १९ ॥

(टीका.) संनिधिदोषमाह। लोभस्स त्ति सूत्रम् । लोभस्य चारित्रविघ्नकारिणश्चतुर्थकषायस्य एसणुफासत्ति । एषोऽनुस्पर्श एषोऽनुभावो यदेतत्संनिधिकरणमिति । यतश्चैवमतो मन्ये मन्यन्ते । प्राकृतशैल्या एकवचनम् । एवमाहुस्तीर्थकरगणधराः । अन्यतरामपि स्तोकामपि यः स्यात् यः कदाचित्संनिधिं कामयते सेवते । गृही गृहस्थोऽसौ भावतः प्रव्रजितो नेति दुर्गतिनिमित्तानुष्ठानप्रवृत्तेः । संनिधीयते नरकादिष्वात्मानयेति संनिधिरिति शब्दार्थात्प्रव्रजितस्य च दुर्गतिगमनाभावादिति सूत्रार्थः ॥ १९ ॥

जं पि वत्थं व पायं वा, कंबलं पायपुंछणं ॥
तं पि संजमलज्जठा, धारंति परिहरंति अ ॥ २० ॥

(अवचूरिः) यद्येवं तदा वस्त्रादिधारणे कथं साधूनामसंनिधिरित्याह । यद्यप्यागमोक्तं वस्त्रं वा पात्रं वा कम्बलं वर्षाकल्पादि । पादप्रोंछनं रजोहरणं तदपि संयमलज्जार्थं पात्रादि तदभावे गृहिभाजने षट्कायवधः । लज्जार्थं वस्त्रं धारयन्ति परिहरन्ति च परिभुञ्जते पुष्टालम्बनेन ॥ २० ॥

(अर्थ.) आहिं कोइ शंका करे के, साधुउं वस्त्रादिक राखे छे, तो तेनो ते साधुउंने संनिधि दोष केम न लागे? त्यांक कहे छे के, साधुउं (जं पि के०) यदपि एटले जे पण आगमोक्त एवा (वत्थं के०) वस्त्रं एटले चोलपट्टादि (च के०) वली (पायं के०) पात्रं एटले पात्रां (वा के०) वा एटले वली (कंबलं के०) कंबलं एटले वर्षाकल्पादि तथा (पायपुंछणं के०) पादप्रोञ्छनं एटले रजोहरण (तं पि के०) तदपि ते सर्वेने पुष्टालंबनथी (संयमलज्जठा के०) संयमलज्जार्थं एटले संयमनी लाज पालवाने (धारयंति के०) धारण करे छे. (च के०) तथा वली (परिहरंति के०) परिभुंजते एटले भोगवे छे. पात्रादि विना संयमनुं रक्षण थाय नहि. कारण के, गृहस्थना पात्रमां संयमी जो भोजन करे, तो षट्कायनो वध थाय. अने जे वस्त्र छे, ते लज्जाने अर्थे छे. अथवा एम पण अर्थ थाय के, संयम तेज लज्जा कहियें. ते संयमरूप लज्जाना रक्षण माटे वस्त्रपात्रादि धारण करे छे.॥ २० ॥

(दीपिका.) अत्राह। यद्येवं वस्त्रादि धारयतां साधूनां कथं न संनिधिरित्याह । साधवो यद्यपि आगमोक्तं वस्त्रं वा। चोलपट्टादि वा १ पात्रं वालाब्वादि २ कंवलं वर्षा-

कल्पादि ३ पादप्रोञ्छनं ४ रजोहरणं धारयन्ति पुष्टालम्बनविधानेन । परिहरन्ति च परिभुञ्जते च मूर्छारहिताः । तदपि किमर्थम् । संयमलज्जार्थं संयमार्थं पात्रादि । तद्व्यतिरेकेण पुरुषमात्रेण गृहभाजने सति संयमपालनाभावात् । लज्जार्थं वस्त्रम् । तद्व्यतिरेकेण अंगनादौ विशिष्टश्रुतपरिणत्यादिरहितस्य निर्लज्जताया उत्पत्तेः । अथवा संयम एव संयमलज्जा तदर्थं सर्वमेव वस्त्रादि धारयन्तीत्यादि ॥ २० ॥

( टीका. ) आह । यद्येवं वस्त्रादि धारयतां साधूनां कथमसंनिधिरित्यत आह । जं पि त्ति सूत्रम् । यदप्यागमोक्तं वस्त्रं वा चोलपट्टकादि, पात्रं वालाबुकादि, कम्बलं वर्षाकल्पादि, पादपुंछनं रजोहरणम् । तदपि संयमलज्जार्थमिति संयमार्थं पात्रादि । तद्व्यतिरेकेण पुरुषमात्रेण गृहस्थभाजने सति संयमपालनाभावात् । लज्जार्थं वस्त्रं, तद्व्यतिरेकेणाङ्गनादौ विशिष्टश्रुतपरिणत्यादिरहितस्य निर्लज्जतोपपत्तेः । अथवा संयम एव लज्जा तदर्थं सर्वमेतद्वस्त्रादि धारयन्ति । पुष्टालम्बनविधानेन परिहरन्ति च परिभुञ्जते च मूर्छारहिता इति सूत्रार्थः ॥ २० ॥

न सो परिग्गहो वुत्तो, नायपुत्तेण ताइणा ॥
मुछा परिग्गहो वुत्तो, इअ वुत्तं महेसिणा ॥ २१ ॥

( अवचूरिः ) यतश्चैवं ततो न सोत्ति । नासौ निरभिष्वङ्गस्य वस्त्रधारणादिलक्षणः परिग्रह उक्तः । बन्धुहेतुत्वाभावात् । केन । ज्ञातपुत्रेण वर्द्धमानेन त्रात्रा स्वपरत्राणसमर्थेन अपि तु मूर्छा असत्स्वपि वस्त्रादिष्वभिष्वङ्गः परिग्रह उक्तो बन्धहेतुत्वात् । एवमुक्तं महर्षिणा गणधरेण शय्यंभवस्वामिना ॥ २१ ॥

( अर्थ. ) ( इइ के० ) इति एटले आ प्रकारे ( महेसिणा के० ) महर्षिणा एटले सय्यंभव स्वामीए सूत्रमां ( वुत्तं के० ) उक्तं एटले कहेलुं छे के, (ताइणा के०) त्रात्रा एटले जीवनुं रक्षण करनार एवा (नायपुत्तेण के०) ज्ञातपुत्रेण एटले ज्ञात जे प्रधान क्षत्रिय सिद्धार्थ तेमना पुत्र एवा वर्द्धमान स्वामीए (सो के०) सः एटले ते संयमपालनार्थ चोलपट्टादिक साधु जे राखे छे, ते (परिग्गहो के०) परिग्रहः एटले परिग्रह (न वुत्तो के०) न उक्तः एटले कह्यो नथी. अने (मुछा परिग्गहो के०) मूर्छा परिग्रहः एटले अविद्यमान वस्त्रादिकने विषे मूर्छा राखवी तेज परिग्रह (वुत्तो के०) उक्तः एटले कह्यो छे. ॥ २१ ॥

( दीपिका. ) यतश्चैवं ततो महर्षिणा शय्यंभवेन गणधरेण सूत्र इत्युक्तम् । इतीति किम् । ज्ञातपुत्रेण ज्ञातः प्रधानः क्षात्रियः सिद्धार्थः तस्य पुत्रेण वर्द्धमानस्वामिना नासौ निर्ममत्वेन वस्त्रधारणादिलक्षणः परिग्रह उक्तोऽर्थतः । कस्मात् । बन्धहेतु-

त्वाभावात्। किंभूतेन ज्ञातपुत्रेण। ताइणा त्रात्रा। स्वपरत्राणसमर्थेन। अपितु कः परिग्रहो महावीरेणार्थतः प्रोक्त इत्याह। मूर्छा परिग्रह उक्तः। असत्स्वपि वस्त्रादिषु लौल्यम्। कुतः। बन्धहेतुत्वात्। शिष्यः प्राह। ननु वस्त्रादीनामभावेऽपि यदि मूर्छा तदा वस्त्रादिसद्भावे सति कथं न मूर्छा। उच्यते। साधूनां सम्यग्बोधेन मूर्छाया बीजभूतस्याबोधस्योपघातात् ॥ २१ ॥

(टीका.) यतश्चैवमतो एसो त्ति सूत्रम्। नासौ निरभिष्वङ्गस्य वस्त्रधारणादिलक्षणः परिग्रह उक्तो बन्धहेतुत्वाभावात्। केन। ज्ञातपुत्रेण ज्ञात उदारक्षत्रियः सिद्धार्थः तत्पुत्रेण वर्धमानेन त्रात्रा स्वपरपरित्राणसमर्थेन। अपि तु मूर्छासत्स्वपि वस्त्रादिष्वभिष्वङ्गः परिग्रह उक्तो बन्धहेतुत्वादर्थतस्तीर्थकरेण। ततोऽवधार्य इत्येवमुक्तो महर्षिणा गणधरेण। सूत्रे सेज्जंभव आहेति सूत्रार्थः ॥ २१ ॥

सव्वत्थुवहिणा बुद्धा, संरक्खणपरिग्गहे ॥
अवि अप्पणो वि देहंमि, नायरंति ममाइयं ॥ २२ ॥

(अवचूरिः) वस्त्राद्यभावे मूर्छा स्यात्। तद्भावे कथं नेत्याह। सर्वत्रोचितक्षेत्रकाले चोपधिनागमोक्तेन सहिता अपि बुद्धा ज्ञाततत्वाः संरक्षणाय षण्णां कायानां वस्त्रादिपरिग्रहे सत्यपि नाचरन्ति। ममत्वमिति योगः। अप्यात्मनो देहेऽपि ममाइयं ममत्वं न चरन्ति ॥ २२ ॥

(अर्थ.) (बुद्धा के०) बुद्धाः एटले यथावत् जाणी लीधुं छे वस्तुतत्त्व जेणे एवा साधुउं (सव्वत्थुवहिणा के०) सर्वत्रोपाधिना एटले सर्वत्र योग्य एवा क्षेत्रकालने विषे आगमोक्त उपाधि जे वस्त्रादि तेणे करी (संरक्खणपरिग्गहे के०) संरक्षणपरिग्रहे एटले षट्जीवनिकायोना संरक्षणने अर्थे परिग्रह जे छे तेने विषे (अवि के०) अपि एटले पण (अप्पणो वि के०) आत्मनोऽपि एटले पोताना पण (देहंमि के०) देहे एटले देहने विषे पण (ममाइयं के०) ममत्वं एटले ममत्वादिकने (नायरंति के०) नाचरंति एटले आचरण करता नथी. ॥ २२ ॥

(दीपिका.) बुद्धा यथावज्ज्ञाततत्त्वाः साधवः संरक्षणपरिग्रहे संरक्षणाय षण्णां जीवनिकायानां परिग्रहे सत्यपि न आचरन्ति ममत्वमिति उक्तियोजना। केन। सर्वत्र उपधिना सर्वत्र योग्ये क्षेत्रे काले च उपधिना आगमोक्तेन वस्त्रादिना। कुतः। ते परिग्रहे वस्त्रादिरूपे ममत्वं न कुर्वन्तीत्याह। यतस्ते भगवन्त आत्मनोऽपि देह आत्मनो धर्मकायेऽपि ममत्वमात्मीयाभिमानं विशिष्टप्रतिबन्धसंगतिं न कुर्वन्ति।

वस्तुनस्तत्त्वस्य ज्ञानात् किमनेन वस्त्रादिना तिष्ठतु दूरे तावत् अन्यत् सर्वम्। देहवत् परिग्रहेऽपि न ममत्वमात्मीयाभिमानं विशिष्टप्रतिबन्धसंगतिं कुर्वन्ति ॥ २२ ॥

---

( टीका. ) आह। वस्त्राद्यभावभाविन्यपि मूर्छा कथं वस्त्रादिभावे साधूनां न भविष्यति। उच्यते। सम्यग्बोधेन तद्बीजभूताबोधोपघातादाह च। सबत्थ त्ति सूत्रम्। सर्वत्रोचिते क्षेत्रे काले चोपधिना आगमोक्तेन वस्त्रादिना सहापि बुद्धा यथावद्विदितवस्तुतत्त्वाः साधवः संरक्षणपरिग्रह इति संरक्षणाय षण्णां जीवनिकायानां वस्त्रादिपरिग्रहे सत्यपि नाचरन्ति ममत्वमिति योगः। किंवानेन ते हि भगवन्तः अप्यात्मनोऽपि देह इत्यात्मनो धर्मकायेऽपि विशिष्टप्रतिबन्धसंगतिं न कुर्वन्ति। ममत्वमात्मीयाभिधानं वस्तुतत्त्वावबोधात्। तिष्ठतु तावदन्यत्। ततश्च देहवदपरिग्रह एव तदिति सूत्रार्थः ॥ २२ ॥

अहो निच्चं तवो कम्मं, सवबुद्धेहिं वन्निअं ॥
जा य लज्जासमा वित्ती, एगभत्तं च भोअणं ॥ २३ ॥

---

( अवचूरिः ) उक्तः पञ्चमस्थानविधिः। अथ षष्ठस्थानविधिमाह। अहो नित्यं तपः कर्म। अहो इति विस्मये। अपायाभावेन तदन्यगुणवृद्धिसंभवादप्रतिपाति तपःकर्म तपोऽनुष्ठानं सर्वबुद्धैस्तीर्थकरैर्वर्णितं देशितम्। किंविशिष्टम्। या च लज्जासमा वृत्तिर्लज्जासंयमस्तत्समा तुल्या संयमाविरोधिनी वृत्तिर्देहपालना। एकभक्तं उच्यत एकसंख्यम्। भावतः कर्मबन्धाभावादद्वितीयं भोजनं यत्र ॥ २३ ॥

---

( अर्थ.) हवे षष्ठ स्थान कहे छे. (अहो के०) अहो इति आश्चर्ये (निच्चं के०) नित्यं एटले निरंतर ( तवोकम्मं के० ) तपःकर्म ते ( सबबुद्धेहिं के० ) सर्वबुधैः एटले सर्व बुधजनोए एटले विद्वज्जनोए ( वन्निअं के० ) वर्णितं एटले वर्णन करेलुं छे. ( जा य के० ) या च एटले वली जे ( वित्ती के० ) वृत्तिः एटले देहपालन रूप वृत्ति ( लज्जासमा के० ) लज्जासमा एटले संयम समान छे, ते शुं तो के ( एगभत्तं च भोअणं के० ) एकभक्तंच भोजनं एटले ते एक भक्त भोजन छे. ॥ २३ ॥

---

( दीपिका. ) उक्तः पञ्चमः स्थानविधिः। अधुना षष्ठस्थानविधिमाह। अहो इति आश्चर्ये। तपःकर्म तपोऽनुष्ठानं सर्वतीर्थकरैर्वर्णितं देशितम्। किंविशिष्टं तपःकर्म। नित्यमपायस्य अभावेन गुणवृद्धिसंभवात् अप्रतिपात्येव। किंविशिष्टं तप इत्याह। या च वृत्तिर्वर्तनं देहपालना। किंभूता वृत्तिः। लज्जासमा लज्जा संयमः तेन समा सदृशी तुल्या। संयमाविरोधिनीत्यर्थः। च पुनः एकं भक्तं भोजनं एकभक्तं उच्यतो भावतश्च यस्मिन्भोजने तत्तथा। तत्र उच्यत एकं एकसंख्यानुगतं भावत एकं कर्मबन्धस्याभावेना-

द्वितीयं तद्दिवस एव रागादिरहितस्य अन्यथा भावत एकत्वस्य अभावादिति ॥ २३ ॥

( टीका. ) उक्तः पञ्चमस्थानविधिरधुना षष्ठमधिकृत्याह । अहो त्ति सूत्रम् । अहो नित्यं तपः कर्मेति। अहो विस्मये। नित्यं नामापायाभावेन तदन्यगुणवृद्धिसंभवा-दप्रतिपात्येव तपःकर्म तपोऽनुष्ठानं सर्वबुद्धैः सर्वतीर्थकरैर्वर्णितं देशितम्। किंविशिष्टमि-त्याह । यावल्लज्जासमावृत्तिः । लज्जा संयमस्तेन समा सदृशी तुल्या संयमाविरोधिनी-त्यर्थः । वर्तनं वृत्तिर्देहपालना एकभक्तं च भोजनम् । एकं भक्तं द्रव्यतो भावतश्च एक-स्मिन् भोजने तत्तथा। द्रव्यत एकमेकसंख्यानुगतं, भावत एकं कर्मबन्धाभावादद्विती-यम्। तद्दिवस एव रागादिरहितस्यान्यथा भावत एकत्वाभावादिति सूत्रार्थः ॥ २३ ॥

संति मे सुहुमा पाणा, तसा अदुव थावरा ॥
जाइं राउ अपासंतो, कहमेसणिअं चरे ॥ २४ ॥

( अवचूरिः ) रात्रिभोजने प्राणातिपातसंभवेन कर्मबन्धं द्वितीयं दर्शयति । सं-त्येते प्रत्यक्षोपलभ्यमानस्वरूपाः सूक्ष्माः प्राणिनस्त्रसा अथवा स्थावराः पृथिव्या-दयः । यान् प्राणिनो रात्रावपश्यन् कथमेषणीयं चरिष्यते सत्त्वानुपरोधेन भोक्ष्यते असंभव एवैषणीयस्य ॥ २४ ॥

( अर्थ. ) हवे रात्रिभोजनमां प्राणियोनो अतिपात छे तेथी कर्मबंध साथे स-द्वितीयता बतावे छे. (इमे के०) आ प्रत्यक्ष उपलभ्यमानस्वरूप एवा (तसा के०) त्रसाः एटले त्रस जीवो (अदुव के०) अथवा ( थावरा के० ) स्थावराः एटले स्थावरो तथा (सुहुमा के०) सूक्ष्माः एटले सूक्ष्म (पाणा के०) प्राणाः एटले प्राणीयो (संति के०) छे, ( जाइं के० ) यान् एटले जे प्राणियोने (राउ के०) रात्रौ एटले रात्रिने विषे, ( अपा-संतो के० ) अपश्यंतः एटले न जोता एवा साधुउ ( कहं के० ) कथं एटले केम (एसणिअं के०) एषणीयं एटले एषणीयने ( चरे के० ) चरेत् एटले भोगवशे ॥ २४ ॥

( दीपिका. ) अथ रात्रिभोजने प्राणानामतिपातसंभवेन कर्मबन्धेन सह सद्वि-तीयतां दर्शयति। इमे एते प्रत्यक्षमुपलभ्यमानस्वरूपाः प्राणिनः सन्ति जीवा वर्तन्ते। किं-विशिष्टाः प्राणिनः। सूक्ष्माः श्लक्ष्णाः। के ते। त्रसा द्वीन्द्रियादयः। अथवा स्थावराः पृ-थिव्यादयः । यान् प्राणिनो रात्रौ चक्षुषा अपश्यन् साधुः कथमेषणीयं चरिष्यति भोक्ष्यते । असंभव एषणीयस्य रात्रौ। कथम्। सत्वानां घातात् ॥ २४ ॥

( टीका. ) रात्रिभोजने प्राणातिपातसंभवेन कर्मबन्धसद्वितीयतां दर्शयति । संति मे त्ति सूत्रम्। सन्त्येते प्रत्यक्षोपलभ्यमानस्वरूपाः सूक्ष्माः प्राणिनो जीवा-

त्रसा द्वीन्द्रियादयः अथवा स्थावराः पृथिव्यादयः । यान् प्राणिनो रात्रावपश्यन् चक्षुषा कथमेषणीयं सत्त्वानुपरोधेन चरिष्यति नोद्यते च । असंजव एव रात्रावेषणीयचरणस्येति सूत्रार्थः ॥ २४ ॥

उदउल्लं बीअसंसत्तं, पाणा निवडिया महिं ॥
दिआ ताइं विवज्जिज्जा, राउ तब कहं चरे ॥ २५ ॥

---

( अवचूरिः ) रात्रिनोजनदोषमनिधाय ग्रहणगतमाह । उदकार्द्रमेकग्रहणे तज्जातीयानां ग्रहणात् सस्निग्धादिग्रहः । बीजसंसक्तमोदनादि । अथवा बीजानि पृथग्मूलान्येव । संसक्तं चारनालाद्यपरेणेति । प्राणिनः संपातिमादयो निपतिता मह्यां नवन्ति । दिवा तान्युदकार्द्राणि विवर्जयेत् । रात्रौ तत्र कथं चरेत् ॥ २५ ॥

---

( अर्थ. ) हवे रात्रिनोजनना दोष ग्रहण करवाने माटे सूत्र कहे बे. ( उदउल्लं के० ) पाणीए करी नीना एवा अने ( बीअसंसत्तं के० ) बीजसंसक्तं एटले बीजे करी संसक्त एटले जेमां बीज पड्या होय एवो आहार होय तथा ( महिं के० ) मह्यां एटले पृथ्वीपर ( पाणा के० ) प्राणाः एटले प्राणियो ( निवडिया के० ) निपतिताः एटले पड्या होय, ( दिआ के० ) दिवा एटले दिवसे ( ताइं के० ) तान् एटले ते जीवोने ( विवज्जिआ के० ) विवर्जयेत् एटले वर्जे, पण ( राउ के० ) रात्रिए ( तब के० ) तत्र एटले ते ठेकाणे ( कहं चरे के० ) कथं चरेत् एटले केम संयम रक्षण पूर्वक चाले ॥ २५ ॥

---

( दीपिका. ) एवं रात्रिनोजने दोषं कथयित्वा ग्रहणगतं दोषमाह । एतानि उदकार्द्रादीनि दिवा पापजीरुश्चक्षुषा पश्यन् विवर्जयेत् । परं रात्रौ तु तत्र कथं चरति संयमस्य अनुपरोधेन । असंनव एव शुद्धचरणस्य । कानि तानि उदकार्द्रादीनीत्याह । उदकार्द्रं पूर्ववत् । एकग्रहणेन तज्जातीयानां सस्निग्धादीनां ग्रहणं । तथा बीजसंसक्तं बीजेन संसक्तं मिश्रं तदोदनादिकमिति शेषः । अथवा बीजानि पृथक्नूतान्येव । संसक्तं चरनालाद्यपरेण मिश्रम् । तथा प्राणिनः संपातिमप्रनृतयो मह्यां पृथिव्यां निपतिताः संनवन्ति । तत उदकार्द्रादीनि रात्रौ अनवलोकनेन वर्जयितुमशक्यत्वेन विशेषतः साधोश्चरणानावः ॥ २५ ॥

---

( टीका. ) एवं रात्रौ नोजने दोषमनिधायाधुना ग्रहणगतमाह । उदउल्लं ति सूत्रम् । उदकार्द्रं पूर्ववदेकग्रहणे तज्जातीयग्रहणात्सस्निग्धादिपरिग्रहः । तथा बीजसंसक्तं बीजैर्मिश्रमोदनादीति गम्यते । अथवा बीजानि पृथग्नूतान्येव । संसक्तं

चारनालाद्यपरेणेति तथा । प्राणिनः संपातिमप्रभृतयो निपतिता मह्यां पृथिव्यां संभवन्ति । ननु दिवाप्येतत्संभवत्येव । सत्यम् । किंतु परलोकभीरुश्चक्षुषा पश्यन् दिवा तान्युदकार्द्रादीनि विवर्जयेत् । रात्रौ तु तत्र कथं चरति संयमानुपरोधेनासंभव एव शुद्धचरणस्येति सूत्रार्थः ॥ २५ ॥

एअं च दोसं दट्ठूणं, नायपुत्तेण भासिअं ॥
सवाहारं न भुंजंति, निग्गंथा राइभोअणं ॥ २६ ॥

---

( अवचूरिः ) उपसंहरन्नाह । एतं चानंतरोदितं प्राणिहिंसादिरूपं वान्यमात्मनिधनादिलक्षणं दोषं दृष्ट्वा मतिचक्षुषा ज्ञातपुत्रेण भाषितम् । सर्वाहारं चतुर्विधमप्यशनादिलक्षणं न भुञ्जते निर्ग्रन्था रात्रिभोजनम् ॥ २६ ॥

---

( अर्थ. ) हवे आ अधिकारने पूर्ण करता थका कहे छे. (निग्गंथा के०) निर्ग्रंथाः एटले निर्ग्रंथ एवा साधुओ, ( नायपुत्तेण के० ) ज्ञातपुत्रेण एटले महावीरस्वामीए (भासिअं के०) भाषितं एटले कह्यो एवो (एअं के०) एतं एटले आ पूर्वोक्त प्राणिहिंसारूप ( दोसं के० ) दोषं एटले दोषने ( च के० ) बीजा आत्मविराधनादि लक्षण एवा दोषने पण चक्षुए करी (दट्ठूणं के०) दृष्ट्वा एटले जोइने (सवाहारं के०) सर्वाहारं एटले चतुर्विध अशनादिकने आश्रीने ( राइभोअणं के० ) रात्रिभोजनं एटले रात्रिभोजनने (न भुंजंति के०) न भुञ्जते एटले करता नथी. ए छठुं व्रत कह्युं. ॥ २६ ॥

---

( दीपिका. ) अथैनमधिकारं पूर्णं कुर्वन्नाह । निर्ग्रन्थाः साधवः सर्वाहारं चतुर्विधमप्यशनादिकमाश्रित्य रात्रिभोजनं न भुञ्जते । किं कृत्वा । एतं पूर्वोक्तं प्राणिहिंसारूपं । चशब्दादन्यमात्मविराधनादिलक्षणं दोषं चक्षुषा दृष्ट्वा । किंभूतं दोषम् । ज्ञातपुत्रेण श्रीमहावीरदेवेन भगवता भाषितं कथितम् ॥ २६ ॥

---

( टीका. ) उपसंहरति । एअं चत्ति सूत्रम् । एतं चानन्तरोदितं प्राणिहिंसारूपमन्यं चात्मविराधनादिलक्षणं दोषं दृष्ट्वा मतिचक्षुषा ज्ञातपुत्रेण भगवता भाषितमुक्तं सर्वाहारं चतुर्विधमप्यशनादिलक्षणमाश्रित्य न भुञ्जते निर्ग्रन्थाः साधवो रात्रिभोजनमिति सूत्रार्थः ॥ २६ ॥

पुढविकायं न हिंसंति, मणसा वयसा कायसा ॥
तिविहेणं करणजोएणं, संजया सुसमाहिआ ॥ २७ ॥

---

( अवचूरिः ) उक्तं व्रतषट्कमिदानीं कायषट्कमाह । पृथ्वीकायं न हिंसन्त्यालेख-

नादिना । मनसा वाचा कायेन । त्रिविधेन करणयोगेन मनःप्रभृतिकरणादिरूपेण संयताः सुसमाहिता उपयुक्ताः ॥ २७ ॥

( अर्थ. ) हवे बक्काय कहे बे. ( सुसमाहिआ के० ) सुसमाहिताः एटले सुसमाधिवंत एवा ( संयता के० ) संयताः एटले साधुर्ज ( पुढविकायं के० ) पृथ्वीकायं एटले पृथ्वीकायने ( मणसा के० ) मनसा एटले मने करी ( वयसा के० ) वाचा एटले वचने करी अने ( कायसा के० ) कायेन एटले कायाए करी ( तिविहेण के० ) त्रिविधेन एटले त्रण प्रकारना ( करणजोएणं के० ) करणयोगेन एटले करण करावण अनुमोदन वडे करीने ( न हिंसंति के० ) हणता नथी. ॥ २७ ॥

( दीपिका. ) एवं व्रतषट्कं कथितम् । अथ कायषट्कं कथ्यते । तत्र पूर्वं पृथिवीकायमाश्रित्याह । संयताः साधवः पृथिवीकायं न हिंसन्ति आलेखनादिप्रकारेण । केन । मनसा वाचा कायेन । उपलक्षणमेतदित्याह । त्रिविधेन करणयोगेन मनःप्रभृतिभिः करणकारणानुमोदनारूपेण । किंभूताः संयताः । सुसमाहिता उद्युक्ताः ॥ २७ ॥

( टीका. ) उक्तं व्रतषट्कमधुना कायषट्कमुच्यते । तत्र पृथिवीकायमधिकृत्याह । पुढवि त्ति सूत्रम् । पृथ्वीकायं न हिंसन्त्यालेखनादिना प्रकारेण मनसा वाचा कायेन । उपलक्षणमेतदत एवाह । त्रिविधेन करणयोगेन मनःप्रभृतिभिः । करणादिरूपेण । के न हिंसन्तीत्याह । संयताः साधवः सुसमाहिता उद्युक्ता इति सूत्रार्थः ॥ २७ ॥

पुढविकायं विहिंसंतो, हिंसई उ तयस्सिए ॥
तसे अ विविहे पाणे, चक्खुसे अ अचक्खुसे ॥२८॥

( अवचूरिः ) अत्रैव हिंसादोषमाह । पृथ्वीकायं हिंसन् हिनस्त्येव । तुरेवार्थे । तदाश्रितान् पृथ्व्याद्याश्रितान् त्रसान् विविधान् प्राणिनो द्वीन्द्रियादीन् वा स्थावरांश्च चाक्षुषान् चक्षुरिन्द्रियग्राह्यान् अग्राह्यांश्च ॥ २८ ॥

( अर्थ. ) ( पुढविकायं के० ) पृथ्वीकायं एटले पृथ्वीकायने ( विहिंसंतो के० ) विहिंसन् एटले विशेषे करी हणतो थको ( तयस्सिए के० ) तदाश्रितान् एटले ते पृथ्वीकायने आश्रयी रहेला एवा (तसे के०) त्रसान् एटले त्रस प्राणीर्जने (य के०) च एटले वली ( विविहे पाणे के० ) विविधान् प्राणान् एटले अनेक प्राणीर्जने तथा ( चक्खुसे के० ) चाक्षुषान् एटले चक्षुए देखाय एवा जीवने तथा ( अचक्खुसे के० ) अचाक्षुषान् एटले चक्षुथी नहि देखाय एवा जीवोने एटले सूक्ष्म अने बादर एवा जीवोने ( हिंसइ के० ) हिनस्ति एटले हणे बे. ॥ २८ ॥

( दीपिका ) अत्रैव हिंसादोषमाह । साधुः पृथिवीकायमालेखनादिना प्रकारेण हिंसन् तु निश्चयेन हिनस्त्येव। कानित्याह । प्राणान्द्वीन्द्रियादीन् । किंविधान् । अनेकप्रकारान्। त्रसान् चशब्दात् स्थावरान् अप्कायादीन् । किंभूतान् प्राणान् । तदाश्रितान् पृथिवीसमाश्रितान्। पुनः किंभूतान् प्राणान् । चाक्षुषान् चक्षुर्ग्राह्यान् कांश्चित् । पुनः किंभूतान् प्राणान् । अचाक्षुषान् चक्षुरिंद्रियेण अग्राह्यान् ॥ २८ ॥

( टीका. ) अत्रैव हिंसादोषमाह । पुढवि त्ति सूत्रम् । पृथिवीकायं हिंसन्नालेखनादिना प्रकारेण हिनस्त्येव । तुरवधारणार्थे । व्यापादयत्येव तदाश्रितान् पृथिवीश्रितान् त्रसांश्च विविधान् प्राणिनो द्वीन्द्रियादीन् । चशब्दात्स्थावरांश्चाप्कायादीन् चाक्षषांश्चाचाक्षुषांश्च चक्षुरिन्द्रियग्राह्यानग्राह्यांश्चेति सूत्रार्थः ॥ २८ ॥

तम्हा एअं विआणित्ता, दोसं डुग्गइवट्ठणं ॥
पुढविकायसमारंभं, जावजीवाइ वज्जए ॥ २९ ॥

( अवचूरिः ) तस्मादेतं विज्ञाय दोषं तत्तदाश्रितजीवहिंसादिलक्षणं डुर्गतिवर्धनं पृथ्वीकायसमारंभं यावज्जीवमेव वर्जयेत् ॥ २९ ॥

( अर्थ. ) एम छे, त्यारें साधुए शुं करवुं ते कहे छे. ( तम्हा के० ) तस्मात् एटले ते कारण माटे ( एअं के० ) एतं एटले आ ( दोसं के० ) दोषं एटले पूर्वोक्त दोषने ( विआणित्ता के० ) विज्ञाय एटले जाणीने ( डुग्गइवट्ठणं के० ) डुर्गतिवर्द्धनं एटले डुर्गतिने वधारनार एवा ( पुढविकायसमारंभं के० ) पृथिवीकायसमारम्भं एटले पृथ्वीकायना समारंभने ( जावजीवाइ के० ) यावज्जीवं एटले यावज्जीव पर्यंत ( वज्जए के० ) वर्जयेत् एटले त्याग करे. ॥ २९ ॥

( दीपिका. ) यस्मादेवं ततः किं साधुना कर्तव्यमित्याह । यस्मादेवं तस्मात्पृथिवीकायसमारंभमालेखनादिना यावज्जीवं साधुर्वर्जयेत् । किं कृत्वा । एतं पूर्वोक्तं दोषं विज्ञाय पृथिव्याश्रितजीवहिंसालक्षणं दूषणं ज्ञात्वा । किंभूतं दोषम्। डुर्गतिवर्द्धनं संसारवर्द्धनम् ॥ २९ ॥

( टीका. ) यस्मादेवं तम्ह त्ति सूत्रम् । तस्मादेतं विज्ञाय दोषं तत्तदाश्रितजीवहिंसालक्षणं डुर्गतिवर्धनं संसारवर्धनं पृथिवीकायसमारंभमालेखनादि यावज्जीवं यावज्जीवमेव वर्जयेदिति सूत्रार्थः ॥ २९ ॥

आउकायं न हिंसंति, मणसा वयसा कायसा ॥
तिविहेण करणजोएण, संजया सुसमाहिआ ॥ ३० ॥
आउकायं विहिंसंतो, हिंसई उ तयस्सिए ॥
तसे अ विविहे पाणे, चक्खुसे अ अचक्खुसे ॥ ३१ ॥
तम्हा एअं विआणित्ता, दोसं डुग्गइवढ्ढणं ॥
आउकायसमारंभं जावजीवाइ वज्जए ॥ ३२ ॥

---

( अवचूरिः ) उक्तः सप्तमस्थानविधिः । अथाष्टममाह । स्पष्टम् ॥ ३० ॥ ३१ ॥ ३२ ॥

---

( अर्थ. ) हवे अष्टम स्थानविधि कहे छे. आ त्रीशमी, एकत्रीशमी अने बत्रीशमी गाथानो अर्थ अनुक्रमे सत्तावीसमी, अठावीसमी, उंगणत्रीसमी गाथाना अर्थ समान करवो. मात्र फेर एटलो छे के, जे ठेकाणे त्रणे गाथामां पुढवीकाय एवुं पद छे, ते ठेकाणे आ त्रणे गाथामां अप्काय एवुं पद छे, तेनो अर्थ अप्काय जीव एवो करवो. ॥ ३० ॥ ३१ ॥ ३२ ॥

---

( दीपिका. ) सप्तमस्थानविधिरुक्तः । अथाष्टमस्थानविधिः कथ्यते । इदं गाथात्रयं पृथिवीकायगाथात्रयं यथा पूर्वं व्याख्यातं तथा व्याख्येयम् । नवरं तत्र पृथिवीनाम्ना अत्राप्कायनाम्ना ॥ ३० ॥ ३१ ॥ ३२ ॥

---

( टीका. ) उक्तः सप्तमस्थानविधिः । अधुनाष्टमस्थानविधिमधिकृत्योच्यते । आउकायं ति सूत्रम् । सूत्रत्रयमप्कायाभिलापेन नेयम् । ततश्चायमप्युक्त एव ॥३०॥३१॥३२॥

जायतेअं न इछंति, पावगं जलिइत्तए ॥
तिक्खमन्नयरं सत्थं, सवउ वि डुरासयं ॥ ३३ ॥

---

( अवचूरिः ) नवमस्थानमाह । जाततेजसमग्निं नेछन्ति मनःप्रभृतिभिरपि पापमेव पापकं प्रभूतसत्त्वापकारित्वेनाशुभम् । किं नेछन्तीत्याह । ज्वलयितुं वृद्धिं नेतुं तीक्ष्णं छेदकरणात्मकमन्यतरत्सर्वतोधारं शस्त्रं सर्वतोऽपि डुराश्रयं सर्वतोधारत्वेनानाश्रयणीयम् ॥ ३३ ॥

---

( अर्थ. ) हवे नवमस्थान कहे छे. वली साधुउ (पावगं के०) पापकं एटले पापरूप (तिक्खं के०) तीक्ष्णं एटले तीक्ष्ण (अन्नयरं के०) अन्यतरत् एटले सर्वतो धारावाला (सत्थं के०) शस्त्र समान अने (सवउ के०) सर्वतः एटले सर्वस्थले (डुरासयं के०)

कोइथी पासे न जवाय एवा ( जायतेअं के० ) जाततेजसं एटले अग्निने ( जलइत्तए के० ) ज्वलयितुं एटले ज्वलन करवाने ( न इछंति के० ) इछता नथी ॥ ३३ ॥

( दीपिका. ) सांप्रतं नवमस्थानविधिं कथयति। साधवः जाततेजसमग्निकायं मनःप्रभृतिभिरपि ज्वलयितुमुत्पादयितुं वृद्धिं प्रापयितुं न इछन्ति। किंभूतं जाततेजसम्। पापकं पाप एव पापकस्तम्। कथम्। प्रभूतजीवसंहारकारकत्वात्। पुनः किंभूतम्। जाततेजसम् तीक्ष्णं छेदकरणस्वरूपमन्यतरं शस्त्रमेकधारादिशस्त्ररूपं न। किंतु सर्वतोधारशस्त्रम् अत एव सर्वतोऽपि डुराश्रयं सर्वतोधारत्वेनानाश्रयणीयमित्यर्थः ॥ ३३ ॥

( टीका. ) सांप्रतं नवमस्थानविधिमाह । जायतेअं ति सूत्रम् । जाततेजा अग्निः तं जाततेजसं नेछन्ति । मनःप्रभृतिभिरपि पापकं पाप एव पापकस्तं प्रभूतसत्त्वापकारित्वेनाशुभमित्यर्थः । किं नेछन्तीत्याह । ज्वलयितुमुत्पादयितुं वृद्धिं वा नेतुम् । किंविशिष्टमित्याह । तीक्ष्णं छेदकरणात्मकमन्यतरत् शस्त्रं सर्वशस्त्रम् । एकधारादिशस्त्रव्यवछेदेन सर्वतोधारशस्त्रकल्पमिति भावः ।अत एव सर्वतोऽपि डुराश्रयं सर्वतोधारत्वेनानाश्रयणीयमिति सूत्रार्थः ॥ ३३ ॥

पाईणं पडिणं वा वि, उड्ढं अणुदिसामवि ॥
अहे दाहिणउ वा वि, दहे उत्तरउ वि अ ॥ ३४ ॥

( अवचूरिः ) प्राच्यां प्रतीच्यां वापि ऊर्ध्वमनुदिक्ष्वपि। सप्तम्यर्थे षष्ठी । अधो दक्षिणतश्चापि दहति भस्मीकरोति उत्तरतोऽपि च ॥ ३४ ॥

( अर्थ. ) एज वली स्पष्ट करता थका कहे छे. ते अग्नि ( पाईणं के० ) प्राच्यां एटले पूर्वदिशामां तथा (पडिणं के०)प्रतीच्यां एटले पश्चिम दिशामां (उड्ढं के०)ऊर्ध्वम् एटले ऊर्ध्व दिशामां अने (अणुदिसामवि के०) अनुदिक्ष्वपि एटले विदिशिमां (अहे के०) अधः एटले अधोदिशिमां तथा ( दाहिणउ वा वि के० ) दक्षिणतो वापि एटले दक्षिण दिशामां पण (उत्तरउ वि अ के०)उत्तरतोऽपि च एटले उत्तर दिशामां पण दाह्य वस्तुने ( दहे के० ) दहति एटले बाले छे. ॥ ३४ ॥

( दीपिका. ) एतदेव स्पष्टं कुर्वन्नाह । अग्निरिति शेषः । प्राच्यां पूर्वस्यां दिशि, तथा प्रतीच्यां पश्चिमायां दिशि, उर्ध्वं, अणुदिसामवि । सप्तम्यर्थे षष्ठी । अध इति अधोदिशि, पुनर्दक्षिणतश्चापि, दाह्यं वस्तु दहति भस्मसात् करोति । सर्वासु दिक्षु विदिक्षु च जीवसंहारं करोतीत्यर्थः ॥ ३४ ॥

( टीका. ) एतदेव स्पष्टयन्नाह । पाईणं ति सूत्रम् । प्राच्यां प्रतीच्यां वापि पू-

र्वायां पश्चिमायां चेत्यर्थः । ऊर्ध्वमनुदिक्ष्वपि । सुपां सुपो जवन्तीति सप्तम्यर्थे षष्ठी । विदिक्ष्वपीत्यर्थः । अधो दक्षिणतश्चापि दहति दाह्यं जस्मीकरोत्युत्तरतोऽपि च । सर्वासु दिक्षु विदिक्षु च दहतीति सूत्रार्थः ॥ ३४ ॥

जूआणमेसमाघाउ, हव्ववाहो न संसउ ॥
तं पईवपयावठ्ठा, संजया किंचि नारजे ॥ ३५ ॥

( अवचूरिः ) जूतानामेष आघातहेतुत्वात् आघातः । हव्यवाडग्निर्न संशयः । तं हव्यवाहं प्रदीपप्रतापनार्थमालोकशीतापनोदार्थं किंचित्संघट्टनादिना नारजते ॥ ३५ ॥

( अर्थ. ) ए कारण माटे ( जूआणं के० ) जूतानां एटले जूतप्राणिमात्रने ( एस के० ) एषः एटले आ ( हव्ववाहो के० ) हव्यवाट् एटले अग्नि ( आघाउ के० ) आघातः एटले आघातनो करनारो छे. तेमां ( न संसउ के० ) न संशयः एटले संशय नथी. ते कारण माटे ( तं के० ) ते अग्निने ( पईव के० ) प्रदीप एटले प्रदीपने अर्थे दीवाने अर्थे तथा (पयावठ्ठा के०) प्रतापार्थं एटले तापने अर्थे ( संजया के० ) संयताः एटले साधुउ ( किंचि के० ) किंचित् एटले कांइक पण (नारजे के०) नारजन्ते आरंज करता नथी. ॥ ३५ ॥

( दीपिका. ) यत एवं ततः किं कर्तव्यमित्याह । जूतानां स्थावरत्रसानामेष हव्यवाहो वन्हिः आघातो न संशयः। एवमेव तदाघात एवेति जावः। ततः कारणात् संयताः तं वह्निं प्रदीपार्थं प्रकाशकरणाय प्रतापनार्थं च शीतनाशाय किंचित् संघट्टनादिनापि न आरजन्ते साधुधर्मनाशनजीत्या ॥ ३५ ॥

( टीका. ) यतश्चैवमतो जूआण त्ति सूत्रम् । जूतानां स्थावरादीनामेष आघात आघातहेतुत्वादाघातः । हव्यवाहोऽग्निर्न संशय इत्येवमेवैतदाघात एवेति जावः । येनैवं तेन तं हव्यवाहं प्रदीपप्रतापनार्थमालोकशीतापनोदार्थं संयताः साधवः । किंचित्संघट्टनादिनापि नारजन्ते । संयतत्वापगमनप्रसङ्गादिति सूत्रार्थः ॥ ३५ ॥

तम्हा एअं विआणित्ता, दोसं डुग्गइवट्ठणं ॥
तेउकायसमारंजं, जावजीवाइ वज्जए ॥ ३६ ॥

( अवचूरिः ) तम्हा इति । सुगमम् ॥ ३६ ॥

( अर्थ. ) ( तम्हा के० ) तस्मात् एटले ते कारण माटे, साधुउ ( डुग्गइ वट्ठणं के० ) डुर्गतिवर्धनं एटले डुर्गतिने वधारनार एवा ( एअं के० ) एतं एटले आ (दोसं) दोषं एटले दोषने ( विआणित्ता के० ) विज्ञाय एटले जाणीने ( तेउकायं के० )

तेजस्कायं एटले अग्निकायना ( समारंभं के० ) समारंभने ( जावज्जीवाइ के० ) यावज्जीवमेव एटले जावजीव पर्यंत ( वज्जए के० ) वर्जयेत् एटले त्याग करे. ॥ ३६ ॥

( दीपिका. ) यस्मादेवं ततः किं कर्तव्यमित्याह । पूर्ववत् उक्तिलापनिका अर्थश्च कार्यः । नवरमग्निकायनाम ग्राह्यम् ॥ ३६ ॥

( टीका. ) यस्मादेवं तम्ह त्ति सूत्रम् । व्याख्या पूर्ववत् ॥ ३६ ॥

अणिलस्स समारंभं, बुद्धा मन्नंति तारिसं ॥
सावज्जबहुलं चेअं; नेअं ताइहिं सेविअं ॥ ३७ ॥

( अवचूरिः ) उक्तं नवमस्थानमधुना दशमस्थानमाह । अनिलस्य समारम्भं तालवृन्तादिभिः करणं बुद्धा मन्यन्ते तादृशमग्निसमारंभसदृशं सावद्यबहुलं पापभूयिष्ठं चैवमिति कृत्वा नैनं त्रातृभिः सुसाधुभिः सेवितम् ॥ ३७ ॥

( अर्थ. ) हवे दशम स्थानविधि कहे बे. ( बुद्धा के० ) बुद्धाः एटले तीर्थंकरो ( एवं के० ) आ प्रकारे ( सावज्जबहुलं के० ) सावद्यबहुलं एटले सावद्ये करी बहुल एवा ( अनिलस्स के० ) अनिलस्य एटले वायुकायना ( समारंभं के० ) समारंभने ( तारिसं के० ) तादृशं एटले पूर्वोक्त जेवो अग्निकायनो संमारंभ कह्यो बे तेवा ने ( मन्नंति के० ) मन्यन्ते एटले माने बे. ते माटे ( ताइहिं के० ) त्रातृभिः एटले षट्कायरक्षक साधुउए ( न सेविअं के० ) न सेवितं एटले सेवन करेलो नथी. अर्थात् साधुयें ते सेवन करवो नहि. ॥ ३७ ॥

( दीपिका. ) इति नवमस्थानविधिः कथितः । अथ दशमस्थान विधिः कथ्यते। बुद्धास्तीर्थंकरा अनिलस्य वायुकायस्य समारंभं व्यजनादिभिः करणं तादृशमग्निकायसमारंभसदृशं मन्यन्ते जानन्ति । तथा एवं वायुकायसमारंभं सावद्यबहुलं पापभूयिष्ठमिति कृत्वा सर्वकालमेव न एनं तादृग्भिर्जीवरक्षाकारकैः साधुभिः सेवितमाचरितमिति मन्यन्ते बुद्धा एव ॥ ३७ ॥

( टीका. ) उक्तो नवमस्थानविधिः । सांप्रतं दशमस्थानविधिमधिकृत्याह । अणिलस्स त्ति । अनिलस्य वायोः समारम्भं तालवृन्तादिभिः करणं बुद्धास्तीर्थकरा मन्यन्ते जानन्ति । तादृशं जाततेजःसमारम्भसदृशं सावद्यबहुलं पापभूयिष्ठं चैतमिति कृत्वा सर्वकालमेव नैनं त्रातृभिः सुसाधुभिः सेवितमाचरितं मन्यन्ते बुद्धा एवेति सूत्रार्थः ॥ ३७ ॥

तालिअंटेन पत्तेण, साहाविहुअणेण वा ॥
न ते वीइउमिछंति, वेआवेऊण वा परं ॥ ३७ ॥

( अवचूरिः ) तालवृंतेन पत्रेण शाखाविधूननेन वा न ते वीजितुमिछंति आत्मानमात्मना । नापि वीजापयितुं वा परम् ॥ ३७ ॥

( अर्थ. ) हवे वली ते पूर्वोक्त वात स्पष्ट करता बता कहे बे. ( ते के० ) ते उत्तम साधुउ ( तालिअंटेण के० ) तालवृंतेन एटले तालना विंजणायें करी ( पत्तेण के० ) पत्रेण एटले पांदडायें करी (वा के०) वली (साहाविहुअणेण के०) शाखाविधूननेन एटले वृक्षनी शाखाना हलाववे करी ( वीइउं के० ) वीजितुं एटले वींजवाने अर्थात् पवन नाखवाने (न इछंति के० ) इबता नथी. तेम (वा के०) वली (परं के०) परने एटले बीजापासे वायु नखावे नहीं, अने नाखताने अनुमोदे नहि. ॥ ३७ ॥

( दीपिका. ) एतदेव स्पष्टीकुर्वन्नाह । ते साधवः तालवृन्तेन १ पत्रेण २ शाखाविधूननेन वा ३ कृत्वा आत्मनात्मानं वीजितुं नेबन्ति । नापि तालवृन्तादिनिः परैः आत्मानं वीजयंति । नापि वीजयन्तं परमनुमन्यन्ते । तालवृन्तादीनां स्वरूपं यथा षट्जीवनिकायां व्याख्यातं तथा ज्ञेयम् ॥ ३७ ॥

( टीका.) एतदेव स्पष्टयति । तालियंटेण त्ति सूत्रम् । तालवृन्तेन पत्रेण शाखाविधूननेन वेत्यमीषां स्वरूपं यथा षड्जीवनिकायिकायाम्। न ते साधवो वीजितुमिबन्त्यात्मानमात्मना । नापि वीजयन्ति परैरात्मानं तालवृन्तादिनिरेव । नापि वीजयन्तं परमनुमन्यन्त इति सूत्रार्थः ॥ ३७ ॥

जं पि वत्थं व पायं वा, कंबलं पायपुंछणं ॥
न ते वायमुईरंति, जयं परिहरंति अ ॥ ३९ ॥

( अवचूरिः ) यदपि वस्त्रं वा पात्रं वा कंबलं वा पादपुंछनममीषां पूर्वोक्तधर्मोपकरणं तेनापि न वातमुदीरयन्ति अयतप्रत्युपेक्षणादिक्रियया । किंतु तं परिहरन्ति परिनोगपरिहारेण धारणपरिहारेण वा ॥ ३९ ॥

( अर्थ. ) हवे साधुने पोताना उपकरणोए करी वायुनी विराधना थाय तेनो परिहार करता थका कहे बे. ( जं पि के० ) यदपि एटले जे पण ( वत्थं के० ) वस्त्रं एटले वस्त्र ( च के० ) वली ( पायं के० ) पात्रं एटले पात्र, वली ( कंबलं के० ) कंबलं एटले कांबलो ( पायपुंछणं के० ) पादपुंछनं एटले पायपुंछण. ( ते के० ) ते पूर्वोक्त साधुउ आ उपकरणोए करी ( वायं के० ) वातं एटले वायुने

मित्यर्थः। येनार्थेन ज्ञानादिना करणभूतेन गच्छति सुगतिं पारंपर्येण सिद्धिमित्यर्थः। उपदेशाधिकार उक्तव्यतिकरसाधनोपायमाह। बहुश्रुतमागमवृद्धं पर्युपासीत सेवेत। सेवमानश्च पृच्छेदर्थविनिश्चयमपायरक्षकं कल्याणावहं वार्थावितथभावमिति सूत्रार्थः॥ ४४॥

हत्थं पायं च कायं च, पणिहाय जिइंदिए॥
अल्लीणगुत्तो निसिए, सगासे गुरुणो मुणी॥ ४५॥

---

(अवचूरिः) हस्तं पादं च कायं च प्रणिधाय संयम्य। जितेन्द्रियो निभृतो भूत्वा आलीनगुप्तो निषीदेदीषल्लीन उपयुक्त इत्यर्थः। गुरूणां सकाशे मुनिः॥ ४५॥

---

(अर्थ.) आचार्य प्रमुखनी सेवा करे त्यारे केवी रीते रहे ते कहे छे. हत्थं इत्यादि सूत्र. (जिइंदिए के०) जितेंद्रियः एटले जेणे पोतानी इंद्रियो वशमां राखी छे एवा (मुणी के०) मुनिः एटले साधु जे ते (हत्थं के०) हस्तं एटले पोताना हाथने (च के०) पुनः (पायं के०) पादं एटले पगने (च के०) वली (कायं के०) कायं एटले शरीरने (पणिहाय के०) प्रणिधाय एटले विनय सचवाय एवी रीते संकोची राखीने (अल्लीणगुत्तो के०) आलीनगुप्तः एटले उपयोग राखता छता (गुरुणो के०) गुरोः एटले गुरुनी (सगासे के०) सकाशे एटले समीप भागने विषे (निसिए के०) निषीदेत् एटले बेसे.॥ ४५॥

---

(दीपिका.) पुनः किंच। मुनिः गुरोः सकाशे समीपे निषीदेत्। कीदृशः सन्। आलीनगुप्त ईषल्लीन उपयुक्त इत्यर्थः। किं कृत्वा निषीदेत्। हस्तं च पादं च कायं च प्रणिधाय संयम्य। पुनः किं कृत्वा। जितेन्द्रियो निभृतो भूत्वा॥ ४५॥

---

(टीका.) पर्युपासीनश्च हत्थं ति सूत्रम्। हस्तं पादं च कायं च प्रणिधायेति संयम्य जितेन्द्रियो निभृतो भूत्वा आलीनगुप्तो निषीदेत्। ईषल्लीन उपयुक्त इत्यर्थः। सकाशे गुरोर्मुनिरिति सूत्रार्थः॥ ४५॥

न पक्खओ न पुरओ, नेव किच्चाण पिठ्ठओ॥
न य ऊरुं समासिज्ज, चिठ्ठिज्जा गुरुणंतिए॥ ४६॥

---

(अवचूरिः) किंच न पक्षतः पार्श्वतो न पुरतो नैव कृत्यानामाचार्याणां पृष्ठतो निषीदेदिति वर्त्तते। अविनयवन्दमानान्तरायादर्शनादिदोषात्। न च ऊरुं समाश्रित्य ऊरोरुपर्यूरुं कृत्वा तिष्ठेद्गुर्वन्तिके। अविनयादिदोषप्रसंगात्॥ ४६॥

---

(अर्थ.) वली न पक्खओ इत्यादि सूत्र. साधु जे ते (किच्चाण के०) कृत्यानां ए-

टले आचार्य जे तेमना ( पक्खउ के० ) पक्षतः एटले पार्श्वभागने विषे ( न निसिए के० ) न निषीदेत् एटले बेसे नहि. कारण के, तेथी अविनय प्रमुख थाय छे. तथा ( पुरउ के० ) पुरतः एटले अग्रभागने विषे ( न निसिए के० ) न निषीदेत् एटले बेसे नहि. कारण के, तेथी वंदना करनार लोकोने अंतराय थवानो संभव रहे छे. तेमज ( पिठ्ठउ के० ) पृष्ठतः एटले आचार्य प्रमुखना पृष्ठ भागने विषे ( नेव निसिए के० ) नैव निषीदेत् एटले नहिज बेसे. कारण के, तेथी आचार्यनी दृष्टि आपणा उपर न रहे. तेमज साधु जे ते ( गुरुणंतिए के० ) गुरोरन्तिके एटले गुरुना समीप भागने विषे ( ऊरुं समासिज्जा के० ) ऊरुं समाश्रित्य एटले साथल उपर साथल चढावीने ( नय चिठ्ठिज्जा के० ) न च तिष्ठेत् एटले बेसे नहि. कारण के, तेथी अविनय प्रमुख दोष थाय छे. ॥ ४६ ॥

( दीपिका. ) पुनः किम् । साधुः कृत्यानामाचार्याणां न पक्षतः पार्श्वतो निषीदेत् । एवं न पुरतोऽग्रतः । नापि पृष्ठ तो मार्गतः । यथासंख्यमविनयवंदमानांतरायादर्शनादिदोषाः प्रभवंति । पुनः तत्र ऊरुं समाश्रित्य ऊरोरुपर्यूरुं कृत्वा न तिष्ठेत् । गुरोऽन्तिके अविनयादिदोषप्रसंगात् ॥ ४६ ॥

( टीका. ) न पक्खउ त्ति सूत्रम् । अस्य व्याख्या । न पक्षतः पार्श्वतः न पुरतोऽग्रतः । नैव कृत्यानामाचार्याणां पृष्ठतो मार्गतो निषीदेदिति वर्त्तते । यथासंख्यमविनयवन्दमानान्तरायादर्शनादिदोषप्रसंगात् । न चोरुं समाश्रित्य ऊरोरुपर्यूरुं कृत्वा तिष्ठेद्गुर्वन्तिके । अविनयादिदोषप्रसंगादिति सूत्रार्थः ॥ ४६ ॥

अपुछिउ न भासिज्जा, भासमाणस्स अंतरा ॥
पिठ्ठिमंसं न खाइज्जा, मायामोसं विवज्जए ॥ ४७ ॥

( अवचूरिः ) उक्तः कायप्रणिधिः । वाक्प्रणिधिमाह । अपृष्टो निःकारणं न भाषेत । भाषमाणस्यान्तरा न भाषेत । पृष्ठिमांसं परोक्षदोषकीर्तनरूपं न खादेदतो मायाप्रधानां मृषां वाचं विवर्जयेत् ॥ ४७ ॥

( अर्थ. ) गुरुनी सेवा करता कायनो संयम कह्यो. हवे वाणीनो कहे छे. अपुछिउ इत्यादि सूत्र. साधु जे ते ( अपुछिउ के० ) अपृष्टः एटले गुरुए पूछया विना ( न भासिज्जा के० ) न भाषेत एटले बोले नहि. ( भासमाणस्स के० ) भाषमाणस्य एटले गुरु कांइ वात करता होय तो तेमनी ( अंतरा के० ) अंतरा एटले वच्चे ( न [illegible]ज्जा के० ) न भाषेत एटले बोले नहि. ( पिठ्ठिमंसं के० ) पृष्ठिमांसं एटले पीठना प्रत्ये ( न खाइज्जा के० ) न खादेत् एटले खाय नहि, अर्थात् गुरुनी परपूठे

निंदा प्रमुख करे नहि. तेमज (मायामोसं के०) मायामृषां एटले माया (कपट) प्रधान जेमां छे एवा असत्य वचन प्रत्ये (विवज्जए के०) विवर्जयेत् एटले वर्जे. ॥ ४७ ॥

(दीपिका.) इति उक्तः कायप्रणिधिः। अथ वाक्प्रणिधिमाह। साधुरपृष्टः सन् निःकारणं न भाषेत। पुनर्भाषमाणस्य अन्तरापि न भाषेत। नचेदमिछं तदैवमिति। तथा पृष्ठिमांसं परोक्षदोषकीर्तनरूपं न खादेत् न भाषेत। पुनर्मायामृषां मायाप्रधानं मृषावादं विवर्जयेदिति ॥ ४७ ॥

(टीका.) उक्तः कायप्रणिधिर्वाक्प्रणिधिमाह। अपुछिउं त्ति सूत्रम्। अस्य व्याख्या। अपृष्टो निष्कारणं न भाषेत। भाषमाणस्य चान्तरेण न भाषेत। नेदमिछं किं तदैवमिति। तथा पृष्ठिमांसं परोक्षदोषकीर्तनरूपं न खादेन्न भाषेत। मायामृषां मायाप्रधानां मृषावाचं विर्जयेदिति सूत्रार्थः ॥ ४७ ॥

अप्पत्तिअं जेण सिआ, आसु कुप्पिज्ज वा परो॥
सवसो तं न भासिज्जा, भासं अहिअगामिणिं ॥ ४८ ॥

(अवचूरिः) अप्रीतिर्येन स्यात्। प्राकृतत्वाल्लिङ्गव्यत्ययः। यया भाषया आशु शीघ्रं कुप्येद्वा परो रोषं दर्शयेत्। सर्वशः सर्वास्ववस्थासु तामिछंभूतां भाषामहितगामिनीमुभयलोकविरुद्धां न भाषेत ॥ ४८ ॥

(अर्थ.) वली अप्पत्तिअं इत्यादि सूत्र. (जेण के०) यया एटले जे भाषाए करीने (अप्पत्तिअं के०) अप्रीतिः एटले अप्रीति (सिआ के०) स्यात् एटले थाय. (वा के०) अथवा जे वचने करीने (परो के०) परः एटले पारको कोइ पुरुष (आसु के०) आशु एटले शीघ्र (कुप्पिज्ज के०) कुप्येत् एटले रोष पामे. (तं के०) तां एटले ते (अहिअगामिणिं के०) अहितगामिनीं एटले अहितने करनारी एवी (भासं के०) भाषां एटले भाषाप्रत्ये (सवसो के०) सर्वशः एटले सर्व प्रकारे सर्वे अवस्थाने विषे साधु जे ते (न भासिज्जा के०) न भाषेत एटले बोले नहि.॥४८॥

(दीपिका.) पुनः किंच। साधुः इछंभूतां भाषां न भाषेत। इछं कीदृशीम्। प्राकृतशैल्या येनेति यया भाषया अप्रीतिः अप्रीतिमात्रं भवेत्। तथा आशु शीघ्रं कुप्येद् वा परो रोषकार्यं दर्शयेत्। सर्वत्र सर्वास्ववस्थासु तामीदृशीं भाषां न भाषेत। पुनः अहितगामिनीमुभयलोकविरुद्धां न भाषेत ॥ ४८ ॥

(टीका.) किंच। अप्पत्तिअं ति सूत्रम्। अस्य व्याख्या। अप्रीतिर्येन स्यादिति। प्राकृतशैल्या येनेति यया भाषया भाषितया अप्रीतिरित्यप्रीतिमात्रं भवेत्। तथा

आशु शीघ्रं कुप्येद्वा परो रोषकार्यं दर्शयेत् । सर्वशः सर्वास्ववस्थासु तामित्थंभूतां न नाषेत नाषामहितगामिनीमुनयलोकविरुद्धामिति सूत्रार्थः ॥ ४७ ॥

दिठं मिअं असंदिद्धं, पडिपुन्नं विअं जिअं ॥
अयंपिरमणुव्विग्गं, नासं निसिर अत्तवं ॥ ४ए ॥

---

( अवचूरिः ) नाषणोपायमाह । दृष्टामिति दृष्टार्थविषयां स्तोकामसंदिग्धां स्फुटां प्रतिपूर्णां स्वरादिनिः । व्यक्तामलब्धां जितां परिचितामजल्पनशीलां नोच्चैर्नातिनीचैः । अनुद्विग्नां नोद्वेगकारिणीं निसृजेद्ब्रूयाद् आत्मवान् सचेतनः ॥ ४ए ॥

---

( अर्थ. ) हवे केवुं वचन बोलवुं ते कहे छे. दिठं इत्यादि सूत्र. ( अत्तवं के० ) आत्मवान् एटले सचेतन एवा साधु जे ते ( दिठं के० ) दृष्टां एटले पोते जे वात दीठी होय ते संबंधी, ( मिअं के० ) मितां एटले परिमित, (असंदिद्धं के०) असंदिग्धां एटले संशयरहित अर्थात् जे सांनलवाथी कोइने शंका उत्पन्न न थाय एवी, ( पडिपुन्नं के० ) प्रतिपूर्णां एटले जेमांना स्वरव्यंजनादिकनो उच्चार स्पष्ट होवाथी प्रकट एवी, ( जिअं के० ) जितां एटले परिचित एवी, ( अयंपिरं के० ) अजल्पनशीलां एटले ऊंचे अथवा नीचे न वलगनारी एवी तथा ( अणुव्विग्गं के० ) अनुद्विग्नां एटले उद्वेग न उपजावनारी एवी ( नासं के० ) नाषां एटले नाषा प्रत्ये ( निसिरे के० ) निसृजेत् एटले बोले. ॥ ४ए ॥

---

( दीपिका. ) नाषणस्य उपायमाह । आत्मवान् सचेतनः साधुः ईदृशीं नाषां निसृजेत् ब्रूयाद् । ईदृशीं कीदृशीमित्याह । दृष्टां दृष्टार्थविषयां, पुनर्मितां स्वरूपप्रयोजनान्यां स्तोकां, पुनः असंदिग्धां शङ्कारहितां, पुनः प्रतिपूर्णां स्वरादिनिः, व्यक्तां प्रकटां, पुनः जितां परिचितां, पुनः अजल्पनशीलां न उच्चैर्न नीचैर्लग्नविलग्नां पुनरनुद्विग्नां न उद्वेगकारिणीमेवंनूतां नाषां साधुर्ब्रूयात् ॥ ४ए ॥

---

( टीका. ) नाषणोपायमाह । दिठं ति सूत्रम् । अस्य व्याख्या । दृष्टां दृष्टार्थविषयां मितां स्वरूपप्रयोजनान्यामसंदिग्धां निःशङ्कितां प्रतिपूर्णां स्वरादिनिर्व्यक्तामलब्धां जितां परिचितामजल्पनशीलां नोच्चैर्लग्नविलग्नामनुद्विग्नां नोद्वेगकारिणीमेवंनूतां नाषां निसृजेद्ब्रूयादात्मवान् सचेतन इति सूत्रार्थः ॥ ४ए ॥

आयारपन्नत्तिधरं, दिठिवायमहिज्जगं ॥
वायविक्खलिअं नच्चा, न तं उवहसे मुणी ॥ ५० ॥

( अवचूरिः ) आचार आचाराङ्गं प्रज्ञप्तिर्भगवत्यङ्गं । तथा दृष्टिवादस्य च धरमधीयानं वाक्स्खलितं ज्ञात्वा न तमाचारादिधरमुपहसेन्मुनिः ॥ ५० ॥

( अर्थ. ) उपदेशना अधिकारमांज आ कहे छे. आयार इत्यादि सूत्र. ( मुणी के० ) मुनिः एटले साधु जे ते ( आयारपन्नत्तिधरं के० ) आचारप्रज्ञप्तिधरं एटले आचारना धारण करनार होवाथी स्त्रीलिंगादिकना जाण अने पन्नत्तिना धारण करनार होवाथी विशेषणसहित स्त्रीलिंगादिकना जाण एवा तेमज ( दिठिवायमहिज्जगं के० ) दृष्टिवादमधीयानं एटले दृष्टिवादनुं अध्ययन करनार होवाथी प्रकृति, प्रत्यय, लोप, आगम, वर्णविकार, काल, कारक विगेरेना जाण एवा साधु प्रत्ये ( वायविक्खलिअं के० ) वाग्विस्खलितं एटले वचन बोलता लिंग, वचन, विभक्तिमां अनुपयोगथी विविध प्रकारे स्खलना पामेला एवाने ( नच्चा के० ) ज्ञात्वा एटले जाणीने ( तं के० ) तं एटले ते साधु प्रत्ये ( न उपहसे के० ) न उपहसेत् एटले हसे नहि. "आचारादिकना जाण एवा ए साधुनी वाक्चातुरी केवी छे ?" एवी रीते उपहास ( मस्करी ) न करे. ॥ ५० ॥

( दीपिका. ) अथ प्रस्तुतस्य उपदेशस्य अधिकारेण इदमाह । मुनिः तमाचारादिधरं न उपहसेत् । किंभूतं तम् । आचारप्रज्ञप्तिधरम् । आचारधरः स्त्रीलिंगादीनि जानाति । प्रज्ञप्तिधरस्तान्येव सविशेषणानि । इत्येवंभूतम् । पुनः किंभूतम् । दृष्टिवादमधीयानं प्रकृतिप्रत्ययलोपागमवर्णविकारादिविज्ञम् । किं कृत्वा न उपहसेत् । तं तादृशं वाग्विस्खलितं ज्ञात्वा विविधमनेकप्रकारैः लिङ्गभेदादिभिः स्खलितं विज्ञाय नोपहसेत् । किंतु एवं जानाति वदति च । अहो खलु आचारादिधरस्य वचन एवं कौशलम् । इह च दृष्टिवादमधीयानमित्युक्तम् । अत इदं गम्यते नाधीतदृष्टिवादं तस्य ज्ञानाप्रमादातिशयतः स्खलनासंभवात् । यदि एवंभूतस्यापि स्खलितं संभवति । नच एवमुपहसेदिति उपदेशः । ततोऽन्यस्य सुतरां संभवति न चासौ हसितव्य इति ॥ ५० ॥

( टीका. ) प्रस्तुतोपदेशाधिकार एवेदमाह । आयार त्ति सूत्रम् । अस्य व्याख्या । आचारप्रज्ञप्तिधरमित्याचारधरः स्त्रीलिङ्गादीनि जानाति । प्रज्ञप्तिधरस्तान्येव सविशेषाणीत्येवंभूतम् । तथा दृष्टिवादमधीयानं प्रकृतिप्रत्ययलोपागमवर्णविकारकालकारकादिवेदिनं वाग्विस्खलितं ज्ञात्वा विविधमनेकैः प्रकारैर्लिङ्गभेदादिभिः स्खलितं विज्ञाय न तमाचारादिधरमुपहसेन्मुनिः । अहो नु खल्वाचारादिधरस्य वाचि कौशलमित्येवम् । इह च दृष्टिवादमधीयानमित्युक्तमत इदं गम्यते । नाधीतदृष्टिवादम् । तस्य ज्ञानाप्रमादाति-

शयतः स्खलनासंभवाद्येवंभूतस्यापि स्खलितं संभवति । न चैनमुपहसेदित्युपदेशः। ततोऽन्यस्य सुतरां संभवति । नासौ हसितव्य इति सूत्रार्थः ॥ ५० ॥

नक्खत्तं सुमिणं जोगं, निमित्तं मंतभेसजं ॥
गिहिणो तं न आइक्के, भूआहिगरणं पयं ॥ ५१ ॥

---

(अवचूरिः) गृहिणा पृष्टः नक्षत्रमश्विन्यादि स्वप्नं शुभाशुभफलं योगं वशीकरणादिं निमित्तमतीतादि । मन्त्रं वृश्चिकमन्त्रादिं भेषजमतिसाराद्यौषधं गृहिणामसंयतानां तदेतन्नाचक्षीत । किंविशिष्टं भूताधिकरणं पदं भूतान्येकेन्द्रियादीन्यधिक्रियन्ते व्यापाद्यन्ते यस्मिन्निति। ततश्चैषां प्रश्न एवं ब्रूयात्। नाधिकारोऽत्रसाधूनां कथने ॥ ५१ ॥

---

(अर्थ.) वळी नक्खत्तं इत्यादि सूत्र. साधु जे ते (नक्खत्तं के०) नक्षत्रं एटले अश्विनी प्रमुख नक्षत्र, (सुमिणं के०) स्वप्नं एटले शुभ अशुभ प्रमुख स्वप्न, (जोगं के०) योगं एटले वशीकरण, आकर्षणे प्रमुख योग (निमित्तं के०) निमित्तं एटले अतीत अनागत कथन रूप निमित्त, तथा (मंतभेसज्जं के०) मंत्रभेषजं एटले वीछी प्रमुखना मंत्र अने अतिसार प्रमुख रोगोनुं औषध (तं के०) तत् एटले उपर कहेली सर्व वस्तु (गिहिणं के०) गृहिणां एटले गृहस्थोने (न आइक्के के०) न आचक्षीत एटले न कहे. कारण के, उपर कहेली सर्व वस्तु (भूयाहिगरणं पयं के०) भूताधिकरणं पदं एटले प्राणिना संघट्टन आतापन विगेरेनुं स्थानक छे. माटे गृहस्थ नक्षत्रादि पूछे तो साधुए कहेवुं के, आ वातमां अमारो अधिकार नथी. ॥५१॥

---

(दीपिका.) पुनः किंच साधुर्गृहिणा पृष्टः सन्नेतानि गृहिणामसंयतानां नाचक्षीत न ब्रूयात् । एतानि कानीत्याह । नक्षत्रमश्विन्यादि १ स्वप्नं शुभाशुभफलमनुभूतादिं, योगं वशीकरणादिं, निमित्तमतीतादि । मंत्रं वृश्चिकमंत्रादिं । भेषजमतिसारादीनां रोगाणामौषधम् । एतत् षट्कं किंविशिष्टमित्याह । भूताधिकरणं पदम् । भूतानि एकेन्द्रियादीनि संघट्टनादिनाधिक्रियन्ते व्यापाद्यन्ते अस्मिन्निति । ततश्च तदप्रीतिपरिहारार्थमिदं ब्रूयात् । यतस्तपस्विनामत्र नक्षत्रादौ नाधिकारः ॥ ५१ ॥

---

(टीका.) किं च नक्खत्तं ति सूत्रम् । अस्य व्याख्या । गृहिणा पृष्टः सन्नक्षत्रमश्विन्यादि । स्वप्नं शुभाशुभफलमनुभूतादिम् । योगं वशीकरणादिम् । निमित्तमतीतादि ।मन्त्रं वृश्चिकमन्त्रादिम् । भेषजमतीसाराद्यौषधं गृहिणामसंयतानां तदिदं नाचक्षीत । किंविशिष्टमित्याह । भूताधिकरणं पदमिति । भूतान्येकेन्द्रियादीनि संघट्टनादिनाधिक्रियन्तेऽस्मिन्निति । ततश्च तदप्रीतिपरिहारार्थमिदं ब्रूयादनधिकारोऽत्र तपस्विनामिति सूत्रार्थः ॥ ५१ ॥

अन्नठं पगडं लयणं, नइज्ज सयणासणं ॥
उच्चारनूमिसंपन्नं, इत्थी पसुविवज्जिअं ॥ ५१ ॥

( अवचूरिः ) अन्यार्थं प्रकृतं न साध्वर्थं निर्वर्त्तितं लयनं स्थानं वसतिरूपं नजेत् सेवेत । शयनासनमित्यन्यार्थप्रकृतसंस्तारकपीठकादि सेवेत । उच्चारप्रस्रवणनूमिसंयुक्तम् । तद्रहितेऽसकृत्तदर्थं निर्गमनादिदोषात् । स्त्रीपशुविवर्जितमिति ॥ ५१ ॥

( अर्थ. ) वली अन्नठं इत्यादि सूत्र. साधु जे ते ( अन्नठं के० ) अन्यार्थं एटले बीजाने अर्थे (पगडं के० ) प्रकृतं एटले करेलुं एवुं अर्थात् साधुने निमित्ते नहि करेलुं एवुं, ( उच्चारनूमिसंपन्नं के० ) उच्चारनूमिसंपन्नं एटले स्थंडिल, मात्र प्रमुखना स्थानक वडे युक्त एवुं तथा ( इत्थीपसुविवज्जिअं के० ) स्त्रीपशुविवर्जितं एटले स्त्री, पशु तथा नपुंसक विगेरेनी ज्यां वसति तथा दृष्टि पण नथी एवुं ( लयणं के० ) लयनं एटले वसति प्रत्ये ( नइज्ज के० ) नजेत् एटले सेवे. तथा बीजाने अर्थे करेली एवी ( सयणासणं के० ) शयनासनं एटले संथारो, आसन प्रमुख वस्तु प्रत्ये ( नइज्ज के० ) नजेत् एटले सेवे. ॥ ५१ ॥

( दीपिका. ) पुनः किंच । साधुः एवं लयनं स्थानं वसतिरूपं नजेत्सेवेत । किं० लयनम् । अन्यार्थं प्रकृतं न साधुनिमित्तं कृतम् । तथा शयनासनमपि अन्यार्थं प्रकृतं संस्तारकपीठकादि सेवेत । किं० लयनम् । उच्चारनूमिसंपन्नमुच्चारप्रस्रवणादिनूम्या संयुक्तम् । कथम् । उच्चारादिनूमिरहिते स्थाने वारंवारमुच्चारादिनिर्गमने दोषा नवन्ति । पुनः किंनूतं लयनं । स्त्रीपशुविवर्जितमेकग्रहणेन तज्जातीयानां ग्रहणमिति न्यायात् । स्त्रीपशुपएमकविवर्जितम् । स्त्रीप्रमुखालोकनादिरहितमित्यर्थः । तदित्थंनूतं लयनं सेवमानस्य साधोः धर्मकथाविधिमाह ॥ ५१ ॥

( टीका. ) किं च अन्नठं ति सूत्रम् । अस्य व्याख्या । अन्यार्थं प्रकृतं न साधुनिमित्तमेव निर्वर्त्तितं लयनं स्थानं वसतिरूपं नजेत् सेवेत । शयनासनमित्यन्यार्थं प्रकृतं संस्तारकपीठकादि सेवेतेत्यर्थः । एतदेव विशेष्यते । उच्चारनूमिसंपन्नमुच्चारप्रस्रवणादिनूमियुक्तम् । तद्रहितेऽसकृत्तदर्थं निर्गमनादिदोषात् । तथा स्त्रीपशुविवर्जितमित्येकग्रहणे तज्जातीयग्रहणात् स्त्रीपशुपएमकविवर्जितं तद्यालोकनादिरहितमिति सूत्रार्थः ॥

विवित्ता अ नवे सिज्जा, नारीणं न लवे कहं ॥
गिहिसंथवं न कुज्जा, कुज्जा साहूहिं संथवं ॥ ५२ ॥

( अवचूरिः ) तदिबंभूतं लयनं सेवमानस्य धर्मकथाविधिमाह । विविक्ता च अन्यसाधुभिर्विरहिता । च शब्दाद्भुजङ्गप्रायैकपुरुषयुक्ता वा चेद्भवेद्वसतिस्ततो नारीणां न लपेत् कथां शंकादिदोषप्रसङ्गात् । औचित्यं विज्ञाय पुरुषाणां कथयेत् । अविविक्तायां स्त्रीणामपि कथयेत् । गृहिसंस्तवं गृहस्थपरिचयं न कुर्यात् । स्नेहादिदोषात् । कुर्यात्साधुभिः सह संस्तवम् ॥ ५३ ॥

---

( अर्थ. ) वली विवित्ता इत्यादि सूत्र. ( सिज्जा के० ) शय्या एटले वसति जे ते ( विवित्ता के० ) विविक्ता एटले बीजा साधुथी रहित तथा एकाद अनाचारी जेवा पुरुष वडे सहित एवी जो ( नवे के० ) नवेत् एटले होय. तो साधु जे ते ( नारीणं के० ) नारीणां एटले स्त्रियोनी ( कहं के० ) कथां एटले कथा प्रत्ये ( न लवे के० ) न लपेत् एटले न कहे. तथा ( गिहिसंथवं के० ) गृहिसंस्तवं एटले गृहस्थनी साथे परिचय प्रत्ये ( न कुज्जा के० ) न कुर्यात् एटले करे नहि. पण ( साहूहिं के० ) साधुभिः एटले साधुर्जनी साथे (संथवं के०) संस्तवं एटले परिचय प्रत्ये (कुज्जा के०) कुर्यात् एटले करे. ॥ ५३ ॥

---

( दीपिका. ) साधुर्यदि एवंविधा शय्या वसतिर्भवेत् । तदा नारीणां स्त्रीणां कथां न कथयेत् । कथम् । शंकादिदोषप्रसंगात् । योग्यतां विज्ञाय पुरुषाणां कथयेत् । नारीणां तु अविविक्तायां वसतौ कथयेदपि । किंभूता शय्या वसतिः । विविक्ता तदन्यसाधुभिर्विर्जिता । यत्र अन्ये साधवो न सन्ति । चशब्दात् तथाविधभुजङ्गप्रायैकपुरुषसंयुक्ता भवेत् । तथापि न नारीणां कथां कथयेत् । तथा पुनः साधुर्गृहिसंस्तवं न कुर्यात् । स्नेहादिदोषसंभवात् । साधुभिस्तु समं संस्तवं परिचयं काले कल्याणमित्रयोगेन कुशलपक्षवृद्धिभावं कुर्यादिति ॥ ५३ ॥

---

( टीका. ) तदिबंभूतं लयनं सेवमानस्य धर्मकथाविधिमाह । विवित्ता य त्ति सूत्रम् । अस्य व्याख्या । विविक्ता च तदन्यसाधुभीरहिता च । चशब्दात्तथाविधभुजङ्गप्रायैकपुरुषयुक्ता च भवेच्छय्या वसतिर्यदि ततो नारीणां स्त्रीणां न कथयेत्कथां शंकादिदोषप्रसंगात् । औचित्यं विज्ञाय पुरुषाणां तु कथयेत् । अविविक्तायां नारीणामपीति । तथा गृहिसंस्तवं गृहिपरिचयं न कुर्यात् । तत्स्नेहादिदोषसंभवात् । कुर्यात्साधुभिः सह संस्तवं परिचयं कल्याणमित्रयोगेन कुशलपक्षादिवृद्धिभावत इति सूत्रार्थः ॥५३॥

जहा कुक्कुडपोअस्स, निच्चं कुललउ भयं ॥
एवं खु बंभयारिस्स, इत्थीविग्गहउ भयं ॥ ५४ ॥

( अवचूरिः ) कथंचिद्गृहिसंस्तवेऽपि स्त्रीसंस्तवो न कार्य एव । तत्र कारणमाह । यथा कुक्कुटपोतस्य कुक्कुटशिशोर्नित्यं कुललान्मार्जाराद्भयम् । एवमेव ब्रह्मचारिणः साधोः स्त्रीविग्रहात् । विग्रहग्रहणं मृतविग्रहादपि भयख्यापनार्थम् ॥ ५४ ॥

(अर्थ.) कोइ प्रसंगथी साधु गृहस्थनी साथे परिचय करे तो पण तेणे गृहस्थ स्त्रीनी साथे तो कोइ काले पण परिचय न करवो. तेनुं कारण छे. जहा इत्यादि सूत्र. ( जहा के० ) यथा एटले जेम ( कुक्कुडपोअस्स के० ) कुक्कुटपोतस्य एटले कुकडीना बच्चाने ( निच्चं के० ) नित्यं एटले निरंतर, हमेशां ( कुललओ के० ) कुललतः एटले बिलाडाथी ( भयं के० ) भयं एटले भय छे. ( एवं खु के० ) एवं खलु एटले एमज ( बंभयारिस्स के० ) ब्रह्मचारिणः एटले ब्रह्मचारी एवा साधुने ( इत्थीविग्गहओ के० ) स्त्रीविग्रहात् एटले स्त्रीना शरीरथी नित्य ( भयं के० ) भयं एटले भय छे. केवल जीवती स्त्रीथीज भय छे एम नथी, पण मृत स्त्रीना कलेवरथी पण भय छे एम जणाववाने अर्थे सूत्रमां स्त्रीथी भय छे, एम न कहेतां स्त्रीशरीरथी भय छे एम कह्युं.५४

( दीपिका. ) कथंचित् गृहिसंस्तवभावेऽपि स्त्रीसंस्तवो नैव कर्तव्य इत्यत्र कारणमाह । यथा कुक्कुटपोतस्य कुक्कुटबालस्य नित्यं सर्वकालं कुललतो मार्जारात् भयम् । एवं ब्रह्मचारिणः साधोः स्त्रीविग्रहात् स्त्रीशरीरात् भयम् । विग्रहग्रहणं मृतशरीरादपि भयख्यापनार्थम् ॥ ५४ ॥

( टीका. ) कथंचिद्गृहिसंस्तवभावेऽपि स्त्रीसंस्तवो न कर्तव्य एवेत्यत्र कारणमाह । जह त्ति सूत्रम् । अस्य व्याख्या । यथा कुक्कुटपोतस्य कुक्कुटचेल्लकस्य नित्यं सर्वकालं कुललतो मार्जारतो भयम् । एवमेव ब्रह्मचारिणः साधोः स्त्रीविग्रहात्स्त्रीशरीराद्भयम् । विग्रहग्रहणं मृतविग्रहादपि भयख्यापनार्थमिति सूत्रार्थः ॥ ५४ ॥

चित्तभित्तिं न निज्झाए, नारिं वा सुअलंकिअं ॥
भक्खरं पिव दट्ठूणं, दिट्ठिं पडिसमाहरे ॥ ५५ ॥

( अवचूरिः ) यतश्चैवमतः चित्रभित्तिं चित्रगतां स्त्रीं न निध्यायेन्न निरीक्षेत । नारीं वा सचेतनां स्वलंकृतामुपलक्षणमेतदनलंकृतां वा । कथंचिदालोकेऽपि । भास्करमिव दृष्ट्वा दृष्टिं प्रतिसमाहरेत् निवर्त्तयेदित्यर्थः ॥ ५५ ॥

(अर्थ.) एम छे माटे चित्तभित्तिं इत्यादि सूत्र. साधु जे ते (चित्तभित्तिं के०) चित्रभित्तिं एटले चित्रामणमां चितारेली स्त्रीने ( वा के० ) वा एटले तेमज ( सुअलंकिअं के०) स्वलंकृतां एटले सम्यक् प्रकारे अलंकार प्रमुख पहेरेली एवी ( नारिं के० ) नारीं

एटले स्त्रीने ( न निज्झाए के० ) न निध्यायेत् एटले जुवे नहि. एम करतां पण कदाच स्त्री जोवामां आवे तो साधु जे ते (भक्करं पिव के०) भास्करमिव एटले सूर्यने जोइने जेम तेम स्त्रीने ( दठूणं के० ) दृष्ट्वा एटले जोइने ( दिठिं के० ) दृष्टिं एटले पोतानी दृष्टिने (पडिसमाहरे के० ) प्रतिसमाहरेत् एटले शीघ्र पाछी वाले. ॥ ५५ ॥

( दीपिका.) यतश्च एवं ततः किं कार्यमित्याह । एवंविधामपि नारीं साधुर्न निध्यायेत् न पश्येत् । किंभूतां नारीम् । चित्रगताम् । पुनः किंभूतां नारीम् । स्वलंकृताम् अलंकारैः शोभिताम् । उपलक्षणत्वादनलंकृतामपि न निरीक्षेत । कथंचिद्दर्शनयोगेऽपि भास्करमिव सूर्यमिव दृष्ट्वा दृष्टिं प्रतिसमाहरेत् शीघ्रमेव निवर्तयेदिति ॥ ५५ ॥

( टीका. ) यतश्चैवमतः चित्त त्ति सूत्रम् । अस्य व्याख्या । चित्रभित्तिं चित्रगतां स्त्रियं न निरीक्षेत न पश्येत् । नारीं वा सचेतनामेव स्वलंकृतामुपलक्षणमेतदनलंकृतां च न निरीक्षेत । कथं चिद्दर्शनयोगेऽपि भास्करमिवादित्यमिव दृष्ट्वा दृष्टिं प्रतिसमाहरेद्द्रागेव निवर्तयेदिति सूत्रार्थः ॥ ५५ ॥

हत्थपायपलिछिन्नं, कन्ननासविगप्पिअं ॥
अवि वाससयं नारिं, बंभयारी विवज्जए ॥ ५६ ॥

(अवचूरिः) किं बहुना हस्तपादप्रतिछिन्नां विकृत्तकर्णनासामपि वर्षशतिकां नारीमेवंविधामपि किं पुनस्तरुणीम् । ब्रह्मचारी चारित्रधनो महाधनीव तस्करान् विवर्जयेत् ॥

( अर्थ. ) हवे बहु शुं कहियें. हत्थ इत्यादि सूत्र. ( बंभयारी के० ) ब्रह्मचारी एटले परिपूर्ण ब्रह्मव्रतना धारण करनार एवा साधु जे ते ( हत्थपायपलिछिन्नं के० ) प्रतिछिन्न हस्तपादां एटले जेना हाथ पग कपाइ गया छे एवी तथा ( कन्ननासविगप्पिअं के० ) विकृत्तकर्णनासां एटले जेना नाक कान पण कपाइ गया छे, एवी तेमज ( वाससयं अवि के० ) वर्षशतिकामपि एटले सो वर्षनी उमरे पूगेली एवी पण ( नारिं के० ) नारीं एटले स्त्रीने ( विवज्जए के० ) वर्जयेत् एटले वर्जे. अर्थात् एवी स्त्रीनी साथे पण परिचय विगेरे राखे नहि. ॥ ५६ ॥

( दीपिका. ) किं बहुना ब्रह्मचारी साधुः ईदृशीमपि नारीं विवर्जयेत् । किमङ्ग पुनः तरुणीं नारीम् । सुतरामेव विवर्जयेत् । किंविशिष्टां नारीं । हस्तपादपरिछिन्नां यस्या हस्तौ पादौ छिन्नौ वर्त्तेते । पुनः किंभूतां नारीम् कर्णनासाविकृत्तां कर्णौ नासा च विकृत्ता यस्यास्ताम् । पुनः किंभूतां नारीम् । वर्षशतिकाम् । एतादृशीं वृद्धामपि विर्जयेत् । कः कानिव । महाधनो यथा चौरान् वर्जयेत् ॥ ५६ ॥

( टीका. ) किं बहुना हत्थ त्ति सूत्रम्। व्याख्या। हस्तपादप्रतिछिन्नामिति प्रतिछिन्नहस्तपादाम्। कर्णनासाविकृत्तामिति विकृत्तकर्णनासामपि वर्षशतिकां नारीमेवंविधामपि किमङ्ग पुनस्तरुणीं तां तु सुतरामेव ब्रह्मचारी चारित्रधनो महाधन इव तस्करान् विवर्जयेदिति सूत्रार्थः॥ ५६ ॥

विभूसा इत्थिसंसग्गो, पणीअं रसभोअणं ॥
नरस्सत्तगवेसिस्स, विसं तालउडं जहा ॥ ५७ ॥

---

( अवचूरिः ) अपिच। विभूषा नखादिसंस्काररूपा। स्त्रीसंसर्गः। स्निग्धरसभोजनं नरस्यात्मगवेषिण आत्महितचिन्तनपरस्यैतद्विषमिव तालपुटम्। तालमात्रव्यापत्तिकरविषकल्पम् ॥ ५७ ॥

---

( अर्थ. ) वली विभूसा इत्यादि सूत्र. ( अत्तगवेसिस्स के० ) आत्मगवेषिणः एटले आत्माना कल्याणना अर्थी एवा ( नरस्स के० ) नरस्य एटले मनुष्यने अर्थात् साधुने ( विभूसा के० ) विभूषा एटले वस्त्र, आभूषण इत्यादिवडे शरीरने सणगारवुं ते, ( इत्थिसंसग्गो के० ) स्त्रीसंसर्गः एटले कोइ पण प्रकारे स्त्रीनो संबंध तथा ( पणीअंरसभोअणं के०) प्रणीतरसभोजनम् एटले जेमांथी घी, तेल प्रमुख स्नेह झरे छे एवो आहार करवो ते (तालउडं विसं जहा के०) तालपुटं विषं यथा एटले तालपुट विष सरखो छे. अर्थात् उपर कहेली त्रणे वस्तु विषसरखी होवाथी साधुए वर्जवी.५७

---

( दीपिका. ) अपिच। नरस्य आत्मगवेषिण एतत्सर्वं विभूषादि तालपुटविषं यथा तालमात्रव्यापत्तिकरविषकल्पम्। तत्किमित्याह। विभूषा वस्त्रादिराढा शोभा। स्त्रीसंसर्गो येन केन चित्प्रकारेण स्त्रीसंबन्धः। प्रणीतरसभोजनं गलत्स्नेहरसभक्षणम्५७

---

( टीका. ) अपिच। विभूस त्ति सूत्रम्। विभूषा वस्त्रादिराढा, स्त्रीसंसर्गः येन केन चित्प्रकारेण स्त्रीसंबन्धः। प्रणीतरसभोजनं गलत्स्नेहरसाभ्यवहारः। एतत्सर्वमेव विभूषादि नरस्यात्मगवेषिण आत्महितान्वेषणपरस्य विषं तालपुटं यथा तालमात्रव्यापत्तिकरविषकल्पमहितमिति सूत्रार्थः ॥ ५७ ॥

अंगपच्चंगसंठाणं, चारुल्लविअपेहिअं ॥
इत्थीणं तं न निज्झाए, कामरागविवड्ढणं ॥ ५८ ॥

---

( अवचूरिः ) अङ्गानि शिरःप्रभृतीनि। प्रत्यङ्गानि नयनादीनि। एषां संस्थानं विन्यासविशेषं, चारु लपितं जल्पितं प्रेक्षितं निरीक्षितं स्त्रीणां संबन्धि तदङ्गप्रत्यङ्गसं-

स्थानादीनि न निध्यायेत् न निरीक्षेत। एतन्निरीक्ष्यमाणं कामरागविवर्द्धनं मैथुनाभिलाषजनकमित्यर्थः ॥ ५८ ॥

( अर्थ. ) वली अंगपच्चंग इत्यादि सूत्र. साधु जे ते ( कामरागविवड्ढणं के० ) कामरागविवर्द्धनम् एटले कामरागनी वृद्धि करनार अर्थात् स्त्रीना कामोपभोगनी इच्छा वधारनार एवुं ( तं के० ) तत् एटले ते (इत्थीणं के०) स्त्रीणां एटले स्त्रियोनी ( अंगपच्चंगसंठाणं के० ) अंगप्रत्यंगसंस्थानं एटले मस्तक विगेरे अंगनी, तथा कर्ण, नेत्र विगेरे उपांगनी रचना प्रत्ये तेमज ( चारुल्लवियपेहियं के० ) चारुलपितप्रेक्षितं एटले स्त्रियोनाज सुंदर आलाप अने दृष्टि प्रत्ये ( न निज्झाए के० ) न निध्यायेत् एटले जुवे नहि. ॥ ५८ ॥

( दीपिका. ) पुनः किंच। साधुः स्त्रीणामेतानि न निध्यायेत्, न निरीक्षेत, न पश्येत्। कुत इत्याह। कामरागविवर्द्धनमिति। एतन्निरीक्ष्यमाणं मोहदोषात् मैथुनाभिलाषं वर्द्धयति। अत एव अस्य प्राक् स्त्रीणां निरीक्षणप्रतिषेधात् गतार्थतायामपि प्राधान्यख्यापनार्थं भेदेन उपन्यासः कृतः। एतानि कानि इत्याह। अङ्गानि शिरःप्रभृतीनि। प्रत्यङ्गानि नयनादीनि। एतेषां संस्थानं विन्यासविशेषम्। तथा चारु शोभनं लपितं जल्पितं प्रेक्षितं निरीक्षितं स्त्रीणां संबन्धि सर्वम् ॥ ५८ ॥

( टीका. ) अंग त्ति सूत्रम्। व्याख्या। अङ्गप्रत्यङ्गसंस्थानमित्यङ्गानि शिरःप्रभृतीनि। प्रत्यङ्गानि नयनादीनि। एतेषां संस्थानं विन्यासविशेषं, तथा चारु शोभनं लपितप्रेक्षितं, लपितं जल्पितं, प्रेक्षितं निरीक्षितं स्त्रीणां संबन्धि तदङ्गप्रत्यङ्गसंस्थानादि न निरीक्षेत न पश्येत्। किमित्यत आह। कामरागविवर्द्धनमिति। एतद्धि निरीक्ष्यमाणं मोहदोषान् मैथुनाभिलाषं वर्द्धयति। अत एवास्य प्राक् स्त्रीणां निरीक्षणप्रतिषेधाद्गतार्थतायामपि प्राधान्यख्यापनार्थो भेदेनोपन्यास इति सूत्रार्थः ॥ ५८ ॥

विसएसु मणुन्नेसु, पेमं नाभिनिवेसए ॥
अणिच्चं तेसिं विन्नाय, परिणामं पुग्गलाण य ॥ ५९ ॥

( अवचूरिः ) विषयेषु शब्दादिषु मनोज्ञेषु प्रेम नाभिनिवेशयेत् न कुर्यात्। एवममनोज्ञेषु द्वेषम्। अनित्यं परिणामानित्यतया तेषां शब्दादिषु पुद्गलानां विज्ञाय परिणामं पर्यायान्तरापत्तिरूपम्। ते हि मनोज्ञा अपि क्षणेनामनोज्ञतया एवममनोज्ञा अपि मनोज्ञतया परिणमन्तीति तुच्छो रागद्वेषयोर्हेतुः ॥ ५९ ॥

(अर्थ.) वली विसएसु इत्यादि सूत्र. साधु जे ते (तेसिं के०) तेषां एटले ते (पुग्ग-

लाणं के०) पुजलानां एटले शब्दादिरूपे परिणमेला पुजलोना (परिणामं के०) परिणामं एटले परिणाम प्रत्ये (अणिच्चं के०) अनित्यं एटले अनित्य एवाने (विन्नाय के०) विज्ञाय एटले जाणीने (मणुन्नेसु के०) मनोज्ञेषु एटले सुंदर, मनोहर एवा (विसएसु के०) विषयेषु एटले शब्द स्पर्शादि विषयोने विषे (पेमं के०) प्रेम एटले प्रेमरागप्रत्ये (नाभिनिवेसए के०) नाभिनिवेशयेत् एटले न करे. अर्थात् मनने गमता विषय होय ते घडीमां अणगमता थाय छे, अने अणगमता होय ते घडीमां मनगमता थाय छे माटे ते उपर रागद्वेष न राखवा. ॥ ५ए ॥

(दीपिका.) पुनः किंच। साधुः विषयेषु शब्दादिषु प्रेम रागं न अभिनिवेशयेत् न कुर्यात्। किंभूतेषु विषयेषु। मनोज्ञेषु। इन्द्रियाणामनुकूलेषु। अमनोज्ञेषु च द्वेषं न कुर्यात्। किं कृत्वा। तेषां पुजलानां तुशब्दाच्छब्दादिविषयसंबन्धिनामनित्यतया परिणामं विज्ञाय जिनवचनानुसारेण। कथम्। विज्ञायते हि मनोज्ञा अपि क्षणाद् अमनोज्ञतया परिणमन्ति। अमनोज्ञा अपि क्षणाद् मनोज्ञतया परिणमन्ति। ततस्तयोरुपरि रागद्वेषकरणं निरर्थकमिति ॥ ५ए ॥

(टीका.) किं च। विसएसु त्ति सूत्रम्। विषयेषु शब्दादिषु मनोज्ञेष्विन्द्रियानुकूलेषु प्रेम रागं नाभिनिवेशयेन्न कुर्यात्। एवममनोज्ञेषु द्वेषम्। आह। उक्तमेवेदं प्राक् कसोखेकहीत्यादौ। किमर्थं पुनरुपन्यास इति। उच्यते। कारणविशेषाभिधानेन विशेषोपलम्भार्थमिति। आह च। अनित्यमेव परिणामानित्यतया तेषां पुजलानां तुशब्दाच्छब्दादिविषयसंबन्धिनामिति योगः। विज्ञायावेत्य जिनवचनानुसारेण। किमित्याह। परिणामं पर्यायान्तरापत्तिलक्षणम्। ते हि मनोज्ञा अपि सन्तो विषयाः क्षणादमनोज्ञतया परिणमन्ति। अमनोज्ञा अपि मनोज्ञतया इति तुच्छं रागद्वेषयोर्निमित्तमिति सूत्रार्थः ॥ ५ए ॥

पोग्गलाणं परीणामं, तेसिं नच्चा जहा तहा ॥
विणीअतिण्हो विहरे, सीईभूएण अप्पणा ॥ ६० ॥

(अवचूरिः) एतदेवाह। पुजलानां शब्दादिविषयान्तर्गतानां परिणाममुक्तलक्षणं तेषां ज्ञात्वा यथा मनोज्ञेतररूपतया भवन्ति तथा ज्ञात्वा विनीततृष्णोऽपेताभिलाषो विहरेत्। शीतीभूतेन क्रोधाद्यभावेन प्रशान्तेनात्मना ॥ ६० ॥

(अर्थ.) एज प्रकट कहे छे. पोग्गलाणं इत्यादि सूत्र. साधु जे ते (तेसिं के०) तेषाम् एटले ते (पोग्गलाणं के०) पुजलानां एटले पुजलोना (परीणामं के०) परि-

णामं एवले परिणाम प्रत्ये ( जहा तहा के० ) यथा तथा एटले जेवो छे ते प्रकारे ( न च्चा के० ) ज्ञात्वा एटले जाणीने ( विणीअतिण्हो के० ) विनीततृष्णः एटले शब्दादि विषयोने विषे रहेला अभिलाषने छोडतो छतो ( सीईभूएण के० ) शीतीभूतेन एटले क्रोध प्रमुख अग्नि उलवाइ गयाथी शीतल थएला एवा ( अप्पणा के० ) आत्मना एटले आत्मावडे करीने ( विहरे के० ) विहरेत् एटले विचरे. ॥ ६० ॥

( दीपिका. ) एतदपि स्पष्टयन्नाह। शीतीभूतेन क्रोधादीनां त्यागात् प्रशान्तेन आत्मना विहरेत्। किं कृत्वा । तेषां पूर्वोक्तानां पुद्गलानां परिणामं यथा मनोज्ञामनोज्ञतया भवन्ति।तथा ज्ञात्वा। किंभूतः साधुः। विनीततृष्णो गताभिलाषः शब्दादिषु ६०

( टीका. ) एतदेव स्पष्टयन्नाह । पोग्गलाणं ति सूत्रम्। पुद्गलानां शब्दादिविषयान्तर्गतानां परिणाममुक्तलक्षणं तेषां ज्ञात्वा विज्ञाय यथा मनोज्ञेतररूपतया भवन्ति। तथा ज्ञात्वा विनीततृष्णोऽपेताभिलाषः शब्दादिषु विहरेत्। शीतीभूतेन क्रोधाद्यभ्यपगमात्प्रशान्तेनात्मनेति सूत्रार्थः ॥ ६० ॥

जाइ सद्धाइ निक्खंतो, परिआयट्ठाणमुत्तमं ॥
तमेव अणुपालिज्जा, गुणे आयरिअसंमए ॥ ६१ ॥

( अवचूरिः ) यया श्रद्धया संयमगुणस्वीकरणरूपया निष्क्रान्तो गृहवासात् पर्यायस्थानमुत्तमं प्राप्तः । तामेव श्रद्धामनुपालयेत् प्रवर्द्धमानां कुर्यात् । क । मूलगुणादिषु आचार्यसंमतेषु । उपलक्षणत्वादर्हदादिसंमतेषु ॥ ६१ ॥

( अर्थ. ) वली जाइ इत्यादि सूत्र. साधु जे ते (जाइ के० ) यया एटले जे ( सद्धाइ के० ) श्रद्धया एटले श्रद्धा वडे ( निक्खंतो के० ) निष्क्रान्तः एटले अविरतिरूप कादवथी नीकल्या, अने (उत्तमं के०) उत्तमं एटले प्रधान एवा (परिआयट्ठाणं के०) पर्यायस्थानं एटले सर्वविरतिस्वीकाररूप उत्तम स्थानकप्रत्ये पाम्या. ( तमेव के० ) तामेव एटले तेज ( आयरिअसंमए गुणे के० ) आचार्यसंमतेषु गुणेषु एटले तीर्थकर प्रमुखने बहु संमत एवा मूलगुण प्रमुख गुणोने विषे रहेली श्रद्धा प्रत्ये ( अणुपालिज्जा के० ) अनुपालयेत् एटले रक्षण करे. ॥ ६१ ॥

( दीपिका. ) पुनः किं च। साधुः तामेव श्रद्धामप्रतिपातितया प्रवर्द्धमानां गुणेषु मूलगुणादिलक्षणेषु पालयेत् । किंभूतेषु गुणेषु । आचार्यसंमतेषु तीर्थकरादिमतेषु । तां काम् । यया श्रद्धया प्रधानगुणस्वीकाररूपया निष्क्रान्तोऽविरतिकर्दमात् दीक्षास्थानमुत्तमं प्रधानं प्राप्तः ॥ ६१ ॥

(टीका.) किं च जाइ त्ति सूत्रम्। अस्य व्याख्या। यया श्रद्धया प्रधानगुणस्वीकरणरूपया निष्क्रान्तोऽविरतिजम्बालात्पर्यायस्थानं प्रव्रज्यारूपमुत्तमं प्रधानं प्राप्त इत्यर्थः। तामेव श्रद्धामप्रतिपातितया प्रवर्द्धमानामनुपालयेद्यत्नेन। क इत्याह। गुणेषु मूलगुणादिलक्षणेष्वाचार्यसंमतेषु तीर्थकरादिबहुमतेषु। अन्ये तु श्रद्धाविशेषणमेतदिति व्याचक्षते। तामेव श्रद्धामनुपालयेद्गुणेषु। किंभूताम्। आचार्यसंमताम्। न तु स्वाग्रहकलङ्किताामिति सूत्रार्थः॥ ६१॥

तवं चिमं संजमजोगयं च, सज्झायजोगं च सया अहिट्ठिए॥
सुरे व सेणाइ समत्तमाउहे, अलमप्पणो होइ अलं परेसिं॥ ६२॥

(अवचूरिः) आचारप्रणिधिफलमाह। तपश्चेदमनशनादिरूपं, संयमयोगं पृथ्व्यादिविषयं संयमव्यापारं, स्वाध्याययोगं च वाचनादिकं सदाधिष्ठाता तपःप्रभृतीनां कर्त्तेत्यर्थः। स एवंभूतः शूर इव सुभट इव सेनया चतुरङ्गया कषायादिरूपया रुद्धः सन् समाप्तायुधः संपूर्णतपःप्रभृतिखड्गाद्यायुधः। अलमत्यर्थमात्मनो भवति संरक्षणाय परेषां च। निराकरणायालम्॥ ६२॥

(अर्थ.) हवे आचारप्रणिधिनुं फल कहे छे. तवं चिमं इत्यादि सूत्र. (इमं के०) इदं एटले आ अर्थात् साधु लोकमां प्रसिद्ध एवा (तवं के०) तपः एटले अनशन प्रमुख तपस्या प्रत्ये (च के०) च एटले वली (संजमजोगं च के०) संयमयोगं एटले षट्काय जीवरक्षारूप संयमव्यापार प्रत्ये (च के०) च एटले वली (सज्झायजोगं के०) स्वाध्याययोगं एटले वाचना प्रमुख व्यापार प्रत्ये (सया के०) सदा एटले निरंतर (अहिट्ठिए के०) अधिष्ठाता एटले करनार एवा साधु जे ते (सेणाइ के०) सेनया एटले चतुरंग सेनावडे (सूरे व के०) शूर इव एटले शूरवीर पुरुष जेम रोकाय छे, तेम इंद्रिय कषाय रूप सेना वडे रोकाय त्यारे (समत्तमाउहे के०) समाप्तायुधः एटले तपस्या प्रमुख आयुधो जेनी पासे पूरेपूरां छे एवो थयो छतो (अप्पणो के०) आत्मनः एटले पोतानी रक्षा करवाने अर्थे (अलं के०) अलं एटले समर्थ (होइ के०) भवति एटले थाय छे. तेमज (परेसिं के०) परेषां एटले बीजा शत्रुर्जने वारवाने अर्थे पण (अलं के०) समर्थः एटले समर्थ थाय छे.॥ ६२॥

(दीपिका.) अथ आचारप्रणिधिफलमाह। साधुः एवंविधः सन् शूर इव विक्रान्तसुभट इव। अलमत्यर्थमात्मनः संरक्षणाय अलं च परेषां निवारणाय भवति। किंभूतः साधुः। तपश्च इदमनशनादि द्वादशभेदरूपं सर्वसाधुप्रसिद्धं संयम-

योगं च पृथिव्यादिविषयसंयमव्यापारं च स्वाध्याययोगं च वाचनादिव्यापारं च सदा सर्वकालमधिष्ठाता तपःप्रनृतीनां कर्ता इत्यर्थः । किंनूतः शूरः । सेनया चतुरङ्गबलरूपया इन्द्रियकषायादिसेनया निरुद्धः सन् समाप्तायुधः संपूर्णतपःप्रनृतिखड्गायुधः ॥६२॥

---

( टीका. ) आचारप्रणिधिफलमाह । तवं चिमं ति सूत्रम् । तपश्चेदमनशनादिरूपं साधुलोकप्रतीतं संयमयोगं च पृथिव्यादिविषयं संयमव्यापारं च स्वाध्याययोगं च वाचनादिव्यापारं सदा सर्वकालमधिष्ठाता तपःप्रनृतीनां कर्तेत्यर्थः । इह च तपोऽनिधानात्तद्ग्रहणेऽपि स्वाध्याययोगस्य प्राधान्यख्यापनार्थं नेदेनानिधानमिति । स एवंनूतः शूर इव विक्रान्तनट इव सेनया चतुरङ्गरूपया इन्द्रियकषायादिरूपया निरुद्धः सन् समाप्तायुधः संपूर्णतपःप्रनृतिखड्गाद्यायुधः अलमत्यर्थमात्मनो नवति संरक्षणाय अलं च परेषां निराकरणायेति सूत्रार्थः ॥ ६२ ॥

सज्झायसज्झाणरयस्स ताइणो, अपावनावस्स तवे रयस्स ॥
विसुज्झई जं सि मलं पुरे कडं, समीरिअं रुप्पमलं व जोइणा ॥ ६३ ॥

---

( अवचूरिः ) एतदेव स्पष्टयन्नाह । स्वाध्याय एव सद्ध्यानं तत्र रतस्य त्रातुः स्वान्ययोः।अपापनावस्य लब्ध्याद्यपेक्षारहिततया शुद्धचित्तस्य विशुद्ध्यते अपैति यदस्य साधोर्मलं कर्ममलं पुराकृतं जन्मान्तरोपात्तम् । दृष्टान्तमाह । समीरितं प्रेरितं रूप्यमलमिव ज्योतिषाग्निना ॥ ६३ ॥

---

( अर्थ. ) एज प्रकट करवाने अर्थे कहे बे. सज्झाय इत्यादि सूत्र. ( सज्झायसज्झाणरयस्स के० ) स्वाध्यायसद्ध्यानरतस्य एटले स्वाध्यायरूप शुन ध्यानने विषे आसक्त एवा ( ताइणो के० ) तायिनः एटले पोतानी तथा परनी रक्षा करनार एवा ( अपावनावस्स के० ) अपापनावस्य एटले लब्धि प्रमुखनी इछा न होवाथी शुद्ध चित्तवाला एवा तथा ( तवे के० ) तपसि एटले तपस्याने विषे ( रयस्स के० ) रतस्य एटले आसक्त एवा (सि के०) अस्य एटले ए साधुनुं ( जं के० ) यत् एटले जे ( पुरेकडं के० ) पुराकृतं एटले पूर्वनवे उपार्जेलुं एवुं ( मलं के० ) मलं एटले मेलुं अशुन कर्म जे ते ( जोइणा के० ) ज्योतिषा एटले अग्निवडे ( समीरिअं के० ) समीरितं एटले प्रेरित एवुं अर्थात् अग्निथी तपायलुं ( रुप्पमलं व के० ) रूप्यमलमिव एटले अग्निना तापथी रूपानुं मल जेम नीकली जाय बे तेम ( विसुज्झइ के० ) विशुद्ध्यति एटले शुद्ध थाय बे, निर्जरा पामे बे. ॥ ६३ ॥

( दीपिका. ) एतदेव स्पष्टयन्नाह। अस्य साधोः यत् मलं कर्ममलं तत् विशुध्यते अपैति दूरे यातीत्यर्थः। किंभूतं मलम्। पुराकृतं जन्मान्तरेषु उपात्तमुपार्जितम्। केन किंवत्। यथा रूप्यमलम्। किंभूतं रूप्यमलम्। समीरितं प्रेरितं। केन। ज्योतिषाग्निना। किंभूतस्य साधोः। स्वाध्यायसद्ध्यानरतस्य स्वाध्याय एव सद्ध्यानं स्वाध्यायसद्ध्यानं तत्र रतस्य आसक्तस्य। पुनः किंभूतस्य साधोः। त्रातुः स्वस्य परस्य उभयेषां च रक्षणशीलस्य। पुनः किंभूतस्य साधोः। अपापभावस्य लब्ध्यादीनां या अपेक्षा तया रहिततया शुद्धचित्तस्य। पुनः किंभूतस्य साधोः। तपसि अनशनादौ द्वादशविधे रतस्य। एवंविधस्य शुद्धस्य साधोः पापं दूरे यातीति परमार्थः॥ ६३॥

---

( टीका. ) एतदेव स्पष्टयन्नाह। सज्झाय त्ति सूत्रम्। स्वाध्याय एव सद्ध्यानं तत्र रतस्य सक्तस्य त्रातुः स्वपरोभयत्राणशीलस्य अपापभावस्य लब्ध्याद्यपेक्षारहिततया शुद्धचित्तस्य तपस्यनशनादौ यथाशक्ति रतस्य विशुध्यतेऽपैति। यदस्य साधोर्मलं कर्ममलं पुराकृतं जन्मान्तरोपात्तम्। दृष्टान्तमाह। समीरितं प्रेरितं रूप्यमलमिव ज्योतिषाग्निनेति सूत्रार्थः॥ ६३॥

से तारिसे दुक्खसहे जिइंदिए, सुएण जुत्ते अममे अकिंचणे॥
विरायई कम्मघणंमि अवगए, कसिणब्भपुडावगमे व चंदिमित्ति बेमि॥६४॥

आयारपणिही णाम अज्झयणं संमत्तं॥ ८॥

---

( अवचूरिः ) ततश्च। स तादृशः पूर्वोदितगुणयुक्तः साधुः दुःखसहः परीषहजेता। श्रुतेन युक्तः। अममो ममत्वरहितः। अकिंचनो द्रव्यकिंचनरहितः। विराजते कर्मघने ज्ञानावरणादिकर्मघने अपगते सति केवलज्ञानलाभात्। कृत्स्नाभ्रपुटापगमे चन्द्रमा इवेति ब्रवीमीति॥ ६४॥ इत्याचारप्रणिध्यध्ययनावचूरिः॥ ८॥

---

( अर्थ. ) माटे से इत्यादि सूत्र. ( तारिसे के० ) तादृशः एटले पूर्वोक्त गुणयुक्त एवा (दुक्खसहे के०) दुःखसहः एटले परीषहना जितनार एवा (जिइंदिए के०) जितेन्द्रियः एटले पोतानां इंद्रिय जेणे जीत्यां छे एवा (सुएण के०) श्रुतेन एटले श्रुतवडे ( जुत्ते के० ) युक्तः एटले युक्त एवा, ( अममे के० ) अममः एटले सर्वत्र ममतारहित एवा तथा ( अकिंचणे के० ) अकिंचनः एटले द्रव्य भाव परिग्रह रहित एवा ( से के० ) सः एटले ते पूर्वोक्त साधु जे ते ( कसिणब्भपुडावगमे के० ) कृत्स्नाभ्रपुटापगमे एटले संपूर्ण अभ्रमंडल ( वादलानो समुदाय ) विखेराइ गये छते जेम (चंदिमा के०)

चंद्रमाः एटले चंद्रमा शोभे छे तेम ( कम्मघणम्मि के० ) कर्मघने एटले कर्मरूप मेघ ( अवगए के० ) अपगते एटले नाश पामे छते ( विरायइ के० ) विराजते एटले शोभे छे. इति ब्रवीमि एनो अर्थ पूर्वे कहेल छे ते माफक जाणवो. ॥ ६४ ॥

इति श्री दशवैकालिकसूत्रना आचारप्रणिधिनामा अध्ययननो बालावबोध संपूर्ण ॥८॥

---

( दीपिका. ) ततश्च साधुः कीदृशो भवेदित्याह । स तादृशः पूर्वोक्तगुणयुक्तः साधुर्विराजते । क इव ।चन्द्रमा इव । क सति । कृत्स्नाभ्रपुटापगमे समस्तानामभ्रपुटानामपगमे नाशे सति। अयं भावः।यथा शरत्काले चंद्रमाः शोभते तथा साधुरपि अपगतकर्मघनः समासादितकेवलालोको विराजत इत्यर्थः । किंभूतः साधुः । दुःखसहः परीषहपीडासहः । पुनः किंभूतः साधुः जितेन्द्रियः पराजितश्रोत्रादिपञ्चेन्द्रियविषयः । पुनः किंभूतः साधुः । श्रुतज्ञानेन युक्तः विद्यावानित्यर्थः। पुनः किंभूतः साधुः । अममः सर्वत्र ममतारहितः । पुनः किंभूतः साधुः । अकिंचनः किंचनरहितः । ब्रवीमीति पूर्ववत् ॥ ६४ ॥

इति श्रीदशवैकालिके सूत्रे श्रीसमयसुन्दरोपाध्यायविरचितायां दीपिकायामष्टमाध्ययनं संपूर्णम् ॥ ८ ॥

---

( टीका. ) ततः से तारिसे त्ति सूत्रम् । व्याख्या। स तादृशोऽनन्तरोदितगुणयुक्तः साधुः दुःखसहः परीषहजेता जितेन्द्रियः पराजितश्रोत्रेन्द्रियादिः । श्रुतेन युक्तो विद्यावानित्यर्थः । अममः सर्वत्र ममत्वरहितः । अकिंचनो द्रव्यभावकिंचनरहितः विराजते शोभते । कर्मघने ज्ञानावरणीयादिकर्ममेघे अपगते सति । निदर्शनमाह । कृत्स्नाभ्रपुटापगम इव चन्द्रमा इति। यथा कृत्स्ने कृष्णे वा अभ्रपुटे अगपते सति चन्द्रो विराजते शरदि तद्वदसावपि अपगतकर्मघनः समासादितकेवलालोको विराजत इति सूत्रार्थः ॥ ६४ ॥

ब्रवीमीति पूर्ववत् । उक्तोऽनुगमः सांप्रतं नयास्ते च पूर्ववदेव । व्याख्यातमाचारप्रणिध्यध्ययनम् ॥ ८ ॥

इति श्रीहरिभद्रसूरिविरचितायां दशवैकालिकबृहद्वृत्तावष्टमाध्ययनम् ॥ ८ ॥

अष्टमाध्ययनं संपूर्णम् ॥ ८ ॥

---

थंभा व कोहा व मयप्पमाया, गुरुस्सगासे विणयं न सिक्खे॥
सो चेव उ तस्स अभूइभावो, फलं व कीअस्स वहाय होइ॥ १॥

( अवचूरिः ) अथ विनयसमाध्यध्ययनावचूरिः। पूर्वाध्ययने साधुनाचारे यत्नवता भाव्यमित्युक्तम्। इह च आचारवानेव विनयसंपन्नो भवति। अतोऽत्र विनय उच्यते। स्तम्भाद्वा मानाद्वा जात्यादिभिरुत्तमोऽहमिति। अहं गुरुभिराकुष्ट इति क्रोधादक्षान्तिलक्षणात्। मायाप्रमादात्। शूलं मे बाधत इत्यादिमायातः। प्रमादान्निद्रादेः। गुरोः सकाशे विनयं ग्रहणासेवनशिक्षारूपं न शिक्षेत। स एव तु स्तम्भादिर्विनयशिक्षाविघ्नहेतुस्तस्य जडमतेः। अभूतेर्भावोऽभूतिभावोऽसंपद्भाव इत्यर्थः। किमित्याह। वधाय गुणलक्षणभावप्राणनाशाय भवति। दृष्टान्तमाह। फलमिव कीचकस्य। कीचको वंशस्तस्य यथा फलं वधाय भवति। सति तस्मिंस्तस्य विनाशात्तद्वदिति॥ १॥

( अर्थ. ) आचारप्रणिधिनामा अध्ययन कह्युं. हवे विनयसमाधिनामक अध्ययननो आरंभ करे छे. आ अध्ययननो पूर्व अध्ययननी साथे संबंध आ रीते छे. आठमा अध्ययनमां सामाचारीने सम्यक् प्रकारे पालनार साधुनुं वचन निरवद्य होय छे, माटे निरवद्य वचन बोलवाने विषे साधुए यतना राखवी एम कह्युं. हवे आ विनयसमाधिनामा अध्ययनने विषे ' सामाचारीने अनुसरीने चालनार साधु विनयसंपन्न ज होय छे ' एम कहेवानुं छे. आ संबंधे आवेल आ अध्ययननुं थंभा व इत्यादि प्रथम सूत्र. जे साधु ( थंभा के० ) स्तम्भात् एटले जातिहीन ( हलकी जातना ) तथा कुलहीन एवानी पासे हुं शी रीते शिखवा जाउं? एवा अहंकारथी, ( व के० ) वा एटले अथवा ( कोहा के० ) क्रोधात् एटले कंइ पण कारणथी उत्पन्न थएल रोषथी ( व के० ) वा एटले अथवा ( मयप्पमाया के० ) मायाप्रमादात् एटले कपटथी अथवा निद्रा प्रमुख प्रमादथी ( गुरुस्सगासे के० ) गुरोः सकाशे एटले आचार्य प्रमुख गुरुनी पासे ( विणयं के० ) विनयं एटले आसेवन प्रमुख विनय प्रत्ये ( न सिक्खे के० ) न शिक्षते एटले शिखतो नथी. ( सो चेव के० ) स चैव एटले ते स्तंभ, क्रोध प्रमुख जे ते ज ( उ के० ) तु एटले निश्चये करीने ( तस्स के० ) तस्य एटले ते साधुनो ( अभूइभावो के० ) अभूतिभावः एटले ज्ञानरूप संपदानो नाश करनारो एवो ( कीअस्स के० ) कीचकस्य एटले वांसना ( फलं व के० ) फलमिव एटले फलनी पेठे पोताना ( वहाय के० ) वधाय एटले गुणरूप भाव प्राणना

नाशने अर्थे (होइ के०) जवति एटले थाय छे. वांसने फल आवे तो तेनो नाश थाय छे, ए वात प्रसिद्ध छे. ॥ १ ॥

---

(दीपिका.) अथ विनयसमाध्याख्यं नवममध्ययनं व्याख्यायते । तस्य नवमाध्ययनस्य चत्वार उद्देशाः । तत्र प्रथमोद्देशकमाह । इह च अयं संवन्धः । पूर्वाध्ययने निःपापं वचनमाचारे प्रणिहितस्य सम्यक् स्थितस्य जवतीति तत्र यत्नवता जाव्यम् । इत्येतत् उक्तम् । इह तु आचारप्रणिहितो यथायोग्यविनयसंपन्न एव जवति । इत्येतडुच्यते । तथाहि शिष्यः गुरोः सकाश आचार्यादेः समीपे विनयमासेवनारूपं शिक्षारूपं च न शिक्षते, न उपादत्ते, न गृह्णातीत्यर्थः । कस्मात् । स्तम्जाद्वा । कथमहं जात्यादिमान् जात्यादिहीनस्य गुरोः समीपे शिक्षे । तथा क्रोधात् कथंचिदसत्यकरणप्रेरितो रोषाद् वा । तथा मायातः शूलं मे वाधत इत्यादिकपटेन । तथा प्रमादात् प्रक्रान्तमुचितमजानन् निद्रादीनां व्यासङ्गेन । स्तम्जादीनां क्रमेण उपन्यासश्च इत्थमेव अमीषां विनयस्य विघ्नतामाश्रित्य ख्यापनार्थः । तदेवं स्तम्जादिज्यो गुरोः समीपे विनयं न शिक्षते । अन्ये तु आचार्या एवं पठन्ति । गुरोः समीपे विनये न तिष्ठति, विनये न वर्तते, विनयं न आसेवत इत्यर्थः । इह स एव स्तम्जादिर्विनयशिक्षाविघ्नहेतुस्तस्य जडमतेः अजूतिजाव इति । अजूतेर्जावः अजूतिजावः असंपज्जाव इत्यर्थः । किमित्याह । वधाय जवति । गुणलक्षणजावप्राणविनाशाय जवति । दृष्टान्तमाह । फलमिव कीचकस्य । कीचको वंशस्तस्य फलं यथा वधाय जवति । तस्मिन्सति तद्विनाशनात् । तद्वत् इति ॥ १ ॥

---

(टीका.) अधुना विनयसमाध्याख्यमारज्यते । अस्य चायमजिसंबन्धः । इहानन्तराध्ययने निरवद्यं वच आचारे प्रणिहितस्य जवतीति तत्र यत्नवता जवितव्यमित्येतडुक्तम् । इह त्वाचारप्रणिहितो यथोचितविनयसंपन्न एव जवतीत्येतडुच्यते । उक्तं च ॥ आयारपणिहाणंमि, से सम्मं वट्टई बुहे ॥ णाणादीण विणीए जे, मोक्खठा निविगिन्नए ॥ इत्यनेनाजिसंबन्धेनायातमिदमध्ययनम् । अस्य चानुयोगद्वारोपन्यासः पूर्ववत्तावद्यावन्नामनिष्पन्नो निक्षेपः । तत्र च विनयसमाधिरिति द्विपदं नाम । तन्निक्षेपायाह ॥ विनयस्स समाहीए, निक्खेवो होइ दोण्ह वि चउक्को ॥ दव्वविणयंमि तिणिसो, सुवष्णमिच्चेवमाईणि ॥ ७६ ॥ व्याख्या ॥ विनयस्य प्रसिद्धतत्त्वस्य समाधेश्च प्रसिद्धतत्त्वस्यैव । न्यासो जवति द्वयोरपि चतुष्को नामादिजेदात् । तत्र नामस्थापने क्षुण्णत्वादनादृत्य द्रव्यविनयमाह । द्रव्यविनये ज्ञशरीरजव्यशरीरव्यतिरिक्ते तिनिशो वृक्षविशेष उदाहरणम् । स रथाङ्गादिषु यत्र यत्र यथा विनीयते तत्र

तत्र तथा परिणमति योग्यत्वादिति । तथा सुवर्णमित्यादीनि कटककुण्डलादिप्रकारेण विनयनाद् द्रव्याणि द्रव्यविनयः । आदिशब्दात्तत्तद्योग्यरूप्यादिपरिग्रह इति गाथार्थः ॥ सांप्रतं भावविनयमाह ॥ लोगोवयारविणउं, अत्थनिमित्तं च कामहेउं च ॥ भयविणयमुक्खविणउं, विणउं खलु पंचहा होइ ॥ ७७ ॥ व्याख्या ॥ लोकोपचारविनयो लोकप्रतिपत्तिफलोऽर्थनिमित्तं चार्थप्राप्त्यर्थं च कामहेतुश्च कामनिमित्तश्च । तथा भयविनयो भयनिमित्तो मोक्षविनयो मोक्षनिमित्तः । एवमुपाधिभेदाद्विनयः खलु पञ्चधा पञ्चप्रकारो भवतीति गाथासमासार्थः ॥ ॥ व्यासार्थाभिधित्सया तु लोकोपचारविनयमाह ॥ अप्भुट्ठाणं अंजलि, आसणदाणं अइहिपूआ य ॥ लोगोवयारविणउं, देवपूआ य विहवेण ॥ ७८ ॥ व्याख्या ॥ अभ्युत्थानं तदुचितस्यागतस्याभिमुखमुत्थानम् । अंजलिर्विज्ञापनादौ । आसनदानं च गृहागतस्य प्रायेण । अतिथिपूजा चाहारादिदानेन । एष इत्थंभूतो लोकोपचारविनयः । देवतापूजा च यथाभक्ति बल्याद्युपचाररूपा विभवेनेति यथाविभवं विभवोचितेति गाथार्थः ॥ ॥ उक्तो लोकोपचारविनयोऽर्थविनयमाह ॥ अप्भासवित्तिछंदा—णुवत्तणं देसकालदाणं च ॥ अप्भुट्ठाणं अंजलि—आसणदाणं च अत्थकए ॥ ७९ ॥ व्याख्या ॥ अभ्याशवृत्तिर्नरेन्द्रादीनां समीपावस्थानं, छन्दोऽनुवर्तनमभिप्रायाराधनं, देशकालदानं च कटकादौ विशिष्टनृपतेः । प्रस्तावदानं च तथाऽभ्युत्थानमञ्जलिरासनदानं च नरेन्द्रादीनामेव कुर्वन्त्यर्थकृतेऽर्थार्थमिति गाथार्थः ॥ ४ ॥ उक्तोऽर्थविनयः । कामादिविनयमाह ॥ एमेव कामविणउं, भए अ नेअव्वमाणुपुव्वीए ॥ मोक्खंमि वि पंचविहो, परूवणा तस्सिमा होइ ॥ ८० ॥ व्याख्या ॥ एवमेव यथार्थविनय उक्तोऽभ्याशवृत्त्यादिः । तथा कामविनयः । भये चेति । भयविनयश्च ज्ञातव्यो विज्ञेयः । आनुपूर्व्या परिपाट्या । तथाहि । कामिनो वेश्यादीनां कामार्थमेवाभ्यासवृत्त्यादि यथाक्रमं सर्वं कुर्वन्ति । प्रेष्याश्च भयेन स्वामिनामित्युक्तौ कामभयविनयौ । मोक्षविनयमाह । मोक्षेऽपि मोक्षविषयो विनयः पञ्चविधः पञ्चप्रकारः । प्ररूपणा निरूपणा तस्यैषा भवति वक्ष्यमाणेति गाथार्थः ॥ ॥ दंसणनाणचरित्ते, तवे अ तह उवयारिए चेव ॥ एसो अ मोक्खविणउं, पंचविहो होइ नायव्वो ॥ ८१ ॥ व्याख्या ॥ दर्शनज्ञानचारित्रेषु दर्शनज्ञानचारित्रविषयः । तपसि च तपोविषयश्च तथा औपचारिकश्चैव प्रतिरूपयोगव्यापारश्चैव । एष तु मोक्षविनयो मोक्षनिमित्तः पञ्चविधो भवति ज्ञातव्य इति गाथासमासार्थः ॥ व्यासार्थेन दर्शनविनयमाह ॥ दव्वाण सव्वभावा, उवइट्ठा जे जहा जिणवरेहिं ॥ ते तह सद्दहइ नरो, दंसणविणउं हवइ तम्हा ॥ ८२ ॥ व्याख्या ॥ द्रव्याणां धर्मास्तिकायादीनां सर्वभावाः सर्वपर्याया उपदिष्टाः कथिता येऽगुरुलघ्वादयो यथा येन प्रकारेण

नाशने अर्थे (होइ के०) नवति एटले थाय छे. वांसने फल आवे तो तेनो नाश थाय छे, ए वात प्रसिद्ध छे. ॥ १ ॥

---

(दीपिका.) अथ विनयसमाध्याख्यं नवममध्ययनं व्याख्यायते। तस्य नवमाध्ययनस्य चत्वार उद्देशाः। तत्र प्रथमोद्देशकमाह। इह च अयं संबन्धः। पूर्वाध्ययने निःपापं वचनमाचारे प्रणिहितस्य सम्यक् स्थितस्य नवतीति तत्र यत्नवता नाव्यम्। इत्येतत् उक्तम्। इह तु आचारप्रणिहितो यथायोग्यविनयसंपन्न एव नवति। इत्येतदुच्यते। तथाहि शिष्यः गुरोः सकाश आचार्यादेः समीपे विनयमासेवनारूपं शिक्षारूपं च न शिक्षते, न उपादत्ते, न गृह्णातीत्यर्थः। कस्मात्। स्तम्नाद्वा। कथमहं जात्यादिमान् जात्यादिहीनस्य गुरोः समीपे शिक्षे। तथा क्रोधात् कथंचिदसत्यकरणप्रेरितो रोषाद् वा। तथा मायातः शूलं मे बाधत इत्यादिकपटेन। तथा प्रमादात् प्रक्रान्तमुचितमजानन् निद्रादीनां व्यासङ्गेन। स्तम्नादीनां क्रमेण उपन्यासश्च इत्थमेव अमीषां विनयस्य विघ्नतामाश्रित्य ख्यापनार्थः। तदेवं स्तम्नादिन्यो गुरोः समीपे विनयं न शिक्षते। अन्ये तु आचार्या एवं पठन्ति। गुरोः समीपे विनये न तिष्ठति, विनये न वर्तते, विनयं न आसेवत इत्यर्थः। इह स एव स्तम्नादिर्विनयशिक्षाविघ्नहेतुस्तस्य जडमतेः अनूतिनाव इति। अनूतेर्नावः अनूतिनावः असंपन्नाव इत्यर्थः। किमित्याह। वधाय नवति। गुणलक्षणनावप्राणविनाशाय नवति। दृष्टान्तमाह। फलमिव कीचकस्य। कीचको वंशस्तस्य फलं यथा वधाय नवति। तस्मिन्सति तद्विनाशनात्। तद्वत् इति ॥ १ ॥

---

(टीका.) अधुना विनयसमाध्याख्यमारन्यते। अस्य चायमनिसंबन्धः। इहानन्तराध्ययने निरवद्यं वच आचारे प्रणिहितस्य नवतीति तत्र यत्नवता नवितव्यमित्येतदुक्तम्। इह त्वाचारप्रणिहितो यथोचितविनयसंपन्न एव नवतीत्येतदुच्यते। उक्तं च॥ आयारपणिहाणंमि, से सम्मं वट्टई बुहे॥ णाणादीण विणीए जे, मोक्खठा निविगिठ्ठए ॥ इत्यनेनानिसंबन्धेनायातमिदमध्ययनम्। अस्य चानुयोगद्वारोपन्यासः पूर्ववत्तावद्यावन्नामनिष्पन्नो निक्षेपः। तत्र च विनयसमाधिरिति द्विपदं नाम। तन्निक्षेपायाह॥ विनयस्स समाहीए, निक्खेवो होइ दोण्ह वि चउक्को॥ दव्वविणयंमि तिणिसो, सुवस्समिच्चेवमाईणि ॥ ३६ ॥ व्याख्या॥ विनयस्य प्रसिद्धतत्त्वस्य समाधेश्च प्रसिद्धतत्त्वस्यैव। न्यासो नवति द्वयोरपि चतुष्को नामादिनेदात्। तत्र नामस्थापने क्षुसत्वादनादृत्य द्रव्यविनयमाह। द्रव्यविनये ज्ञशरीरनव्यशरीरव्यतिरिक्ते तिनिशो वृक्षविशेष उदाहरणम्। स रथाङ्गादिषु यत्र यत्र यथा विनीयते तत्र

तत्र तथा परिणमति योग्यत्वादिति। तथा सुवर्णमित्यादीनि कटककुण्डलादिप्रकारेण विनयनाद् द्रव्याणि द्रव्यविनयः। आदिशब्दात्तत्तद्योग्यरूप्यादिपरिग्रह इति गाथार्थः॥ सांप्रतं भावविनयमाह॥ लोगोवयारविणओ, अत्थनिमित्तं च कामहेउं च॥ भयविणयमुक्खविणओ, विणओ खलु पंचहा होइ॥ ७७॥ व्याख्या॥ लोकोपचारविनयो लोकप्रतिपत्तिफलोऽर्थनिमित्तं चार्थप्राप्त्यर्थं च कामहेतुश्च कामनिमित्तश्च। तथा भयविनयो भयनिमित्तो मोक्षविनयो मोक्षनिमित्तः। एवमुपाधिभेदाद्विनयः खलु पञ्चधा पञ्चप्रकारो भवतीति गाथासमासार्थः॥ ॥ व्यासार्थाभिधित्सया तु लोकोपचारविनयमाह॥ अब्भुट्ठाणं अंजलि, आसणदाणं अइहिपूआ य॥ लोगोवयारविणओ, देवपूआ य विहवेण॥ ७८॥ व्याख्या॥ अभ्युत्थानं तदुचितस्यागतस्याभिमुखमुत्थानम्। अंजलिर्विज्ञापनादौ। आसनदानं च गृहागतस्य प्रायेण। अतिथिपूजा चाहारादिदानेन। एष इत्थंभूतो लोकोपचारविनयः। देवतापूजा च यथाभक्ति बल्याद्युपचाररूपा विभवेनेति यथाविभवं विभवोचितेति गाथार्थः॥ ॥ उक्तो लोकोपचारविनयोऽर्थविनयमाह॥ अब्भासवित्तिछंदा–णुवत्तणं देसकालदाणं च॥ अब्भुट्ठाणं अंजलि–आसणदाणं च अत्थकए॥ ७९॥ व्याख्या॥ अभ्याशवृत्तिर्नरेन्द्रादीनां समीपावस्थानं, छन्दोऽनुवर्तनमभिप्रायाराधनं, देशकालदानं च कटकादौ विशिष्टनृपतेः। प्रस्तावदानं च तथाभ्युत्थानमञ्जलिरासनदानं च नरेन्द्रादीनामेव कुर्वन्त्यर्थकृतेऽर्थार्थमिति गाथार्थः॥ ४॥ उक्तोऽर्थविनयः। कामादिविनयमाह॥ एमेव कामविणओ, भए अ नेअव्वमाणुपुव्वीए॥ मोक्खंमि वि पंचविहो, परूवणा तस्सिमा होइ॥ ८०॥ व्याख्या॥ एवमेव यथार्थविनय उक्तोऽभ्याशवृत्त्यादिः। तथा कामविनयः। भये चेति। भयविनयश्च ज्ञातव्यो विज्ञेयः। आनुपूर्व्या परिपाट्या। तथाहि। कामिनो वेश्यादीनां कामार्थमेवाभ्यासवृत्त्यादि यथाक्रमं सर्वं कुर्वन्ति। प्रेष्याश्च भयेन स्वामिनामित्युक्तौ कामभयविनयौ। मोक्षविनयमाह। मोक्षेऽपि मोक्षविषयो विनयः पञ्चविधः पञ्चप्रकारः। प्ररूपणा निरूपणा तस्यैषा भवति वक्ष्यमाणेति गाथार्थः॥ ॥ दंसणनाणचरित्ते, तवे अ तह उवयारिए चेव॥ एसो अ मोक्खविणओ, पंचविहो होइ नायव्वो॥ ८१॥ व्याख्या॥ दर्शनज्ञानचारित्रेषु दर्शनज्ञानचारित्रविषयः। तपसि च तपोविषयश्च तथा औपचारिकश्चैव प्रतिरूपयोगव्यापारश्चैव। एष तु मोक्षविनयो मोक्षनिमित्तः पञ्चविधो भवति ज्ञातव्य इति गाथासमासार्थः॥ व्यासार्थेन दर्शनविनयमाह॥ दव्वाण सव्वभावा, उवइट्ठा जे जहा जिणवरेहिं॥ ते तह सद्दहइ नरो, दंसणविणओ हवइ तम्हा॥ ८२॥ व्याख्या॥ द्रव्याणां धर्मास्तिकायादीनां सर्वभावाः सर्वपर्याया उपदिष्टाः कथिता येऽगुरुलघ्वादयो यथा येन प्रकारेण

जिनवरैस्तीर्थकरैस्तान् नावांस्तथा तेन प्रकारेण श्रद्धत्ते नरः। श्रद्दधानश्च कर्म विनयति यस्माद्दर्शनविनयो नवति तस्माद्दर्शनाद्विनयो दर्शनविनय इति गाथार्थः ॥ ज्ञानविनयमाह ॥ नाणं सिक्खइ नाणं, गुणेइ नाणेण कुणइ किच्चाइ ॥ नाणी नवं न बंधइ, नाणविणीर्ज हवइ तम्हा ॥ ७३ ॥ व्याख्या ॥ ज्ञानं शिक्षयत्यपूर्वं ज्ञानमादत्ते। ज्ञानं गुणयति गृहीतं सत्प्रत्यावर्त्तयति। ज्ञानेन करोति कृत्यानि संयमकृत्यानि। एवं ज्ञानी नवं कर्म न बध्नाति। प्राक्तनं च विनयति यस्माज्ज्ञानविनीतो ज्ञानेनापनीतकर्मा नवति तस्मादिति गाथार्थः ॥ चारित्रविनयमाह ॥ अठविहं कम्मचयं, जम्हा रित्तीकरेइ जयमाणो ॥ नवमन्नं च न बंधइ, चरित्तविणीर्ज हवइ तम्हा ॥ ७५ ॥ व्याख्या ॥ अष्टविधमष्टप्रकारं कर्मचयं कर्मसंघातं प्राग्बद्धं यस्माद्रिक्तं करोति, तुछतापादनेनापनयति। यतमानः क्रियायां यत्नपरः। तथा नवमन्यं च कर्मचयं न बध्नाति। यस्माच्चारित्रविनय इति, चारित्राद्विनयश्चारित्रविनयश्चारित्रेण विनीतकर्मा नवति तस्मादिति गाथार्थः ॥ तपोविनयमाह ॥ अवणेइ तवेण तमं, उवणेइ अ सग्गमोक्खमप्पाणं ॥ तवविणयनिछयमई, तवोविणीर्ज हवइ तम्हा ॥ ७५ ॥ व्याख्या ॥ अपनयति तपसा तमोऽज्ञानमुपनयति च स्वर्गं मोक्षमात्मानं जीवम्। तपोविनयनिश्चयमतिर्यस्मादेवंविधस्तपोविनीतो नवति तस्मादिति गाथार्थः ॥ उपचारविनयमाह ॥ अह उवयारिर्ज पुण, डुविहो विणर्ज समासर्ज होइ ॥ पडिरूवजोगजुंजण, तहय अणासायणाविणर्ज ॥ ७६ ॥ व्याख्या ॥ अथौपचारिकः पुनर्द्विविधो विनयः समासतो नवति। द्वैविध्यमेवाह। प्रतिरूपयोगयोजनम्। तथानाशातनाविनय इति गाथासमासार्थः ॥ व्यासार्थमाह ॥ पडिरूवो खलु विणर्ज, काइअजोएइवाइमाणसिर्ज ॥ अठचउविहडुविहो, परूवणा तस्सिमा होइ ॥ ७७ ॥ प्रतिरूप उचितः खलु विनयस्त्रिविधः। काययोगे च वाचि मनसि कायिको वाचिको मानसिकश्च अष्टचतुर्विधद्विविध इत्यर्थ। कायिकोऽष्टविधः, वाचिकश्चतुर्विधः, मानसो द्विविधः। प्ररूपणा तस्य कायिकाष्टविधादेरियं नवति वक्ष्यमाणलक्षणेति गाथार्थः ॥ कायिकमाह ॥ अभुठ्ठय अंजलि, आसणदाणं अनिग्गहकिई अ ॥ सुस्सूसणमणुगछण, संसाहण काय अठविहो ॥ ७७ ॥ व्याख्या ॥ अभ्युछानमर्हस्य, अञ्जलिः प्रश्नादौ, आसनदानं पीठकाद्युपनयनमनिग्रहो गुरुनियोगकरणानिसंधिः, कृतिश्चेति कृतिकर्म वन्दनमित्यर्थः। शुश्रूषणं विधिवददूरासन्नतया सेवनं, अनुगमनमागछतः प्रत्युद्गमनं, संसाधनं च गछतोऽनुव्रजनं चाष्टविधः कायविनय इति गाथार्थः ॥ वागादिविनयमाह ॥ हिअमिअअफरुसवाई, अणुवाई नासिवाइर्ज विणर्ज ॥ अकुसलचित्तनिरोहो, कुसलमणउदीरणा चेव ॥ ७ए ॥ व्याख्या ॥ हितमितापरुषवागिति। हितवाग्घितंवक्ति परिणामसुन्दरं, मितवा-

ग्मितं स्तोकैरक्षरैः, अपरुषवागपरुषमनिष्ठुरं तथा अनुविचिन्त्यभाषी स्वालोचितवक्तेति वाचिको विनयः । तथा अकुशलमनोनिरोधः । आर्तध्यानादिप्रतिषेधेन कुशलमनउदीरणं चैव धर्मध्यानादिप्रवृत्त्येति मानस इति गाथार्थः ॥ आह । किमर्थमयं प्रतिरूपविनयः कस्य चैष इत्युच्यते ॥ पडिरूवो खलु विणओ, पराणुअत्तिमइओ मुणेअव्वो ॥ अप्पडिरूवो विणओ नायव्वो केवलीणं तु ॥ ए० ॥व्याख्या॥ प्रतिरूप उचितः खलु विनयः परानुवृत्त्यात्मकः तत्तद्वस्त्वपेक्षया प्राय आत्मव्यतिरिक्तप्रधानानुवृत्त्यात्मको मन्तव्यः । अयं च वाहुल्येन छद्मस्थानाम् । तथाप्रतिरूपो विनयः अपरानुवृत्त्यात्मकः स च ज्ञातव्यः केवलिनामेव । तेषां तेनैव प्रकारेण कर्मविनयनात् । तेषामपीत्वरः प्रतिरूपोऽज्ञातकेवलभावानां भवत्येवेति गाथार्थः ॥ उपसंहरन्नाह ॥ एसो भे परिकहिओ, विणओ पडिरूवलक्खणो तिविहो ॥ बावन्नविहिविहाणं, वेंति अणासायणाविणयं ॥ ए१ ॥व्याख्या॥ एषोऽनन्तरोदितो भे भवतां परिकथितो विनयः प्रतिरूपलक्षणस्त्रिविधः कायिकादिः । द्विपञ्चाशद्विधिविधानमेतावद्भेदमित्यर्थः । ब्रुवतेऽभिदधति । तीर्थकरा अनाशातनाविनयं वक्ष्यमाणमिति गाथार्थः ॥ एतदेवाह ॥ तित्थगरसिद्धकुलगण-संघकियाधम्मनाणनाणीणं ॥ आयरिअ थेर उवज्झा, गणीणं तेरस पयाणि ॥ ए२॥ तीर्थकरसिद्धकुलगणसंघक्रियाधर्मज्ञानज्ञानिनां तथा आचार्यस्थविरोपाध्यायगणिनां संबन्धीनि त्रयोदश पदानि । अत्र तीर्थकरसिद्धौ प्रसिद्धौ । कुलं नागेन्द्रकुलादि । गणः कोटिकादिः । संघः प्रतीतः । क्रियास्तिवादरूपा । धर्मः श्रुतधर्मादिः । ज्ञानं मत्यादि । ज्ञानिनस्तद्वन्तः । आचार्यः प्रतीतः । स्थविरः सीदतां स्थिरीकरणहेतुः । उपाध्यायः प्रतीतः । गणाधिपतिर्गणिरिति गाथार्थः ॥ एतानि त्रयोदश पदानि अनाशातनादिभिश्चतुर्भिर्गुणितानि द्विपञ्चाशद्भवन्तीत्याह ॥ अणासायणा य भत्ती, बहुमाणो वन्नसंजलणा य ॥ तित्थगराई तेरस, चउग्गुणा होंति बावन्ना ॥ ए३ ॥व्यख्या॥ अनाशातना च तीर्थकरादीनां । सर्वथा अहीलनेत्यर्थः । तथा भक्तिस्तेष्वेवोचितोपचाररूपा । तथा बहुमानस्तेष्वेवान्तरभावप्रतिबन्धरूपः । तथा च वर्णसंज्वलना तीर्थकरादीनामेव सद्भूतगुणोत्कीर्तना । एवमनेन प्रकारेण तीर्थकरादयस्त्रयोदश चतुर्गुणा अनाशातनाद्युपाधिभेदेन भवन्ति द्विपञ्चाशद्भेदा इति गाथार्थः ॥ उक्तो विनयः । सांप्रतं समाधिरुच्यते । तत्रापि नामस्थापने क्षुण्णत्वादनादृत्य द्रव्यादिसमाधिमाह ॥ दव्वं जेण व दव्वेण, समाही आहिअं च जं दव्वं ॥ भावसमाहि चउविह, दंसणनाणे तवचरित्ते ॥ ए४ ॥व्याख्या॥ द्रव्यमिति । द्रव्यमेव समाधिः द्रव्यसमाधिः यथामात्रकमविरोधि वा क्षीरगुडादि । तथा येन वा द्रव्येणोपयुक्तेन समाधिस्त्रिफलादिना तद् द्रव्यसमाधिरिति । तथा आहितं वा यद्द्रव्यं समतां तुलारोपितपलशतादिवत्स्वस्थाने । तद् द्रव्यं समा-

धिरित्युक्तो द्रव्यसमाधिः । नावसमाधिमाह । नावसमाधिः प्रशस्तनावाविरोधलक्षणश्चतुर्विधः । चातुर्विध्यमेवाह । दर्शनज्ञानतपश्चारित्रेषु । एतद्विषयो दर्शनादीनां व्यस्तानां समस्तानां वा सर्वथाविरोध इति गाथार्थः ॥ उक्तः समाधिः । तदनिधानान्नामनिष्पन्नो निक्षेपः । सांप्रतं सूत्रालापकनिष्पन्नस्यावसर इत्यादि चर्चः पूर्ववत् । तावद्यावत्सूत्रानुगमेऽस्खलितादिगुणयुतं सूत्रमुच्चारणीयम् । तच्चेदम् । थंना व त्ति । अस्य व्याख्या । स्तम्नाद्वा मानाद्वा जात्यादिनिमित्तात्क्रोधाद्वा अक्षान्तिलक्षणान्मायाप्रमाददिति । मायातो निकृतिरूपायाः प्रमादान्निद्रादेः सकाशात् । किमित्याह । गुरोः सकाश आचार्यादेः समीपे विनयमासेवनाशिक्षानेदनिन्नं न शिक्षते नोपादत्ते । तत्र स्तम्नात्कथमहं जात्यादिमान् जात्यादिहीनसकाशे शिक्षामीत्येवं क्रोधात्कचिद्वितथकरणचोदितो रोषाद्वा मायातः शूलं मे क्रियत इत्यादिव्याजेन, प्रमादात्प्रक्रान्तोचितमनवबुध्यमानो निद्रादिव्यासङ्गेन । स्तम्नादिक्रमोपन्यासश्चेत्थमेवामीषां विनयविघ्नहेतुतामाश्रित्य प्राधान्यख्यापनार्थः । तदेवं स्तम्नादिन्यो गुरोः सकाशे विनयं न शिक्षते । अन्ये तु पठन्ति । गुरोः सकाशे विनये न तिष्ठति, विनये न वर्त्तते । विनयं नासेवत इत्यर्थः । इह च स एव तु स्तम्नादिर्विनयशिक्षाविघ्नहेतुः । तस्य जडमतेरनूतिनाव इत्यनूतेर्नावोऽनूतिनावः । असंपन्नाव इत्यर्थः । किमित्याह । वधाय नवति गुणलक्षणनावप्राणविनाशाय नवति । दृष्टान्तमाह । फलमिव कीचकस्य । कीचको वंशस्तस्य यथा फलं वधाय नवति । सति तस्मिंस्तस्य विनाशात्तद्वदिति सूत्रार्थः ॥ १ ॥

जे आवि मंदित्ति गुरुं वइत्ता, डहरे इमे अप्पसुअत्ति नच्चा ॥
हीलंति मिछं पडिवज्जमाणा, करंति आसायण ते गुरूणं ॥ २ ॥

---

( अवचूरिः ) ये चापि केचन द्रव्यसाधवो मन्दः सत्प्रज्ञाविकल इति गुरुं विदित्वा । डहरोऽयमप्राप्तवयाः स्थापितः अल्पश्रुत इति ज्ञात्वा मन्दादिशब्दैर्हीलयन्ति । असूयया महाप्रज्ञस्त्वमित्यादि । मिथ्यात्वं प्रतिपद्यमाना गुरुर्न हीलनीय इति तत्त्वमनवगछन्तः । कुर्वन्त्याशातनां ते गुरूणाम् । अतो हीलना न कार्या ॥ २ ॥

---

( अर्थ. ) वली जे आवि इत्यादि सूत्र. (जे आवि के० ) ये चापि एटले जे द्रव्य साधुउ ( गुरुं के० ) गुरुं एटले पोताना गुरुप्रत्ये ( मंदित्ति के० ) मन्द इति एटले मंद बे, बुद्धिशाली नथी, आगमनी वात युक्तिथी जाणवाने समर्थ नथी ए प्रकारे ( वइत्ता के० ) विदित्वा एटले जाणीने तेमज तेवा कंइ कारणथी न्हानी अवस्थामांज पाटे स्थापन करेल गुरुने (इमे के०) इमे एटले आ ( डहरे के० ) डहराः एटले काची उमरना बे, तथा ( अप्पसुअ त्ति के० ) अल्पश्रुता इति एटले अल्पश्रुतना

जाण छे ए प्रकारे ( नच्चा के० ) ज्ञात्वा एटले जाणीने ( हीलंति के० ) हीलयन्ति एटले गुरुनो तिरस्कार, निंदा प्रमुख करे छे. ( ते के० ) ते एटले ते साधुउं ( मिछं के० ) मिथ्यात्वं एटले मिथ्यात्व प्रत्ये ( पडिवज्जमाणा के० ) प्रतिपद्यमानाः एटले पामता छता ( गुरूणं के० )गुरूणां एटले गुरुनी ( आसायण के० ) आशातनां एटले आशातना प्रत्ये ( करंति के० ) कुर्वन्ति एटले करे छे. ॥ २ ॥

---

( दीपिका. ) किं च । ये चापि केवलद्रव्यसाधवः अगम्भीरा भवन्ति । ते द्रव्यसाधवो गुरूणामाचार्याणामाशातनां लघुतापादनरूपां तत्स्थापनाया अवहुमानेन कुर्वन्ति । एकस्य गुरोराशातनायां सर्वेषां गुरूणामाशातना इति हेतोर्गुरूणामिति वहुवचनम् । मन्द इति ज्ञात्वा । सत्प्रज्ञाविकल इति ज्ञात्वा । तथा पुनः कारणान्तरस्थापितमप्राप्तवयसं गुरुं प्रति अयं डहरः अप्राप्तवयाः खलु अयम् । तथा अयं गुरुः अल्पश्रुतः अनधीतसिद्धान्त इति ज्ञात्वा । हीलयन्ति । किं कुर्वन्तो हीलयन्ति । मिथ्यात्वं प्रतिपद्यमानाः । गुरुर्न हीलनीय इति तत्त्वम् अन्यथा जानन्तः । अतो गुरोर्हीलना न कार्या इत्याह ॥ २ ॥

---

( टीका ) किं च । जे आवि त्ति सूत्रम् । अस्य व्याख्या । ये चापि के चन द्रव्यसाधवोऽगम्भीराः । किमित्याह । मन्द इति गुरुं विदित्वा क्षयोपशमवैचित्र्यात्तन्त्रयुक्त्यालोचनासमर्थः सत्प्रज्ञाविकल इति स्वमाचार्यं ज्ञात्वा । तथा कारणान्तरस्थापितमप्राप्तवयसं डहरोऽयमप्राप्तवयाः खल्वयं तथा अल्पश्रुत इत्यनधीतागम इति विज्ञाय । किमित्याह । हीलयन्ति सूययासूयया वा खिंसयन्ति । सूययातिप्रज्ञस्त्वं वयोवृद्धो वहुश्रुत इति । असूयया तु मन्दप्रज्ञस्त्वमित्याद्यभिदधति । मिथ्यात्वं प्रतिपद्यमाना इति गुरुर्न हीलनीय इति तत्त्वमन्यथावगच्छन्तः कुर्वन्त्याशातनां लघुतापादनरूपां ते द्रव्यसाधवः गुरूणामाचार्याणां तत्स्थापनाया अवहुमानेन एकगुर्वाशातनायां सर्वेषामाशातनेति वहुवचनम् । अथवा कुर्वन्त्याशातनां स्वसम्यग्दर्शनादिभावापह्रासरूपां ते गुरूणां संवन्धिनीं तन्निमित्तत्वादिति सूत्रार्थः ॥ २ ॥

पगईइ मंदा वि भवंति एगे, डहरा वि अ जे सुअवुद्धोववेआ ॥
आयारमंतो गुणसुठिअप्पा, जे हीलिआ सिहिरिव भास कुज्जा ॥३॥

---

( अवचूरिः ) प्रकृत्या स्वभावेन मन्दा अपि सद्बुद्धिरहिता अपि लघवोऽपि चान्येऽमन्दाः सत्प्रज्ञा अपि । भवन्ति इति वाक्यशेषः । किंविशिष्टाः । ये श्रुतबुद्ध्युपेता ज्ञानाद्याचारवन्तः। गुणसुस्थितात्मानः संग्रहादिषु गुणेषु सुष्ठु सारं स्थित आत्मा ये-

षां ते तथा । तथाविधा न हीलनीयाः । ये हीलिताः खिंसिताः शिखीवाग्निरिवेन्धनसंघातं नस्मसात् कुर्युः । ज्ञानादिगुणसंघातमपनयेयुः ॥ ३ ॥

(अर्थ.) माटे गुरुनी हीलना विगेरे न करवी एम कहे ठे. पगइ इत्यादि सूत्र. (एगे के०) एके एटले केटला एक वयोवृद्ध साधुर्ज (पगईइ के०) प्रकृत्या एटले कर्मनी विचित्रताथी बनेला स्वनाव वडे (मंदा वि के०) मन्दा अपि एटले सारी बुद्धिथी रहित एवा पण (नवंति के०) नवन्ति एटले होय ठे. तेमज (जे के०) ये एटले जे केटला एक साधुर्ज (डहरा वि के०) डहरा अपि एटले वयथी न्हाना होय तो पण (सुअबुद्धोववेआ के०) श्रुतबुद्ध्युपेताः एटले श्रुत अने बुद्धिवडे युक्त एवा (नवंति के०) नवन्ति एटले होय ठे. (आयारमंता के०) आचारवन्तः एटले ज्ञानाचार प्रमुखने सम्यक् प्रकारे पालनारा एवा तथा (गुणसुठिअप्पा के०) गुणसुस्थितात्मानः एटले गुणोने विषे स्थिर रह्यो ठे आत्मा जेमनो एवा (जे के०) ये एटले उपर कहेला जे साधुर्ज (हीलिआ के०) हीलिताः एटले हीलना कस्या ठता (सिहिरिव के०) शिखीव एटले अग्निनी पेठे अर्थात् अग्नि जेम काष्ठसमुदायनुं नस्म करे ठे, तेम ते साधुर्ज हीलना करनार शिष्यना ज्ञानादि गुण समुदायनुं (नास के०) नस्म एटले नस्म (कुज्जा के०) कुर्युः एटले करे ठे. माटे तेमनी हीलना न करवी. ॥ ३ ॥

(दीपिका.) ये साधवस्ते गुरून् प्रति एवं जानन्ति प्ररूपयन्ति । परं न तु हीलयन्ति । एवं किमित्याह । एके केचन वयोवृद्धाः प्रकृत्या स्वनावेन कर्मवैचित्र्यात् मन्दा अपि सद्बुद्धिरहिता अपि नवन्ति । तथा अन्ये केचन डहरा अपि अपरिणता अपि वयसा अमन्दा नवन्ति वाक्यशेषः । किंविशिष्टा इत्याह । ये श्रुतबुद्ध्या उपेताः सहिताः । तथा सत्प्रज्ञावन्तः । श्रुतेन बुद्धिनावेन वा नाविनीं वृत्तिमाश्रित्य अल्पश्रुता अपि सर्वथा आचारवन्तो ज्ञानाद्याचारसहिताः । पुनः किंविशिष्टाः । गुणसुस्थितात्मानः। गुणेषु सुष्ठु नावसारं स्थित आत्मा येषां ते तथाविधा न हीलनीयाः। ये हीलिताः खिंसिताः शिखीव अग्निरिव इन्धनसमूहं नस्मसात् कुर्युः। ज्ञानादिगुणसमूहमपनयेयुरिति ॥ ३ ॥

(टीका.) अतो न कार्या हीलनेत्याह च । पगइ त्ति सूत्रम् । प्रकृत्या स्वनावेन कर्मवैचित्र्यान्मन्दा अपि सद्बुद्धिरहिता अपि नवन्त्येके केचन वयोवृद्धा अपि। तथा डहरा अपि चापरिणता अपि च वयसान्येऽमन्दा नवन्तीति वाक्यशेषः । किंविशिष्टा इत्याह। ये च श्रुतबुद्ध्युपेतास्तथा सत्प्रज्ञावन्तः । श्रुतेन बुद्धिनावेन वा ना-

विनीं वृत्तिमाश्रित्याल्पश्रुता इति सर्वथा आचारवन्तो ज्ञानाद्याचारसमन्विता गुणसुस्थितात्मानो गुणेषु संग्रहोपग्रहादिषु सुष्टु जावसारं स्थित आत्मा येषां ते तथाविधा न हीलनीयाः। ये हीलिताः खिंसिताः शिखीवाग्निरिवेन्धनसंघातं जस्मसात्कुर्युर्ज्ञानादिगुणसंघातमपनयेयुरिति सूत्रार्थः ॥ ३ ॥

जे आवि नागं मदरं ति नच्चा, आसायए से अहिआय होइ ॥
एवायरिअंपि हु हीलयंतो, निअच्छई जाइपहं खु मंदो ॥ ४ ॥

---

( अवचूरिः ) विशेषेण मुहरहीलनादोषमाह। अत्रैव दृष्टान्तदार्ष्टान्तिकयोर्महदन्तरमाह । यश्चापि कश्चिदपि नागं मुहरं बालमिति ज्ञात्वा आशातयति किलिश्चादिना कदर्थयति। स कदर्थ्यमानो नागः से तस्य कदर्थकस्याहिताय जवति । जक्षणेन प्राणनाशाय स्यात् । एवमाचार्यमपि कारणतोऽपरिणतमेव स्थापितं हीलयन् निर्गच्छति जातिपन्थानं द्वीन्द्रियादिजातिमार्गम्। मन्दोऽज्ञः संसारं जमतीत्यर्थः ॥ ४ ॥

---

( अर्थ. ) हवे कांइ तेवाज कारणथी पाटे बेठेला न्हानी वयना साधुनी हीलना करवामां बहु दोष छे एम कहे छे. जे आवि इत्यादि सूत्र. ( जे आवि के० ) यश्चापि एटले जे कोइ अज्ञ पुरुष ( नागं के० ) नागं एटले सर्पने ( मुहरत्ति के० ) मुहर इति एटले न्हानो छे एम ( नच्चा के० ) ज्ञात्वा एटले जाणीने ( आसायए के० ) आशातयति एटले सली प्रमुखथी तेने पीडा करे, ( स के० ) सः एटले ते पीडा पामेलो सर्प ( से के० ) तस्य एटले ते पीडा आपनार पुरुषने ( अहिआय के० ) अहिताय एटले अहितने अर्थे ( होइ के० ) जवति एटले थाय छे, अर्थात् ते सर्प ते पुरुषने दंशादिक करे छे. ( एव के० ) एवं एटले आ रीते ( आयरिअं पि के० ) आचार्यमपि एटले कारणथी न्हानी उमरे पाटे बेसाडेला आचार्यनी पण ( हीलयंतो के० ) हीलयन् एटले हीलना करनार एवो ( मंदे के० ) मन्दः एटले अज्ञ पुरुष जे ते ( खु के० ) खलु एटले निश्चये करीने ( जाइपहं के० ) जातिपथं एटले बेरिंद्री प्रमुख प्राणिनी जातिना मार्ग प्रत्ये ( निअछइ के० ) निर्गछति एटले जाय छे. अर्थात् संसारमां परिभ्रमण करे छे. ॥ ४ ॥

---

( दीपिका. ) अथ विशेषेण मुहरस्य हीलने दोषमाह । यश्चापि कश्चिदज्ञो नागं सर्पं मुहर इति बाल इति ज्ञात्वा आशातयति कुड्डकाष्टादिना कदर्थयति। स नागः कदर्थ्यमानः से तस्य कदर्थनाकारकस्य अहिताय जवति। जक्षणेन प्राणनाशनात्। एष दृष्टान्तः। अथोपनयः । एवमाचार्यमपि कारणतः अपरिणतमेव स्थापितं हीलयन्

निर्गछति जातिपन्थानं द्वीन्द्रियादिजातिमार्गं मन्दोऽज्ञः संसारे परिभ्रमति ॥ ४ ॥

( टीका. ) विशेषेण रुहरहीलनादोषमाह । जे आवि त्ति सूत्रम् । यश्चापि कश्चि-दज्ञो नागं सर्पं रुहर इति बाल इति ज्ञात्वा विज्ञाय आशातयति किलिश्चादिना कदर्थयति । स कदर्थ्यमानो नागः से तस्य कदर्थकस्य अहिताय भवति । भक्षणेन प्राणनाशाय भवति । एष दृष्टान्तोऽयमर्थोपनय एवमाचार्यमपि कारणतोऽपरिणतमेव स्थापितं हीलयन् निर्गछति जातिपन्थानं द्वीन्द्रियादिजातिमार्गम् । मन्दोऽज्ञः संसारे परिभ्रमतीति सूत्रार्थः ॥ ४ ॥

आसीविसो वा वि परं सुरुठो, किं जीवनासाउ परं नु कुज्जा ॥
आयरिअपाया पुण अप्पसन्ना, अबोहिआसायण नत्थि मुरको ॥ ५ ॥

( अवचूरिः ) आशीविषश्चापि सर्पः परं सुरुष्टः सन् किं जीवितनाशात्परं कुर्यात् । न किंचिदपि। आचार्यपादाः पुनरप्रसन्नाः । किं कुर्वन्तीत्याह । अबोधिं मिथ्यात्वम् । यतश्चैवमत आशातनया गुरोर्नास्ति मोक्षः ॥ ५ ॥

( अर्थ. ) उपर कहेल दृष्टांतमां अने दार्ष्टांतिकमां घणो फेर छे एम कहे छे. आसीविसो इत्यादि सूत्र. ( परं के० ) परं एटले अतिशय ( सुरुठो के० ) सुरुष्टः एटले घणो रोष ( क्रोध ) पामेलो एवो ( आसीविसो वा वि के० ) आशीविषो वापि एटले सर्प पण ( जीवनासाउ के० ) जीवनाशात्तु एटले प्राणना नाश करतां ( परं के० ) परं एटले वधारे ( किं नु कुज्जा के० ) किं नु कुर्यात् एटले शुं करे ? अर्थात् सर्प घणो क्रोधी थाय तो प्राण लिये, पण ए करता वधारे शुं करे ? ( पुण के० ) पुनः एटले परंतु ( आयरिअपाया के० ) आचार्यपादाः एटले परम पुज्य एवा आचार्य जे ते ( अप्पसन्ना के० ) अप्रसन्नाः एटले हीलना करवाथी खपा थया होय तो ( अबोहि के० ) अबोधिं एटले मिथ्यात्वनी परंपरा प्रत्ये करे छे. माटे ( आसायण के० ) आशातनया एटले गुरुनी आशातना करे तो ( मुरको के० ) मोक्षः एटले मोक्ष जे ते ( नत्थि के० ) नास्ति एटले नथी. ॥ ५ ॥

( दीपिका. ) अत्र दृष्टान्तस्य दार्ष्टान्तिकस्य च महदन्तरमिति एतदेवाह । आशीविषश्चापि सर्पोऽपि परं सुरुष्टः सन् क्रुद्धः सन् । किं जीवितनाशात् मृत्योः परं नु कुर्यात् । न किंचिदपीत्यर्थः । आचार्यपादाः पुनः अप्रसन्ना हीलनया अनुग्रहाय अप्रवृत्ताः । किं कुर्वन्तीत्याह । अबोधिं निमित्तहेतुत्वेन मिथ्यात्वसंहतिं कुर्वन्ति । कथम् ।

तदाशातनया मिथ्यात्वबन्धात्। यतश्च एवमतः गुरोः आशातनया नास्ति मोक्षः। अबोधिसंतानबन्धेन अनन्तसंसारिकत्वादिति ॥ ५ ॥

( टीका. ) अत्रैव दृष्टान्तदार्ष्टान्तिकयोर्महदन्तरमित्येतदाह। आसि त्ति सूत्रम्। आशीविषश्चापि सर्पोऽपि परं सुरुष्टः सुक्रुद्धः सन् किं जीवितनाशान्मृत्योः परं कुर्यान्न किंचिदपीत्यर्थः। आचार्यपादाः पुनरप्रसन्ना हीलनयानुग्रहे प्रवृत्ताः। किं कुर्वन्तीत्याह। अबोधिं निमित्तहेतुत्वेन मिथ्यात्वसंहतिं तदाशातनया मिथ्यात्वबन्धात्। यतश्चैवमत आशातनया गुरोर्नास्ति मोक्ष इति। अबोधिसंतानानुबन्धेनानन्तसंसारिकत्वादिति सूत्रार्थः ॥ ५ ॥

जो पावगं जलिअमवक्कमिज्जा, आसीविसं वा वि हु कोवइज्जा ॥
जो वा विसं खायइ जीविअट्ठी, एसोवमासायणया गुरूणं ॥ ६ ॥

( अवचूरिः ) पावकं ज्वलितं सन्तमवक्रामेत अवष्टभ्य तिष्ठेत्। आशीविषं वापि हि कोपयेत्। रोषं ग्राहयेद्यो वा विषं खादति जीवितार्थी एषोपमापायप्राप्तिं प्रत्येतदुपमानमाशातनया कृतया गुरूणां संबन्धिन्या तद्वदपायो भवतीति ॥ ६ ॥

( अर्थ. ) वली जो पावगं इत्यादि सूत्र. ( जो के० )यः एटले जे पुरुष ( जलिअं के० ) ज्वलितं एटले देदीप्यमान एवा ( पावगं के० ) पावकं एटले अग्नि प्रत्ये ( अवक्कमिज्जा के० ) अपक्रामेत् एटले वलगी रहे. ( वा के० ) वा एटले अथवा जे पुरुष ( आसीविसं वि के० ) आशीविषमपि एटले सर्पने पण ( हु के० ) खलु एटले निश्चये करीने ( कोवइज्जा के० ) कोपयेत् एटले क्रोध पमाडे, खीजावे. ( वा के० ) वा एटले अथवा ( जीविअट्ठी के० ) जीवितार्थी एटले जीववानी इच्छा करनार एवो ( जो के० ) यः एटले जे पुरुष ( विसं के० ) विषं एटले विष प्रत्ये ( खायइ के० ) खादति एटले खाय. ( गुरूणं के० ) गुरूणां एटले गुरुजनी ( आसायणया के० ) आशातनया एटले आशातना करी होय तो ( एसोवमा के० ) एषोपमा एटले आ उपर कहेल उपमा ( दाखलो ) जाणवी. ॥ ६ ॥

( दीपिका. ) पुनराह। यः कोऽपि पावकमग्निं ज्वलितं सन्तमपक्रामेत् अवष्टभ्य तिष्ठति। आशीविषं वापि भुजंगमं वापि कोपयेत् रोषं ग्राहयेत्। यो वा विषं खादति जीवितार्थी जीवितुकामः। एषा उपमा अपायस्य कष्टस्य प्राप्तिं प्रति एतदुपमानमाशातनया गुरुणां संबन्धिन्या कृतया। तद्वत् कष्टं भवतीति ॥ ६ ॥

( टीका. ) किं च। जो पावगं ति सूत्रम्। यः पावकमग्निं ज्वलितं सन्तमपक्रा-

मेदवष्टन्य तिष्ठति। आशीविषं वापि हि भुजंगमं वापि हि कोपयेत्। रोषं ग्राहयेत्। यो वा विषं खादति। जीवितार्थी जीवितुकामः। एषोपमापायप्राप्तिं प्रत्येतद्गुपमानम्। आशातनया कृतया गुरूणां संबन्धिन्या। तद्वदपायो भवतीति सूत्रार्थः॥ ६॥

सिआ हु से पावय नो डहिज्जा, असीविसो वा कुविउ न भक्खे॥
सिआ विसं हालहलं न मारे, न आ वि मुक्को गुरुहीलणाए॥ ७॥

---

(अवचूरिः) अत्र विशेषमाह। स्यात्कदाचित् मन्त्रादिप्रतिबन्धादसौ पावको न दहेत्। आशीविषो वा कुपितो न भक्षयेत्। स्यात्कदाचिद्विषं हालाहलं न मारयेत्। नचापि मोक्षो गुरोर्हीलनयाशातनया कृतया भवतीति॥ ७॥

---

(अर्थ.) हवे एमां पण विशेष कहे छे. सिआ इत्यादि सूत्र. (सिआ के०) स्यात् एटले कदाच (से के०) सः एटले ते (पावय के०) पावकः एटले अग्नि जे ते मंत्रादिकना प्रभावथी (हु के०) खलु एटले निश्चये करीने (नो डहिज्जा के०) नो दहेत् एटले बाले नहि. (वा के०) वा एटले अथवा (कुविउ के०) कुपितः एटले क्रोध पामेलो एवो (आसीविसो के०) आशीविषः एटले सर्प जे ते (न भक्के के०) न भक्षयेत् एटले भक्षण करे नहि. (वि के०) अपि एटले तेमज (से के०) तत् एटले ते घणुं आकरुं एवुं (हालहलं के०) हालाहलं एटले हालाहल नामक विष जे ते (मंत्रादिकना प्रभावथीज) (सिआ के०) स्यात् एटले कदाच (न मारे के०) न मारयेत् एटले मरण आपे नहि. उपर कहेली वात कदाच बने, पण (गुरुहीलणाए के०) गुरुहीलनया एटले गुरुमहाराजनी हीलना करी होय तो तेनुं फल भोगव्या विना (न आवि मुक्को के०) न चापि मोक्षः एटले बुटको नथी. ॥ ७॥

---

(दीपिका.) तत्र विशेषमाह। स्यात्कदाचिन्मन्त्रादिप्रतिबन्धात् असौ पावकः अग्निः न दहति न भस्मसात् कुर्यात्। आशीविषो वा भुजङ्गो वा कुपितो न भक्षयेत् न खादयेत्। तथा कदाचिन्मन्त्रादिप्रतिबन्धादेव विषं हालाहलमतिरौद्रं न मारयेत् न प्राणान् त्याजयेत्। एवमेतत्कदाचिद्भवति परं नापि मोक्षो गुरुहीलनया गुरोः आशातनया भवतीति॥ ७॥

---

(टीका.) अत्र विशेषमाह। सिआ हु त्ति सूत्रम्। स्यात् कदाचिन्मन्त्रादिप्रतिबन्धादसौ पावकोऽग्निर्नदहेत् न भस्मसात्कुर्यात्। आशीविषो वा भुजंगो वा कुपितो न भक्षयेत् न खादयेत्। तथा स्यात्कदाचिन्मन्त्रादिप्रतिबन्धादेव विषं हालाहलमतिरौद्रं

न मारयेत्। न प्राणानां त्यागं कारयेत्। एवमेतत्कदाचिद्भवति। नचापि मोक्षो गुरुहीलनया गुरोराशातनया कृतया भवतीति सूत्रार्थः॥ ७॥

जो पव्वयं सिरसा भित्तुमिछे, सुत्तं व सीहं पडिबोहइज्जा॥
जो वा दए सत्तिअग्गे पहारं, एसोवमासायणया गुरूणं॥ ८॥

(अवचूरिः) यः पर्वतं शिरसा मस्तकेन भेत्तुमिछेत्। सुप्तं वा सिंहं प्रतिबोधयेत्। यो वा ददाति शक्त्यग्रे प्रहरणविशेषाग्रे प्रहारं हस्तेन। एषोपमाशातनया गुरूणामिति॥ ८॥

(अर्थ.) वळी जो पव्वयं इत्यादि सूत्र. (जो के०) यः एटले जे पुरुष (पव्वयं के०) पर्वतं एटले पर्वत प्रत्ये (सिरसा के०) शिरसा एटले पोताना मस्तक वडे (भेत्तुं के०) भेत्तुं एटले भांगी नाखवाने (इछे के०) इछेत् एटले इछे. अर्थात् कोइ पुरुष माथानी टक्करथी पर्वतना कटका करवाने चाहे. (व के०) वा एटले अथवा कोइ पुरुष (सुत्तं के०) सुप्तं एटले सुतेला एवा (सीहं के०) सिंहं एटले सिंह प्रत्ये (पडिबोहइज्जा के०) प्रतिबोधयेत् एटले जाग्रत करे. (वा के०) अथवा (जो के०) यः एटले जे कोइ पण पुरुष (सत्तिअग्गे के०) शक्त्यग्रे एटले शक्ति नामक आयुधनी धाराउपर (पहारं के०) प्रहारं एटले पोताना हाथनो प्रहार करे, अर्थात् पोतानो हाथ जोरथी पछाडे. ते, (गुरुणं के०) गुरुणां एटले गुरुउनी (आसायणया के०) आशातनया एटले आशातना करी होय तो (एसोवमा के०) एषोपमा एटले आ उपर कहेली उपमा (दृष्टांत) जाणवी.॥ ८॥

(दीपिका.) पुनः किंच। यः पर्वतं शिरसा मस्तकेन भेत्तुंमिछेत्। सुप्तं वा सिंहं गिरिगुहायां प्रतिबोधयेत्। यो वा ददाति शक्तेः अग्रे प्रहरणविशेषाग्रे प्रहारं हस्तेन एषा उपमा आशातनया गुरूणाम्॥ ८॥

(टीका.) किंच। जो पव्वयं ति सूत्रम्। यः पर्वतं शिरसोत्तमाङ्गेन भेत्तुमिछेत्। सुप्तं वा सिंहं गिरिगुहायां प्रतिबोधयेत्। यो वा ददाति शक्त्यग्रे प्रहरणविशेषाग्रे प्रहारं हस्तेन। एषोपमाशातनया गुरूणामिति पूर्ववदेवेति सूत्रार्थः॥ ८॥

सिआ हु सीसेण गिरिं पि भिंदे, सिआ हु सीहो कुविन न भक्खे॥
सिआ न भिंदिज्ज व सत्तिअग्गं, न आवि मुक्खो गुरुहीलणाए॥ ए॥

(अवचूरिः) अत्रापि विशेषमाह। स्यात्कदाचिद्वासुदेवादिः प्रभावातिशयात् शिरसा गिरिमपि भिन्द्यात्। स्यान्मन्त्रादिसामर्थ्यात्सिंहः कुपितो न भक्षयेत्। स्या-

द्देवतानुग्रहादेर्न भिन्द्याद्वा शक्त्यग्रं प्रहारे दत्तेऽप्येवमेतत्कदाचिद्भवति। न चापि मो
गुरुहीलनया गुरोराशातनया भवतीति ॥ ए ॥

---

(अर्थ.) एमां विशेष कहे छे. सिश्रा इत्यादि सूत्र. वासुदेव प्रमुख पुरुष जे
( सिश्रा के० ) स्यात् एटले कदाच ( हु के० ) खलु एटले निश्चये करीने ( सीसे
के० ) शीर्षेण एटले मस्तक वडे ( गिरिं पि के० ) गिरिमपि एटले पर्वतने पण
ताना प्रभावथी ( भिंदे के० ) भिन्द्यात् एटले भांगी नाखे. तथा ( सिश्रा के०
स्यात् एटले कदाचित् अर्थात् मंत्रादिकना सामर्थ्यथी ( कुविश्रो के० ) कुपितः
टले क्रोधी थएलो एवो ( सीहो के० ) सिंहः एटले सिंह जे ते ( हु के० ) ख
एटले निश्चये करीने ( न भक्खे के० ) न भक्षयेत् एटले भक्षण न करे. ( वा के०
अथवा ( सिश्रा के० ) स्यात् एटले कदाच देवतादिकना अनुग्रहथी ( सत्तिअ
के० ) शक्त्यग्रं एटले शक्ति नामक आयुधनी धारा प्रहार करे छते पण ( नभिंि
ज्जा के० ) न भिन्द्यात् एटले शरीरादिकने भेदे नहि. आ वात कदाच बने. पण (
आ वि मुक्खो गुरुहीलणाए के० ) न चापि मोक्षो गुरुहीलनया एटले गुरुनी हील
करी होय तो तेनुं फल भोगव्या विना छुटको नथी. ॥ ए ॥

---

( दीपिका. ) अत्र विशेषमाह । स्यात्कदाचित् कश्चिद् वासुदेवादिः प्रभाव
तिशयात् शिरसा मस्तकेन गिरिमपि पर्वतमपि भिन्द्यात् । स्यात्कदाचित् मन्त्रा
सामर्थ्यात्सिंहः कुपितो न भक्षयेत् । स्यात्कदाचित् देवतानुग्रहादिना शक्त्यग्रं प्रहा
दत्तेऽपि न भिंद्यात् । एवमेतत् कदाचिद् भवति । परं न चापि मोक्षो गुरुहीलनय
गुरोराशातनया भवतीति ॥ ए ॥

---

( टीका.) अत्र विशेषमाह । सिश्रा हु त्ति सूत्रम् । स्यात्कदाचित्कश्चिद्वासुदेवा
प्रभावातिशयाच्छिरसा गिरिमपि पर्वतमपि भिन्द्यात् स्यान्मन्त्रादिसामर्थ्यात्सिंहः कु
पितो न भक्षयेत् । स्याद्देवतानुग्रहादेर्न भिन्द्याद्वा शक्त्यग्रं प्रहारे दत्तेऽपि । एवमेतत्क
दाचिद्भवति । न चापि मोक्षो गुरुहीलनया गुरोराशातनया भवतीति सूत्रार्थः ॥ ए

आयरिअपाया पुण अप्पसन्ना, अबोहिआसायण नत्थि मुक्खो ॥
तम्हा अणाबाहसुहाभिकंखी, गुरुप्पसायाभिमुहो रमिज्जा ॥ १० ॥

---

( अवचूरिः ) एवं पावकाद्याशातनाल्पा । गुर्वाशातना तु महतीति प्रदर्शना
र्थमाह । आचार्यपादाः पुनरप्रसन्ना इत्यादि पूर्ववत् । यस्मादेवं तस्यादेवानाबा

धसुखाभिकाङ्क्षी मोक्षसुखाभिलाषी स साधुर्गुरुप्रसादाभिमुखः आचार्यादिप्रसाद उद्युक्तः सन् रमेत वर्त्तेत ॥ १० ॥

( अर्थ. ) अग्नि प्रमुखनी आशातना करतां गुरुनी आशातना मोटी छे. एज देखाडवाने अर्थे कहे छे. आयरिअ इत्यादि सूत्र. "आयरिअपाया पुण अप्पसन्ना अबोहि आसायण नत्थि मोक्खो" एनो अर्थ पांचमी गाथाना उत्तरार्ध माफक जाणवो. ( तम्हा के० ) तस्मात् एटले जे कारण माटे एम छे ते कारण माटे ( अणाबाहसुहाभिकंखी के० ) अनाबाधसुखाभिकाङ्क्षी एटले मोक्षसुखनी इच्छा करनार पुरुष जे ते ( गुरुप्पसायाभिमुहो के० ) गुरुप्रसादाभिमुखः एटले गुरुनी प्रसन्नता राखवाने उद्यमवंत एवो ( रमिज्जा के० ) रमेत एटले रहे. ॥ १० ॥

( दीपिका. ) एवं पावकाशातना अल्पा। गुर्वाशातना महतीति अतिशयप्रदर्शनार्थमाह । आचार्यपादाः पुनः अप्रसन्ना इत्यादि पदद्वयव्याख्या पूर्ववत् । यस्मात् एवं तस्मात् अनाबाधसुखाभिकाङ्क्षी मोक्षसुखाभिलाषी । साधुर्गुरुप्रसादाभिमुखः आचार्यादीनां प्रसाद उद्युक्तः सन् रमेत ॥ १० ॥

( टीका. ) एवं पावकाद्याशातनाया गुर्वाद्याशातना महतीत्यतिशयप्रदर्शनार्थमाह । आयरिअ त्ति सूत्रम् । आचार्यपादाः पुनरप्रसन्ना इत्यादिः पूर्वार्धः पूर्ववत् । यस्मादेवं तस्मादनाबाधसुखाभिकाङ्क्षी मोक्षसुखाभिलाषी साधुः गुरुप्रसादाभिमुखः । आचार्यादिप्रसाद उद्युक्तः सन् रमेत वर्तेत इति सूत्रार्थः ॥ १० ॥

जहाहिअग्गीजलणं नमंसे, नाणाहुईमंतपयाभिसित्तं ॥
एवायरिअं उवचिठइज्जा, अणंतनाणोवगओ वि संतो ॥ ११ ॥

( अवचूरिः ) केन प्रकारेणेत्याह । यथाहिताग्निर्ज्वलनोपस्कारी ब्राह्मणो ज्वलनं नमस्यति । नानाहुतयो घृताद्याः । मन्त्रपदानि 'अग्नये स्वाहा' इत्यादीनि । तैरभिसंस्कृतं दीक्षाभिषिक्तमित्यर्थः । एवमग्निमिवाचार्यमुपतिष्ठेत् सेवेत । अनन्तज्ञानोपगतोऽपि सन् ॥ ११ ॥

( अर्थ. ) हवे शी रीते उद्यमवंत रहे ते कहे छे. जहा इत्यादि सूत्र. ( जहा के० ) यथा एटले जेम ( आहिअग्गी के० ) आहिताग्निः एटले स्थापन कर्या छे अग्नि जेणे एवो ब्राह्मण जे ते ( नाणाहुइमंतपयाभिसित्तं के० ) नानाहुतिमन्त्रपदाभिषिक्तं एटले घृतादिकनी नानाविध आहुति अने मंत्रना पद वडे संस्कारवालो करेलो एवा ( अग्गिं के० ) अग्निं एटले अग्नि प्रत्ये ( नमंसे के० ) नमस्यति एटले

पूजा करे ळे. ( एव के० ) एवं एटले उपर कहेलो ब्राह्मण जेम अग्निनी पूजा करे ळे, तेम साधु जे ते ( अणंतनाणोवगर्ज वि संतो के० ) अनन्तज्ञानोपगतोऽपि सन् एटले स्वपरपर्यायसहित वस्तुने विषय करनारुं माटे ज अनंत एवा ज्ञाने करी युक्त होय तो पण ( आयरिअं के० ) आचार्यं एटले आचार्य प्रत्ये ( उवचिठइज्जा के० ) उपतिष्ठेत् एटले विनयथी सेवे. ॥ ११ ॥

---

( दीपिका. ) केन प्रकारेण रमेत इत्याह । आहिताग्निः कृतावसथादिर्ब्राह्मणो येन प्रकारेण ज्वलनमग्निं नमस्यति । किंभूतं ज्वलनम् । नानाहुतिमन्त्रपदाभिषिक्तम् । तत्र आहुतयो घृतप्रक्षेपादिरूपाः । मन्त्रपदानि ' अग्नये स्वाहा ' इत्येवमादीनि । तैः आहुतिमन्त्रपदैः अभिषिक्तं दीक्षालंकृतमित्यर्थः । एवमग्निमिव आचार्यं विनीतः साधुः उपतिष्ठेत् विनयेन सेवेत । किंभूतः साधुः । अनन्तज्ञानोपगतोऽपि । अनन्तं स्वपरपर्यायापेक्षया वस्तु ज्ञायते येन तत् अनन्तं तेन उपगतः सहितोऽपि सन् किमङ्ग पुनः अन्य इति ॥ ११ ॥

---

( टीका ) केन प्रकारेणेत्याह । जहाहिअग्गि त्ति सूत्रम् । यथाहिताग्निः कृतावसथादिर्ब्राह्मणो ज्वलनमग्निं नमस्यति । किंविशिष्टमित्याह । नानाहुतिमन्त्रपदाभिषिक्तम् । तत्राहुतयो घृतप्रक्षेपादिलक्षणा मन्त्रपदान्यग्नये स्वाहेत्येवमादीनि । तैरभिषिक्तं दीक्षासंस्कृतमित्यर्थः । एवमग्निमिवाचार्यमुपतिष्ठेत् विनयेन सेवेत । किंविशिष्ट इत्याह । अनन्तज्ञानोपगतोऽपीत्यनन्तं स्वपरपर्यायापेक्षया वस्तु ज्ञायते येन तदनन्तज्ञानं तडुपगतोऽपि सन् । किमङ्ग पुनरन्य इति सूत्रार्थः ॥ ११ ॥

जस्संतिए धम्मपयाइ सिक्खे, तस्संतिए वेणइयं पउंजे ॥
सक्कारए सिरसा पंजलीउ, कायग्गिरा नो मणसा अ निच्चं ॥ १२ ॥

---

( अवचूरिः ) एतदेवाह । यस्यान्तिके धर्मपदानि सिद्धान्तपदानि शिक्षेत । तस्यान्तिके तत्समीपे । किमित्याह । वैनयिकं प्रयुञ्जीत । विनय एव वैनयिकं तत्कुर्यादिति नावः । कथमित्याह । सत्कारयेत् । अभ्युत्थानादिना शिरसोत्तमाङ्गेन प्राञ्जलिः प्रोज्झताञ्जलिः कायेन, वाचा मस्तकेन वन्द इत्यादिरूपया, मनसा नावप्रतिबन्धरूपेण नित्यं सत्कारयेत् न तु सूत्रग्रहणकाल एव ॥ १२ ॥

---

( अर्थ. ) एज स्पष्ट करे ळे. जस्संतिए इत्यादि सूत्र. साधु जे ते (जस्संतिए के०) यस्यान्तिके एटले जेनी पासे ( धम्मपयाइं के० ) धर्मपदानि एटले सिद्धांतनां पदो (सिक्खे के०) शिक्षेत एटले शीखे. (तस्संतिए के०) तस्यान्तिके एटले तेनी पासे (वेण-

इअं के०) वैनयिकं एटले विनय प्रत्ये (पउंजे के०) प्रयुञ्जीत एटले करे. शीरीते विनय करवो ते कहे छे. (नो के०) अरे शिष्य (पंजलीउं के०) प्राञ्जलिः एटले बे हाथ जोडीने (सिरसा के०) शिरसा एटले मस्तकवडे तथा (कायग्गिरा के०) कायेन गिरा एटले कायावडे अने "मत्थएण वंदामि" इत्यादि वाणीवडे तेमज (य के०) च एटले वली (मणसा के०) मनसा एटले भावयुक्त मनवडे (णिच्चं के०) नित्यं एटले नित्य अर्थात् केवल पाठ लेवाने समयेज नहि, तो सर्व कालनेविषे अध्यापक गुरुनो (सक्कारए के०) सत्कारयेत् एटले सत्कार करवो.॥ १२ ॥

(दीपिका.) एतदेव पुनः स्पष्टयति। साधुर्यस्य आचार्यादेः समीपे धर्मपदानि धर्मफलानि सिद्धान्तपदानि शिक्षेत आदद्यात्। तस्य आचार्यादेः अन्तिके समीपे विनयं प्रयुञ्जीत। विनय एव वैनयिकं तत्कुर्यादिति भावः। कथं विनयं कुर्यादित्याह। गुरुं सत्कारयेत्। केन। अभ्युत्थानादिना पूर्वोक्तेन युक्तः। पुनः शिरसा मस्तकेन प्राञ्जलिः सन्। तथा कायेन शरीरेण तथा गिरा वाचा 'मस्तकेन वन्द' इत्यादिरूपया। भो इति शिष्यस्य आमन्त्रणे। मनसा भावप्रतिबन्धरूपेण। नित्यं सदैव सत्कारयेत्। न तु सूत्रग्रहणकाल एव। कुशलानुबन्धच्छेदनप्रसंगात्। एवं च मनसि कुर्यात् ॥ १२ ॥

(टीका.) एतदेव स्पष्टयति। जस्स त्ति सूत्रम्। यस्यान्तिके यस्य समीपे धर्मपदानि धर्मफलानि सिद्धान्तपदानि शिक्षेतादद्यात्। तस्यान्तिके तत्समीपे। किमित्याह। वैनयिकं प्रयुञ्जीत। विनय एव वैनयिकं तत्कुर्यादिति भावः। कथमित्याह। सत्कारयेदभ्युत्थानादिना पूर्वोक्तेन। शिरसोत्तमाङ्गेन प्राञ्जलिः प्रोद्गताञ्जलिः सन् कायेन देहेन गिरा वाचा 'मस्तकेन वन्द' इत्यादिरूपया। भो इति शिष्यामन्त्रणम्। मनसा च भावप्रतिबन्धरूपेण नित्यं सदैव सत्कारयेत्। न तु सूत्रग्रहणकाल एव। कुशलानुबन्धव्यवच्छेदप्रसंगादिति सूत्रार्थः ॥ १२ ॥

लज्जा दया संजमबंभचेरं, कल्लाणभागिस्स विसोहिठाणं ॥
जे मे गुरू सययमणुसासयंति, तेहिं गुरू सययं पूअयामि ॥ १३ ॥

(अवचूरिः) एवं मनसि कुर्यादित्याह। लज्जापवादभयरूपा, दयानुकम्पा, संयमः पृथ्व्यादिविषयः। ब्रह्मचर्यं च। एतल्लज्जादि कल्याणभाजिनो मोक्षभाजिनो जीवस्य विशोधिस्थानं कर्ममलापनयनस्थानं वर्त्तते। अनेन ये मां गुरवः सततमनुशासयन्ति शिक्षयन्ति। तानहं गुरून् सततं पूजयामि ॥ १३ ॥

(अर्थ.) गुरुनी सेवा करता मनमां परिणाम केवा राखवा ते कहे छे. लज्जा इ-

त्यादि सूत्र. (कल्लाणभागिस्स के०) कल्याणभागिनः एटले शुभमार्गे चालनार होवाथी कल्याणनो भागी एवा साधुने (लज्जा के०) लज्जा एटले लोकापवादभयरूप लज्जा, (दया के०) दया एटले दया. (संजम के०) संयमः एटले षड्जीवनिकायनी यतना रूप संयम तथा (बंभचेरं के०) ब्रह्मचर्यं एटले विशुद्ध तपस्या प्रमुखनुं आचरण करवुं ते. आ सर्वे (विसोहिठाणं के०) विशोधिस्थानं एटले कर्मरूप मलने धोइ नाखनार एवुं छे. (जे के०) ये एटले जे (गुरू के०) गुरवः एटले गुरु जे ते (मे के०) मां एटले मने (सययं के०) सततं एटले निरंतर (अणुसासयंति के०) अनुशासयन्ति एटले कल्याण प्राप्तिने अर्थे शिखामण दे छे, (तेहिं के०) तान् एटले ते (गुरू के०) गुरून् एटले गुरु प्रत्ये (सययं के०) सततं एटले निरंतर (पूअयामि के०) पूजयामि एटले पूजुं छुं. ॥ १३ ॥

---

(दीपिका.) लज्जा, दया, संयमो, ब्रह्मचर्यं च एतच्चतुष्टयं कल्याणभागिनो मोक्षाभिलाषिणो जीवस्य विपक्षव्यावृत्त्या कुशलपक्षप्रवर्त्तकत्वेन च विशोधिस्थानं कर्ममलापनयनस्थानं वर्त्तते। तत्र लज्जा अपवादभयरूपा। दया अनुकम्पा। संयमः पृथिव्यादिविषयः। ब्रह्मचर्यं विशुद्धतपोऽनुष्ठानम्। एतत्कथनेन एतज्ज्ञातं। ये गुरवो मां सततं निरन्तरमनुशासयन्ति कल्याणयोग्यतां नयन्ति। तान् अहमेतादृशान् गुरून् सततं पूजयामि। न तेभ्यः अन्यः पूजायोग्य इति ॥ १३ ॥

---

(टीका.) एवं च मनसि कुर्यादित्याह। लज्जा दय त्ति सूत्रम्। लज्जा अपवादभयरूपा। दयानुकम्पा। संयमः पृथिव्यादिजीवविषयः। ब्रह्मचर्यं विशुद्धतपोऽनुष्ठानम्। एतल्लज्जादि विपक्षव्यावृत्त्या कुशलपक्षप्रवर्त्तकत्वेन कल्याणभागिनो जीवस्य विशोधिस्थानं कर्ममलापनयनस्थानं वर्त्तते। अनेन ये मां गुरव आचार्याः सततमनवरतमनुशासयन्ति कल्याणयोग्यतां नयन्ति। तानहमेवंभूतान् गुरून् सततं पूजयामि। न तेभ्योऽन्यः पूजार्ह इति सूत्रार्थः ॥ १३ ॥

जहा निसंते तवणच्चिमाली, पभासई केवलभारहं तु ॥
एवायरिउ सुअसीलबुद्धिए, विरायई सुरमझे व इंदो ॥ १४ ॥

---

(अवचूरिः) यथा निशान्ते रात्र्यवसाने दिवस इत्यर्थः। तपन्नर्चिर्माली सूर्यः प्रभासयत्युद्द्योतयति। केवलं संपूर्णं भारतम्। तुशब्दादन्यच्च। एवमाचार्यः। श्रुतेन, शीलेन परद्रोहविरतिरूपेण, बुद्ध्या च युक्तः सन् प्रकाशयति जीवादीन्। एवं वर्त्तमानः स साधुभिः परिवृतो विराजते सुरमध्य इवेन्द्रः ॥ १४ ॥

(अर्थ.) आ कारणथी पण ए गुरु अतिशय पूज्य छे, एम कहे छे. जहा इत्यादि सूत्र. (जहा के०) यथा एटले जेम (निसंते के०) निशान्ते एटले रात्रिनो अंत थए छते अर्थात् दिवसने विषे (तवणच्चिमाली के०) तपन्नर्चिर्माली एटले प्रकाश करतो एवो सूर्य जे ते (तु के०) निश्चये करीने (केवलभारहं के०) केवलभारतं एटले संपूर्ण भरत क्षेत्र प्रत्ये (पभासए के०) प्रभासयेत् एटले प्रकाशित करे छे. (एव के०) एवं एटले ए प्रकारे (आयरिउ के०) आचार्यः एटले आचार्य जे ते (सुअसीलबुद्धिए के०) श्रुतशीलबुद्ध्या एटले श्रुत ते आगम, शील ते पारकानुं मावुं करवानी इच्छा न राखवी ते अने बुद्धि ते स्वाभाविकबुद्धि ए त्रण वस्तुवडे, जीवादिपदार्थोने यथार्थपणे प्रकाशित करे छे. तथा (व के०) वा एटले जेम (सुरमझे के०) सुरमध्ये एटले देवताउमां (इंदो के०) इंद्रः एटले इंद्र शोभे छे, तेम साधुसमुदायमां (विरायई के०) विराजते एटले शोभे छे. ॥ १४ ॥

(दीपिका.) अतः कारणाद् एते पूज्या इत्याह। अर्चिर्माली सूर्यः निशान्ते रात्रेः अन्ते दिवस इत्यर्थः। केवलं संपूर्णं भारतं भरतक्षेत्रम्। तुशब्दादन्यच्च। क्रमेण प्रभासयति उद्द्योतयति। किं कुर्वन् अर्चिर्माली। तपन्। एवमाचार्यो जीवादिभावान् प्रकाशयति। किंभूत आचार्यः। श्रुतशीलबुद्धिकः। श्रुतेन आगमेन शीलेन परद्रोहविरमणेन बुद्ध्या च स्वाभाविक्या युक्तः सन्। एवं च वर्त्तमान आचार्यः साधुभिः परिवृतो विराजते। क इव। सुरमध्ये सामानिकादिदेवमध्ये गत इन्द्र इव ॥ १४ ॥

(टीका.) इतश्चैते पूज्या इत्याह। जह त्ति सूत्रम्। यथा निशान्ते रात्र्यवसाने दिवस इत्यर्थः। तपन्नर्चिर्माली सूर्यः प्रभासयत्युद्द्योतयति। केवलं संपूर्णं भारतं भरतक्षेत्रम्। तुशब्दादन्यच्च। क्रमेणैवमर्चिर्मालीवाचार्यः श्रुतेनागमेन शीलेन परद्रोहविरतिरूपेण बुद्ध्या च स्वाभाविक्या युक्तः सन् प्रकाशयति जीवादिभावानिति। एवं च वर्त्तमानः सुसाधुभिः परिवृतो विराजते। सुरमध्य इव सामानिकादिमध्यगत इव इन्द्र इति १४

जहा ससी कोमुइजोगजुत्तो, नक्खत्ततारागणपरिवुडप्पा ॥
खे सोहई विमले अब्भमुक्के, एवं गणी सोहइ भिक्खुमझे ॥ १५ ॥

(अवचूरिः) किंच। यथा शशी कौमुदीयोगयुक्तः। कार्त्तिकपौर्णमास्यामुदित इत्यर्थः। नक्षत्रतारागणपरिवृतात्मा तारादिभिर्वृत इत्यर्थः। ख आकाशे शोभते विमलेऽभ्रमुक्ते। एवं गणी आचार्यः शोभते भिक्षुमध्ये ॥ १५ ॥

(अर्थ.) वली जहा इत्यादि सूत्र. (जहा के०) यथा एटले जेम (कोमुइजो-

गजुत्तो के०) कौमुदीयोगयुक्तः एटले चंद्रिकाना (चन्नीना) योगे करीने युक्त अर्थात् कार्त्तिकी पूर्णिमानी रात्रिए ऊगेलो एवो (नरकत्तरागणपरिवुरूप्पा के०) नक्षत्रतारागणपरिवृतात्मा एटले नक्षत्रोना तथा ताराउंना समुदाय रूप परिवारे वीटायलो एवो (ससी के०) शशी एटले चंद्रमा जे ते (अप्पमुक्के के०) अन्नमुक्ते एटले निर्मल एवा (खे के०) खे एटले आकाशने विषे (सोहइ के०) शोनते एटले शोने बे. (एवं के०) एवं एटले ए प्रकारे (गणी के०) गणिः एटले आचार्य जे ते (निक्खुमक्षे के०) निक्षुमध्ये एटले साधुउंमां (सोहइ के०) शोनते एटले शोने बे. ॥१५॥

(दीपिका.) पुनराह । यथा चन्द्रः ख आकाशे शोनते । किंनूतः । कौमुदीयोगयुक्तः। कार्त्तिकपौर्णमास्यामुदितः । पुनः किंनूतः चन्द्रः । नक्षत्रतारागणपरिवृतात्मा। नक्षत्रैः ताराणां गणैर्वृन्दैर्युक्त इति नावः । किंनूते खे । अन्नमुक्ते। पुनः किंनूते खे। विमले निर्मले । अन्नमुक्तमाकाशमत्यन्तं निर्मलं नवतीति ख्यापनार्थम् । तदेवं चन्द्र इव गणी आचार्यः शोनते निक्षुमध्ये । अतोऽयं गुरुः महत्वात्पूज्य इति ॥ १५ ॥

(टीका.) किंच । जह त्ति सूत्रम् । यथा शशी चन्द्रः कौमुदीयोगयुक्तः कार्त्तिकपौर्णमास्यामुदित इत्यर्थः। स एव विशेष्यते । नक्षत्रतारागणपरिवृतात्मा नक्षत्रादिनिर्युक्त इति नावः । ख आकाशे शोनते । किंविशिष्टे खे । विमलेऽन्नमुक्ते । अन्नमुक्तमेवेदं विमलं नवतीति ख्यापनार्थमेतत्। एवं चन्द्र इव गण्याचार्यः शोनते निक्षुमध्ये साधुमध्ये । अतोऽयं महत्त्वात्पूज्य इति सूत्रार्थः ॥ १५ ॥

महागरा आयरिआ महेसी, समाहिजोगे सुअसीलबुद्धिए ॥
संपाविउकामे अणुत्तराइं, आराहए तोसइ धम्मकामी ॥ १६ ॥

(अवचूरिः) महाकरा ज्ञानादिनावरत्नाकरा महेषिणो मोक्षैकानिलाषिणः । कैः। समाधियोगश्रुतशीलबुद्धिनिः । समाधियोगैः । ध्यानविशेषैः। श्रुतेन द्वादशाङ्गान्यासेन। शीलेन सदाचाररूपेण। बुद्ध्या चौत्पत्तिक्यादिरूपया। अन्ये तु व्याचक्षते । श्रुतशीलबुद्धीनां महाकरा इति। तान् आचार्यान् संप्राप्तुकामोऽनुत्तराणि ज्ञानादीनि आराधयेद्विनयकरणेन। न सकृदेव । अपितु तोषयेदसकृत्करणेन धर्मकामो निर्जरार्थम् ॥ १६ ॥

(अर्थ.) वली महागरा इत्यादि सूत्र. (अणुत्तराइ के०) अनुत्तराणि एटले सर्वोत्कृष्ट एवा ज्ञानादि रत्नोनी (संपाविउकामे के०) संप्राप्तुकामः एटले प्राप्तिनी इच्छा करनार एवा साधु जे ते (महागरा के०) महाकरान् एटले ज्ञानादि रत्नोनी खा-

णरूप एवा तथा ( समाहिजोगेसुअसीलबुद्धिए के० ) समाधियोगश्रुतशीलबुद्धिभिः समाधियोग एटले समाधियोग नामक ध्यानवडे, श्रुत एटले द्वादशांगी रूप श्रुत वडे, शील एटले पारकुं मातुं करवानी इच्छा न राखवी तेवडे तथा बुद्धि एटले औत्पत्तिकी प्रमुख बुद्धिवडे ( महेसि के० ) महेषिणः एटले मोक्ष प्राप्तिने अर्थे उद्यमवंत एवा ( आयरिआ के० ) आचार्यान् एटले आचार्यप्रत्ये (आराहए के०) आराधयेत् एटले विनय प्रमुख करीने आराधे. केवल ज्ञान मेलववानी इच्छाथीज थोडीवार आचार्यनी आराधना करवी एम नथी. तो ( धम्मकामि के० ) धर्मकामी एटले कर्मनिर्जरानो हेतुभूत एवा धर्मनी इच्छा करनार साधु जे ते ( तोसय के० ) तोषयेत् एटले सतत सेवा करी आचार्यजीने प्रसन्न करे. ॥ १६ ॥

---

( दीपिका. ) पुनः किंच। धर्मकामो निर्जरार्थं। नतु ज्ञानफलापेक्षयापि। साधुः तान् आचार्यान् संप्राप्तुकामोऽनुत्तराणि ज्ञानादीनि आराधयेद् विनयकरणेन। न एकवारमेव। किंतु तोषयेद् वारंवारं विनयकरणेन संतोषं ग्राहयेत्। तान् कान् आचार्यान्। ये महाकराः। ज्ञानादिभावरत्नानामाकराः। पुनः किंभूता आचार्याः। महेषिणः मोक्षैषिणः। कथं महैषिणः। इत्याह। समाधियोगश्रुतशीलबुद्धिभिः। समाधियोगैर्ध्यानविशेषैः श्रुतेन द्वादशाङ्गाभिधानेन शीलेन परद्रोहविरतिरूपेण बुद्ध्या च औत्पत्तिक्यादिरूपया। अन्य आचार्या इदं व्याख्यानयन्ति। समाधियोगश्रुतशीलबुद्धीनामाकरा इति ॥ १६ ॥

---

( टीका. ) किंच। महागर त्ति सूत्रम्। महाकरा ज्ञानादिभावरत्नापेक्षया आचार्या महैषिणो मोक्षैषिणः। कथं महैषिण इत्याह। समाधियोगश्रुतशीलबुद्धिभिः। समाधियोगैर्ध्यानविशेषैः, श्रुतेन द्वादशाङ्गाभ्यासेन, शीलेन परद्रोहविरतिरूपेण, बुद्ध्या चौत्पत्तिक्यादिरूपया। अन्ये तु व्याचक्षते। समाधियोगश्रुतशीलबुद्धीनां महाकरा इति। तानेवंभूतानाचार्यान् संप्राप्तुकामोऽनुत्तराणि ज्ञानादीनि आराधयेद्विनयकरणेन। न सकृदेवापि तु तोषयेदसकृत्करणेन तोषं ग्राहयेत्। धर्मकामो निर्जरार्थं न तु ज्ञानादिफलापेक्षयापीति सूत्रार्थः ॥ १६ ॥

सुच्चा ण मेहावि सुभासिआइं, सुस्सूसए आयरिअप्पमत्तो ॥
अराहइत्ता ण गुणे अणेगे, से पावई सिद्धिमणुत्तरं ति बेमि ॥ १७ ॥
विणयसमाहीए पढमो उद्देसो संमत्तो ॥ १ ॥

( अवचूरिः ) श्रुत्वा मेधावी सुजाषितानि शुश्रूषयेदाचार्यमप्रमत्तः । एवं गुरुशुश्रूषापरः स आराध्य गुणाननेकान् ज्ञानादीन् प्राप्नोति सिद्धिमनुत्तरां मुक्तिमनन्तसौख्यामित्यर्थः ॥ १७ ॥

इति विनयसमाध्यवचूरावुक्तः प्रथम उद्देशः ॥ १ ॥

---

( अर्थ. ) सोच्चा णं इत्यादि सूत्र. ( मेहावि के० ) मेधावी एटले बुद्धिशाली एवा साधु जे ते (सुजासिआइ के०) सुजाषितानि एटले गुरुनी अराधनाना फल कहेनारा एवा सारा वचनो प्रत्ये ( सोच्चा के०) श्रुत्वा एटले सांजलीने (अप्पमत्तो के० ) अप्रमत्तः एटले निद्रादि प्रमादनो त्याग करतो बतो (आयरिअ के०) अचार्यान् एटले आचार्यप्रत्ये ( सुस्सूसए के० ) शुश्रूषयेत् एटले सेवे; अर्थात् आचार्यनी आणामां रहे. आ रीते जे वर्ते, ( से के० ) सः एटले ते साधु जे ते (अणेगे के०) अनेकान् एटले घणा ( गुणे के० ) गुणान् एटले ज्ञानादि गुणो प्रत्ये (आराहइत्ता के०) आराधयित्वा एटले आराधना करीने ( अणुत्तरं के० ) अनुत्तरां एटले सर्वोत्कृष्ट एवी ( सिद्धिं के० ) सिद्धिं एटले मुक्तिरूप सिद्धि प्रत्ये ( पावइ के०) प्राप्नोति एटले पामे बे. ( तिबेमि ) एनो अर्थ पूर्ववत् जाणवो. आ गाथामां बे णकार बे ते वाक्यालंकारने अर्थे जाणवा ॥ १७ ॥

इति विनयसमाधि अध्ययनना बालावबोधनो प्रथम उद्देश संपूर्ण ॥ १ ॥

---

( दीपिका. ) पुनराह । मेधावी पण्डितः साधुः सदा आचार्यान् शुश्रूषयेत् । किं कृत्वा । सुजाषितानि गुर्वाराधनफलाजिधायकानि श्रुत्वा । किंविशिष्टो मेधावी । अप्रमत्तः निद्रादिप्रमादरहितः । य एवं गुरुशुश्रूषापरः स गुणान् अनेकान् ज्ञानादिरूपान् आराध्य सिद्धिमनुत्तरां मुक्तिमनन्तरं सुकुलादिपरम्परया वा प्राप्नोति । ब्रवीमीति पूर्ववत् ॥ १७ ॥

इति श्रीदशवैकालिके शब्दार्थवृत्तौ श्रीसमयसुन्दरोपाध्यायविरचितायां नवमाध्ययने प्रथमोद्देशकः समाप्तः ॥ १ ॥

---

( टीका. ) सोच्चा णं ति सूत्रम् । श्रुत्वा मेधावी सुजाषितानि गुर्वाराधनफलाजिधायीनि । किमित्याह । शुश्रूषयेदाचार्यानप्रमत्तो निद्रादिरहितस्तदाज्ञां कुर्वीतेत्यर्थः । य एवं गुरुशुश्रूषापरः स आराध्य गुणाननेकान् ज्ञानादीन् प्राप्नोति सिद्धिमनुत्तराम् । मुक्तिमित्यर्थः । अनन्तरं सुकुलादिपरंपरया वा । ब्रमीति पूर्ववदयं सूत्रार्थः ॥ १७ ॥

इति श्रीदशवैकालिकटीकायां श्रीहरिजद्रसूरिविरचितायां नवमाध्ययने प्रथम उद्देशकः

अथ द्वितीय उद्देशः।

मूलाउ खंधप्पभवो दुमस्स, खंधाउ पच्छा समुविंति साहा॥
साहप्पसाहा विरुहंति पत्ता, तउ सि पुप्फं च फलं रसो अ॥ १॥

---

(अवचूरिः) अथ द्वितीय उद्देश उच्यते। मूलाद् आदिप्रबन्धात् स्कन्धोत्पत्तिर्द्रुमस्य। स्कन्धात्पश्चात्समुपयान्ति शाखाः। शाखाभ्यः प्रशाखा विरोहन्ति जायन्ते। ताभ्योऽपि पत्राणि। ततः से तस्य द्रुमस्य पुष्पं च फलं च रसश्च फलगत एव। एते क्रमेण भवन्तीति॥ १॥

---

(अर्थ.) हवे विनयना अधिकारमांज बीजो उद्देश कहे छे. मूलाउ इत्यादि सूत्र. (मूलाउ के०) मूलात् एटले मूलथी (जडथी) (दुमस्स के०) द्रुमस्य एटले वृक्षना (खंधप्पभवो के०) स्कन्धप्रभवः थडनी उत्पत्ति थाय छे. (पच्छा के०) पश्चात् एटले थड उत्पन्न थया पछी (खंधाउ के०) स्कन्धात् एटले थडथकी (साहा के०) शाखाः एटले शाखाउं जे ते (समुविंति के०) समुपयान्ति एटले उत्पन्न थाय छे. (साहप्पसाहा के०) शाखाभ्यः प्रशाखाः एटले शाखाउंथकी नानी शाखाउं (विरुहंति के०) विरोहन्ति एटले उत्पन्न थाय छे. (तउ के०) ततः एटले ते नानी शाखाउं थकी (पत्ता के०) पत्राणि एटले पात्रां उत्पन्न थाय छे. ते पात्राथकी (सि के०) तस्य एटले ते वृक्षने (पुप्फं के०) पुष्पं एटले पुष्प (च के०) च एटले पुनः (फलं के०) फलं एटले फल (अ के०) च एटले अने (रसो के०) रसः एटले रस अनुक्रमे थाय छे.॥ १॥

---

(दीपिका.) अथ नवमाध्ययने विनयाधिकार एव द्वितीयोद्देशकः प्रारभ्यते। पूर्वं प्रथमोद्देशके विनयसमाधिरुक्तः। द्वितीयोऽपि विनयाधिकारवान् उच्यते। तत्र सूत्रम्। द्रुमस्य वृक्षस्य मूलादादिप्रबन्धात् स्कन्धप्रभवः स्थुडोत्पादः। ततः स्कन्धात्पश्चात् शाखास्तस्य भुजाकल्पाः समुपयान्ति आत्मानं प्राप्नुवंति उत्पद्यन्त इत्यर्थः। तथा शाखाभ्य उक्तस्वरूपाभ्यः प्रशाखास्तासामंशभूता विरोहन्ति जायन्ते। तथा ताभ्योऽपि प्रशाखाभ्यः पत्राणि पर्णानि विरोहन्ति। ततस्तदनन्तरं से तस्य द्रुमस्य पुष्पं च फलं च रसश्च॥१॥

---

(टीका.) विनयाधिकारवानेव द्वितीय उच्यते। तत्रेदमादिमं सूत्रम्। मूलाउ इत्यादि। अस्य व्याख्या। मूलादादिप्रवन्धात् स्कन्धप्रभवः स्थुडोत्पादः। कस्येत्याह। द्रुमस्य वृक्षस्य। ततः स्कन्धात् सकाशात् पश्चात्तदनु समुपयान्त्यात्मानं प्राप्नुवंत्युत्पद्यंत इत्यर्थः। कास्ता इत्याह। शाखास्तद्भुजाकल्पाः। तथा शाखाभ्य उक्तलक्षणाभ्यः

प्रशाखास्तदंशभूता विरोहन्ति जायन्ते । तथा तेभ्योऽपि पत्राणि पर्णानि विरोहन्ति। ततस्तदनन्तरं से तस्य द्रुमस्य पुष्पं च फलं च रसश्च फलगत एवैते क्रमेण भवन्तीति सूत्रार्थः ॥ १ ॥

एवं धम्मस्स विणओ, मूलं परमो अ से मुक्खो ॥
जेण कित्तिं सुअं सिग्घं, नीसेसं चाभिगच्छइ ॥ २ ॥

( अवचूरिः ) एवं दृष्टान्तमभिधाय दार्ष्टान्तिकयोजनामाह । एवं धर्मकल्पद्रुमस्य विनयो मूलम् । परमः प्रधानो रसः से तस्य मोक्षः । स्कन्धप्रासानि सुरासुरनरसुखानि । येनेति तृतीया पञ्चम्यर्था ।यतो विनयात्पत्रकल्पां कीर्त्तिं पुष्पकल्पं श्रुतं श्लाघ्यं प्रशंसास्पदभूतं च निःशेषमधिगच्छति प्राप्नोति ॥ २ ॥

( अर्थ. ) उपर कहेल दृष्टांत दार्ष्टांतिकने विषे जोडे छे. एवमित्यादि सूत्र.(एवं के०) एवं एटले जेम वृक्षना मूल प्रमुख उपर कह्यां तेम ( धम्मस्स के० ) धर्मस्य एटले धर्म रूप कल्पवृक्षनुं ( विणउ के० ) विनयः एटले विनयरूप (मूलं के०) मूलं एटले मूल जाणवुं. ( अ के० ) च एटले अने (से के०)तस्य एटले ते धर्मरूप कल्पवृक्षनो ( मुक्खो के० ) मोक्षः एटले मोक्षरूप ( परमो के० ) परमः एटले फलमांनो उत्कृष्ट रस जाणवो. तथा एना खंध विगेरेने स्थानके देवलोकनी प्राप्ति, सारा कुलमां उत्पत्ति प्रमुख जाणवां. हवे विनय केवो ते कहे छे. ( जेण के० ) येन एटले जे विनयवडे सर्वत्र ( कित्तिं के० ) कीर्त्तिं एटले यश कीर्ति, ( सुअं के० ) श्रुतं एटले अंगप्रविष्टादि श्रुत अने ( नीसेसं के० ) निःशेषं एटले संपूर्ण ( सिग्घं के०) श्लाघ्यं एटले श्रेष्ठ वस्तु प्रत्ये ( अहिगच्छइ के० ) अधिगच्छति एटले पामे छे. ॥ २ ॥

( दीपिका. ) एवं दृष्टान्तमभिधाय दार्ष्टान्तिकयोजनामाह। एवं धर्मस्य परमकल्पवृक्षस्य विनयो मूलमादिप्रबन्धरूपं परम इति अग्रो रसः। से तस्य फलरसवन्मोक्षः। स्कन्धादिकल्पानि तु देवलोकगमनसुकुलागमादीनि।अतो विनयः कर्तव्यः। येन विनयेन कृत्वा साधुः कीर्तिं सर्वत्र शुभप्रवादरूपामधिगच्छति प्राप्नोति। पुनः० श्रुतम्। अङ्गप्रविष्टादि। श्लाघ्यं प्रशंसास्पदीभूतं निःशेषं संपूर्णं च प्राप्नोति॥ २ ॥

( टीका. )एवं दृष्टान्तमभिधाय दार्ष्टान्तिकयोजनामाह । एवं ति सूत्रम्। अस्य व्याख्या। एवं द्रुममूलवत्। धर्मस्य परमकल्पवृक्षस्य विनयो मूलमादिप्रबन्धरूपम्। परम इत्यग्रो रसः। से तस्य फलरसवन्मोक्षः स्कन्धादिकल्पानि तु देवलोकगमनसुकुलागमनादीनि।अतो विनयः कर्तव्यः। किंविशिष्ट इत्याह। येन विनयेन कीर्त्तिं सर्वत्र शुभप्रवादरूपां

तथा श्रुतमङ्गप्रविष्टादि। श्लाघ्यं प्रशंसास्पदभूतं निःशेषं संपूर्णमधिगच्छति प्राप्नोतीति २

जे अ चंडे मिए थद्धे, दुव्वाई नियडी सढे॥
वुज्झइ से अविणीअप्पा, कट्ठं सोअगयं जहा ॥ ३ ॥

(अवचूरिः) अविनयवतो दोषमाह। यश्च चण्डो रोषणः, मृगो मूर्खः, स्तब्धो जात्यादिमदोन्मत्तः। दुर्वादी अप्रियवक्ता। निकृती मायी। शठः संयमयोगेष्वनादृतः। एतेभ्यो दोषेभ्यो योऽविनयं करोति। स उह्यते संसारस्रोतसा अविनीतात्मा काष्ठं स्रोतोगतं प्रवाहपतितं यथा ॥ ३ ॥

(अर्थ.) जे विनय साचवतो नथी तेनो दोष कहे छे. जे इत्यादि सूत्र. (जे के०) यः एटले जे पुरुष (चंडे के०) चण्डः एटले क्रोधी, (मिए के०) मृगः एटले अज्ञ (थद्धे के०) स्तब्धः एटले जातिप्रमुखना अहंकारथी उन्मत्त थएलो, (दुव्वाई के०) दुर्वादी एटले अप्रिय भाषण करनारो, (निअडी के०) निकृतिमान् एटले कपटी (अ के०) च एटले अने (सढे के०) शठः एटले संयम व्यापारने विषे निष्कालजी एवो होवाथी विनय न करे. (से के०) सः एटले ते (अविणयप्पा के०) अविनीतात्मा एटले सर्व कल्याणनुं साधन एवा विनयने न साचवनार पुरुष जे ते (सोअगयं के०) स्रोतोगतं एटले जलना प्रवाहमां पडेलुं (कट्ठं के०) काष्ठं एटले काष्ठ (लाकडुं) (जहा के०) यथा एटले जेम तणाइ जाय छे तेम (वुज्झइ के०) उह्यते एटले संसार समुद्रना प्रवाहमां तणाइ जाय छे. ॥ ३ ॥

(दीपिका.) अथ अविनयदोषमाह। साधुः एतेभ्यो दोषेभ्यो विनयं न करोति। स संसारस्रोतसा उह्यते। किंवत्। काष्ठमिव। किंभूतं काष्ठम्। स्रोतोगतं नद्यादिवहनीपतितम्। किंभूतः साधुः। चण्डो रोषणः। पुनः किंभूतः साधुः। मृगोऽज्ञो हितमपि उक्तो रुष्यति। पुनः स्तब्धः जात्यादिमदोन्मत्तः। पुनः दुर्वादी अप्रियवक्ता। पुनः निकृतिमान् मायासहितः। पुनः शठः संयमयोगेषु आदररहितः। पुनः अविनीतात्मा सकलकल्याणकारणेन विनयेन रहितः ॥ ३ ॥

(टीका.) अविनयवतो दोषमाह। जे अ त्ति सूत्रम्। अस्य व्याख्या। यश्चण्डो रोषणो मृगोऽज्ञः हितमप्युक्तो रुष्यति। तथा स्तब्धो जात्यादिमदोन्मत्तः। दुर्वागप्रियवक्ता। निकृतिमान् मायोपेतः। शठः संयमयोगेष्वनादृत एभ्यो दोषेभ्यो विनयं न करोति यः। उह्यतेऽसौ पापः संसारस्रोतसा अविनीतात्मा सकलकल्याणैकनिबन्धनविनयविरहितः। किमिवेत्याह। काष्ठं स्रोतोगतं नद्यादिवहनीपतितं यथा तद्वदिति सूत्रार्थः ॥ ३ ॥

विणयंमि जो उवाएणं, चोइउ कुप्पई नरो ॥
दिव्वं सो सिरिमिज्जंतिं, दंमेण पमिसेहए ॥ ४ ॥

---

( अवचूरिः ) विनय उपायेन एकान्तमृडुजणनादिरूपेण चोदित उक्तः कुप्यति नरो योऽत्र। निदर्शनमाह । दिव्याममानुषीमसौ श्रियमागछन्तीमात्मनो जवन्तीं दएमेन काष्ठमयेन प्रतिषेधयति निवारयति ॥ ४ ॥

---

( अर्थ. ) वली विणयंमि इत्यादि सूत्र. ( जो के० ) यः एटले जे ( नरो के० )नरः एटले मनुष्य जे ते ( उवाएण के० ) उपायेन एटले मिष्ट वचन प्रमुख उपाय वडे ( विणयंमि के० ) विनये एटले विनयने विषे ( चोइउं के० ) चोदितः एटले प्रेर्यो बतो अर्थात् मीठा वचनथी विनय साचववाने अर्थे कोइ कंइ कहे तो ( कुप्पई के० ) कुप्यति एटले क्रोध करे. ( सो के० ) सः एटले ते पुरुष ( इज्जंतिं के० ) आयान्तीं एटले पोतानी मेले आवती एवी ( दिव्वं के० ) दिव्यां एटले अलौकिक, श्रेष्ठ एवी ( सिरिं के० ) श्रियं एटले लक्ष्मीप्रत्ये ( दंडेण के० ) दंडेन एटले दंड (लाकडी) वडे ( पडिसेहए के०) प्रतिषेधयति एटले पाछी वाले छे. तात्पर्य, विनय संपदानुं मूल छे, माटे ते अवश्य करवो. ॥ ४ ॥

---

( दीपिका. ) पुनः किंच । यो नरः विनयमुक्तलक्षणं प्रति उपायेन एकान्तमृडुजणनादिलक्षणेनापि संबन्धेन चोदित उक्तः सन् कुप्यति रुष्यति । स किं करोतीत्याह । स दिव्याममानुषीं श्रियं लक्ष्मीमागछन्तीमात्मनो जवन्तीं दएमेन काष्ठमयेन प्रतिषेधयति निवारयति । अयं परमार्थः । विनयः संपदां निमित्तं । तत्रस्खलितं यदि कश्चिन्नोदयति स गुणः । तत्रापि रोषकरणे वस्तुतः संपदां निषेधः ॥ ४ ॥

---

( टीका. ) किं च विणयंमीति सूत्रम् । अस्य व्याख्या । विनयमुक्तलक्षणं य उपायेनाप्येकान्तमृडुजणनादिलक्षणेनाप्यपिशब्दस्य व्यवहितः संबन्धः । चोदित उक्तः कुप्यति रुष्यति नरः । अत्र निदर्शनमाह । दिव्याममानुषीमसौ नरः श्रियं लक्ष्मीमागछन्तीमात्मनो जवन्तीं दएमेन काष्ठमयेन प्रतिषेधयति निवारयति । एतडुक्तं जवति । विनयः संपदो निमित्तम् । तत्र स्खलितं यदि कश्चिच्चोदयति । स गुणस्तत्रापि रोषकरणेन वस्तुतः संपदो निषेधः । उदाहरणं चात्र दशारादयः कुरूपागतश्रीप्रार्थनाप्रणयजंगकारिणस्तछहितास्तदजङ्गकारी च तद्युक्तः कृष्ण इति सूत्रार्थः ॥ ४ ॥

तहेव अविणीअप्पा, उववज्ञा हया गया ॥
दीसंति दुहमेहंता, आजिउगमुवठिआ ॥ ५ ॥

( अवचूरिः ) अविनयदोषमाह । तथैव ते अविनीतात्मानः अनात्मज्ञा उपवाह्यानां राजादिवल्लभानामेते कर्मकरा इत्यौपवाह्या हया अश्वा गजा हस्तिनः। उपलक्षणं चैतन्महिषादीनाम्। दृश्यन्ते तृणादिवोढारः । दुःखं संक्लेशलक्षणमेधमाना अनेकार्थत्वादनुभवन्त आभियोग्यं कर्मकरत्वमुपस्थिताः प्राप्ताः ॥ ५ ॥

---

( अर्थ. ) वली अविनयना दोष देखाडवाने अर्थे कहे छे. तहेव इत्यादि सूत्र. ( तहेव के० ) तथैव एटले तेमज ( अविणीअप्पा के० ) अविनीतात्मानः एटले विनयरहित एवा ( उववज्झा के० ) औपवाह्याः एटले प्रधान सेनापति प्रमुख लोकोना ( हया के० ) हयाः एटले अश्व तथा ( गया के० ) गजाः एटले गज प्रमुख जे ते ( दुहं के० ) दुःखं एटले दुःख प्रत्ये (एहंता के०) एधमानाः एटले भोगवता एवा तथा ( आभिओगं के० ) आभियोग्यं एटले सेवक पणा प्रत्ये ( उवट्ठिआ के० ) उपस्थिताः एटले पामेला एवा अर्थात् भारवाहक ( भार उपाडनार थएला ) एवा ( दीसंति के० ) दृश्यन्ते एटले देखाय छे. ॥ ५ ॥

---

( दीपिका. ) अविनयदोषस्य उपदर्शनार्थमेवाह । तथैव ते अविनीतात्मानो विनयरहिता अनात्मज्ञा उपवाह्यानां राजादिवल्लभानामेते कर्मकरा इत्यौपवाह्या हया अश्वा गजा हस्तिन उपलक्षणत्वात् महिषादयश्च एते । किमित्याह । दृश्यन्त उपलभ्यन्त एव मन्दुरादौ अविनयदोषेण उभयलोकवर्त्तिना यवसादिवोढारः दुःखं संक्लेशलक्षणमेधमाना अनेकार्थत्वादनुभवन्त आभियोग्यं कर्मकरभावमुपस्थिताः ॥ ५ ॥

---

( टीका. ) अविनयदोषोपदर्शनार्थमेवाह । तहेव त्ति सूत्रम् । तथैवेति तथैवैतेऽविनीतात्मानो विनयरहिता अनात्मज्ञा उपवाह्यानां राजादिवल्लभानामेते कर्मकरा इत्यौपवाह्याः । हया अश्वाः । गजा हस्तिनः । उपलक्षणमेतन्महिषकादीनामिति । एते। किमित्याह। दृश्यन्त उपलभ्यन्त एव मन्दुरादौ अविनयदोषेण उभयलोकवर्त्तिना यवसादिवोढारः । दुःखं संक्लेशलक्षणमेधयन्तोऽनेकार्थत्वादनुभवन्त आभियोग्यं कर्मकरभावमुपस्थिताः प्राप्ता इति सूत्रार्थः ॥ ५ ॥

तहेव सुविणीअप्पा, उववज्झा हया गया ॥
दीसंति सुहमेहंता, इड्ढिं पत्ता महायसा ॥ ६ ॥

---

( अवचूरिः ) एतेष्वेव विनयगुणमाह । तथैवैते सुविनीतात्मान उववज्झा हया गया इति पूर्ववत् । दृश्यन्ते सुखमाह्लादलक्षणमेधमाना ऋद्धिं प्राप्ता विशिष्टभूषणालयभोजनादिप्राप्तर्द्धयो महायशसो विख्यातगुणाः ॥ ६ ॥

( अर्थ. ) हवे ए अश्वादिकमांज विनय करनारनी स्थिति कहेछे. तहेव इत्यादि सूत्र. ( तहेव के० ) तथैव एटले तेमज ( सुविणीअप्पा के० ) सुविनीतात्मानः एटले सम्यक् प्रकारे विनयवंत एवा ( उववझा के० ) औपवाह्याः एटले प्रधान, सेनापति प्रमुख लोकोना ( हया के० ) हयाः एटले अश्व तथा ( गया के० ) गजाः एटले गज प्रमुख जे ते (सुहं के०) सुखं एटले सुख प्रत्ये ( एहंतो के० ) एधमानाः एटले नोगवता,(इड्ढिं पत्ता के०) ऋद्धिं प्राप्ताः एटले ऋद्धि पामेला अने (महायसा के०) महायशसः एटले मोटी जसकीर्ति पामेला एवा (दीसंति के०) दृश्यन्ते एटले देखाय छे ॥६॥

---

(दीपिका.) एतेष्वेव विनयगुणमाह। तथैव एते सुविनीतात्मानो विनयवन्त आत्मज्ञा औपवाह्या राजादीनां हया गजा इति पूर्ववत्। एते। किमित्याह। दृश्यन्त उपलक्ष्यन्ते सुखमाह्लादलक्षणमेधमाना अनुनवन्त ऋद्धिं प्राप्ता इति विशिष्टनूषणालयनोजनादिनावतः प्राप्तर्द्धयो महायशसो विख्यातसद्गुणाः ॥ ६ ॥

---

( टीका. ) एतेष्वेव विनयगुणमाह । तहेव त्ति सूत्रम् । तथैवेति तथैवैते सुविनीतात्मानो विनयवन्त आत्मज्ञा औपवाह्या राजादीनां हया गजा इति पूर्ववत् । एते। किमित्याह । दृश्यन्त उपलक्ष्यन्त एव सुखमाह्लादलक्षणमेधमाना अनुनवन्त ऋद्धिं प्राप्ता इति । विशिष्टनूषणालयनोजनादिनावतः प्राप्तर्द्धयो महायशसो विख्यातसद्गुणा इति सूत्रार्थः ॥ ६ ॥

तहेव अविणीअप्पा, लोगंमि नरनारिर्ज॥
दीसंति डुहमेहंता, गया ते विगलिंदिआ ॥ ७ ॥

---

( अवचूरिः ) एतदेव विनयाविनयफलं मनुष्यानधिकृत्याह । तथैव तिर्यञ्च इवाविनीतात्मानः पूर्ववत् । अत्रास्मिन् मनुष्यलोके नरनार्यः दृश्यन्ते डुःखमेधमानाः पूर्ववत्। गताः कशाघातव्रणाङ्किताः। विकलेन्द्रिया अपनीतनासिकादीन्द्रियाः पारिदारिकादयः

---

( अर्थ. ) तिर्यंच आश्रयी विनयनुं तथा अविनयनुं फल कह्युं. हवे मनुष्य आश्रयी कहे छे. तहेव इत्यादि सूत्र. ( तहेव के० ) तथैव एटले जेम तिर्यंचमां तेमज ( लोगंसि के० ) लोके एटले लोकने विषे ( अविणीअप्पा के० ) अविनीतात्मानः एटले विनयने न साचवनारा एवा ( ते के० ) ते एटले ते ( नरनारिर्ज के० ) नरनार्यः एटले पुरुषो अने स्त्रियो जे ते ( डुहमेहंता के० ) डुःखमेधमानाः एटले डुःखने नोगवता एवा ( गया के० ) गताः एटले चाबक प्रमुखना प्रहारथी जेमने शरीरे घा प्रमुख पडेला छे एवा तथा ( विगलिंदिआ के० ) विकलेन्द्रियाः एटले जेमना

नाक, कान प्रमुख कपाया छे एवा ( दीसंति के० ) दृश्यन्ते एटले देखाय छे. अर्थात् परस्त्रीगमन, चोरी प्रमुख अपराध करनार लोकोनी हालत एवी देखाय छे. ॥ ७ ॥

( दीपिका. ) अथ एतदेव विनयाविनयफलं मनुष्यान् अधिकृत्याह । तथैव तिर्यञ्च इव अविनीतात्मानः। पूर्ववत्। लोकेऽस्मिन् मनुष्यलोके । नरनार्य इति प्रकटार्थम् । दृश्यन्ते दुःखमेधमानाः । पूर्ववत् । छाताः कशाघातव्रणाङ्कितशरीरा विकलेन्द्रिया अपनीतनासिकादीन्द्रियाः पारदारिकादय इति सूत्रार्थः॥ ७ ॥

( टीका. ) एतदेव विनयाविनयफलं मनुष्यानधिकृत्याह । तहेव त्ति सूत्रम् । अस्य व्याख्या । तथैव तिर्यञ्च इव अविनीतात्मान इति पूर्ववत्। लोकेऽस्मिन्मनुष्यलोके। नरनार्य इति प्रकटार्थम्। दृश्यन्ते दुःखमेधमाना इति पूर्ववत्। छाताः कषघातव्रणाङ्कितशरीरा विगलितेन्द्रिया अपनीतनासिकादीन्द्रियाः पारदारिकादय इति सूत्रार्थः॥ ७॥

दंमसत्थपरिज्जुन्ना, असप्भवयणेहि अ ॥
कलुणा विवन्नछंदा, खुप्पिवासपरिग्गया ॥ ८ ॥

( अवचूरिः) दण्डा वेत्रदण्डादयः। शस्त्राणि खड्गादीनि ताभ्यां परिजीर्णाः समन्ततो दुर्बलभावमापादिता असभ्यवचनैश्च खरकर्कशादिभिः। एवंभूताः करुणाहेतुत्वात्सतां करुणा दीना व्यापन्नछन्दसः गतस्वेच्छाः क्षुधा पिपासया परिगता व्याप्ताः॥ ८ ॥

( अर्थ. ) वली उपर कहेला पुरुषो अने स्त्रियो केवा छे ते कहेछे. दंडसत्थ इत्यादि सूत्र. ( दंमसत्थपरिज्जुन्ना के० ) दंडशस्त्रपरिजीर्णाः एटले वेत्र प्रमुख दंडना अने खड्ग प्रमुख शस्त्रना प्रहारथी दुर्बल थएला, ( अ के० ) च एटले अने ( असप्भवयणेहि के० ) असभ्यवचनैः एटले कठोर वचनो सांभलीने पण दुर्बल थएला एवा माटेज ( कलुणा के० ) करुणाः एटले सत्पुरुषोने दया उपजावे एवा तथा (विवन्नछंदा के०) व्यापन्नछन्दसः एटले पोतानी इछा माफक जेमनाथी चलातुं नथी, अर्थात् बीजाना तावामां रहेला एवा तेमज ( खुप्पिवासपरिग्गया के० ) क्षुत्पिपासापरिगताः एटले क्षुधा तृषाथी पीडायला एवा देखाय छे. ॥ ८ ॥

( दीपिका. ) एवंविधाः साधव इह लोके पूर्वमविनयेन गृहीतानां कर्मणामनुभावेन एवंभूताः परलोके तु कुशलस्य अप्रवृत्तेर्दुःखिततरा विजायन्ते। कीदृशाः। दण्डा वेत्रदण्डादयः शस्त्राणि खड्गादीनि तैः परिजीर्णाः परि समन्ततो दुर्बलभावमापादिताः। तथा पुनः कीदृशाः।असभ्यवचनैश्च खरकर्कशादिभिः परिजीर्णाः। पुनः कीदृशाः। करुणाः। करुणाहेतुत्वात्। पुनः कीदृशाः । व्यापन्नछन्दसः परायत्ततया गतस्वाभिप्रायाः । पुनः

किंभूताः। क्षुधा बुभुक्षा पिपासा तृषा ताभ्यां परिगता व्याप्ताः। अन्नादिनिरोधस्तोकदानाभ्याम् ॥ ८ ॥

( टीका. ) तथा दंड त्ति सूत्रम्। दण्डा वेत्रदण्डादयः, शस्त्राणि खङ्गादीनि, ताभ्यां परिजीर्णाः समन्ततो दुर्बलभावमापादिताः। तथा असभ्यवचनैश्च खरकर्कशादिभिः परिशीर्णास्त एवंभूताः सतां करुणाहेतुत्वात्करुणा दीना व्यापन्नछन्दसः परायत्ततया अपेतस्वाभिप्रायाः क्षुधा बुभुक्षया पिपासया तृषा परिगता व्याप्ता अन्नादिनिरोधस्तोकदानाभ्यामिति। एवमिह लोके प्रागविनयोपात्तकर्मानुभावत एवंभूताः परलोके तु कुशलाप्रवृत्तेर्दुःखिततरा विज्ञेया इति सूत्रार्थः ॥ ८ ॥

तहेव सुविणीअप्पा, लोगंसि नरनारिउ ॥
दीसंति सुहमेहंता, इड्ढिं पत्ता महायसा ॥ ए ॥

( अवचूरिः ) विनयफलमाह। तथैव सुविनीतात्मानो लोकेऽस्मिन् नरनार्यः। सुखमेधमाना ऋद्धिं प्राप्ता महायशसः। पूर्ववत्। न वरं स्वाराधितनृपगुरुजना उभयलोकसाफल्यकारिणः ॥ ए ॥

( अर्थ. ) हवे विनय साचवनारा मनुष्योनी स्थिति कहे छे. तहेव इत्यादि सूत्र. ( तहेव के० ) तथैव एटले जेम विनय साचवनारा तिर्यंचो सुखी देखाय छे तेम ( लोगंसि के० ) लोके एटले लोकने विषे (सुविणीअप्पा के०) सुविनीतात्मानः एटले सम्यक्प्रकारे विनयने साचवनारा एवा ( नरनारिउ के० ) नरनार्यः एटले पुरुषो अने स्त्रियो जे ते ( सुहमेहंता के० ) सुखमेधमानाः एटले सुखने भोगवता एवा, ( इड्ढिं पत्ता के० ) ऋद्धिं प्राप्ताः एटले ऋद्धि पामेला एवा तथा ( महायसा के० ) महायशसः एटले घणा जसकीर्तिवाला एवा ( दीसंति के० ) दृश्यन्ते एटले देखायछे. ॥ए॥

( दीपिका. ) अथ विनयफलमाह। अस्मिँल्लोके नरनार्यस्तथैव विनीततिर्यञ्च इव सुविनीतात्मानो दृश्यन्ते। कीदृश्यो नरनार्यः। सुखमेधमाना ऋद्धिं प्राप्ताः। पुनः कीदृश्यः। महायशस इति पूर्ववत्। नवरं, स्वाराधितगुरुजना उभयलोकसाफल्यकारिण एत इति ए

( टीका. ) विनयफलमाह तहेव त्ति सूत्रम्। तथैव विनीततिर्यञ्च इव सुविनीतात्मानो लोकेऽस्मिन्नरनार्य इति पूर्ववत्। दृश्यन्ते सुखमेधमाना ऋद्धिं प्राप्ता महायशस इति पूर्ववदेव। नवरं, स्वाराधितनृपगुरुजना उभयलोकसाफल्यकारिण एत इति सूत्रार्थः ए

तहेव अविणीअप्पा, देवा जक्खा अ गुज्झगा ॥
दीसंति सुहमेहंता, आभिउगमुवछिआ ॥ १० ॥

अवयवाक्रमस्तु गाथाभङ्गभयादर्थतस्तु सूत्रोपन्यासवद्द्रष्टव्य इति। विहारचर्या ऋषीणां प्रशस्तेत्युक्तम् । तद्विशेषोपदर्शनायाह । आइन्न त्ति सूत्रम् । अस्य व्याख्या। आकीर्णावमानविवर्जना च विहारचर्या ऋषीणां प्रशस्तेति । तत्राकीर्णं राजकुलसंखड्यादि। अवमानं स्वपक्षपरपक्षप्राभृत्यजं लोकाबहुमानादि। अस्य विवर्जना। आकीर्णे हस्तपादादिलूषणदोषात्। अवमाने अलाभाधाकर्मादिदोषादिति । तथा उत्सन्नदृष्टाहृतं प्राय उपलब्धमुपनीतम् । उत्सन्नशब्दः प्रायोवृत्तौ वर्त्तते। यथा देवा उसन्नं सायं वेयणं वेएंति। किमेतदित्याह । भक्तपानमोदनारनालादि। इदं चोत्सन्नदृष्टाहृतं यत्रोपयोगः शुध्यति । गृहान्तरादारत इत्यर्थः। भिक्खग्गाही एगब्भ कुणइ बीउ अ दोसुमुवगउंगमिति वचनात्। इत्येवंभूतमुत्सन्नं दृष्टाहृतं भक्तपानमृषीणां प्रशस्तमिति योगः। तथा संसृष्टकल्पेन हस्तमात्रकादिसंसृष्टविधिना चरेद्भिक्षुरित्युपदेशः। अन्यथा पुरःकर्मादिदोषात्। संसृष्टमेव विशिनष्टि। तज्जातसंसृष्ट इत्यामगोरसादिसमानजातीयसंसृष्टे हस्तमात्रकादौ यतिर्यतेत यत्नं कुर्यात्। अतज्जातसंसृष्टे संसर्जनादिदोषादित्यनेनाष्टभङ्गसूचनम्। तद्यथा संसट्ठे हत्थे संसट्ठे मत्ते सावसेसे दव्वे इत्यादि। अत्र प्रथमभङ्गः श्रेयान्। शेषास्तु चिन्त्या इति सूत्रार्थः॥ ६॥

अमज्जमंसासि अमच्छरीआ, अभिक्खणं निव्विगइं गया अ॥
अभिक्खणं काउसग्गकारी, सज्झायजोगे पयउ हविज्जा॥ ७॥

---

(अवचूरिः) उपदेशाधिकार एवाह । अमद्यमांसाशी भवेदिति योगः । अमत्सरी च न परद्वेषी स्यात्। अभीक्ष्णं निर्विकृतिकश्च । निर्गतविकृतिकश्चनिर्गतविकृतिभोगश्च पुष्टालम्बनाभावे । गमनागमनादिषु कायोत्सर्गकारी स्यात्। ईर्यामप्रतिक्रम्य न किंचित्कुर्यात्। स्वाध्याययोगे वाचनादिव्यापारे अतिशयप्रयत्नवान् प्रयतो भवेत्। अन्यथाशुद्धतादोषात् ॥ ७॥

---

(अर्थ.) उपदेशना अधिकारमांज कहे छे. अमज्ज इत्यादि सूत्र। साधु जे ते (अमज्जमंसासि के०) अमद्यमांसाशी एटले मद्यनुं पान अने मांसनुं भक्षण न करनार एवा, (अमछरी के०) अमत्सरी एटले कोइ पण जीवनी साथे मत्सर न करनार एवा (च के०) च एटले वळी (अभिक्खणं के०) अभीक्ष्णं एटले वारंवार (निव्विगइ के०) निर्विकृतिकः एटले नीवी प्रत्ये (गया के०) गता एटले अंगीकार करनार एवा अर्थात् तेवुं कांइ पुष्ट कारण होय तोज उचित विगइनो आहार करे, नहि तो प्राये विगइनो त्याग करे एवा (अ के०) च एटले वळी (अभिक्खणं के०) अभी-

क्षणं एटले वारंवार ( काउस्सग्गकारी के० ) कायोत्सर्गकारी एटले गमनागमनादि कारणथी ईर्याप्रतिक्रमण रूप कायोत्सर्ग करनार एवा. कारण, ते विना क्रियानी शुद्धता नथी. तेमज ( सज्झायजोगे के० ) स्वाध्याययोगे एटले वाचना प्रमुख स्वाध्याय व्यापारने विषे ( पयउ के० ) प्रयतः एटले यतनावान एवा ( हविज्जा के० ) भवेत् एटले थाय. ॥ ७ ॥

---

( दीपिका. ) उपदेशाधिकार एवेदमाह । साधुः अमद्यमांसाशी भवेदित्युक्तिः। कोऽर्थः। अमद्यपोऽमांसाशी च स्यात्। एते च मद्यमांसे लोकागमप्रसिद्धे एव । ततश्च यत् केचन कथयन्ति । आरनालादिष्वपि संधानदोषादोदनाद्यपि प्राण्यङ्गत्वात्त्याज्यमिति । तदसत्। अमीषां मांसमद्यत्वस्य अयोगात् । लोकशास्त्रयोरप्रसिद्धत्वात् । सन्धानप्राण्यङ्गत्वतुल्यत्वचोदनं तु असाधु अतिप्रसंगदोषात्। द्रव्यत्वस्त्रीत्वतुल्यतया मूत्रपानमातृगमनादिप्रसंगात् इत्यलं प्रसंगेन। अक्षरगमनिकामात्रप्रक्रमात् । पुनः साधुः अमत्सरी च स्यात्। न परसंपद्द्वेषी स्यात् । तथा अभीक्ष्णं वारंवारं पुष्टकारणस्य अभावे निर्विकृतिकश्च निर्गतविकृतिपरिभोगश्च भवेत् । अनेन परिभोगोचितविकृतीनामपि अकारणे प्रतिषेधमाह । तथा अभीक्ष्णं वारंवारं गमनागमनादिषु । विकृतिपरिभोगे वेत्यन्ये । किमित्याह । कायोत्सर्गकारी भवेत्। ईर्यापथप्रतिक्रमणमकृत्वा न किंचिदन्यत् कुर्यात् । तदशुद्धतापत्तेरिति भावः। तथा स्वाध्याययोगे वाचनादीनां उपचारव्यापारे आचामाम्लादौ प्रयतोऽतिशयेन यत्नवान् भवेत्। तथैव तस्य सफलत्वात्। विपर्ययेतून्मादादिदोषप्रसंगादिति ॥ ७ ॥

---

( टीका. ) उपदेशाधिकार एवेदमाह।अमज्ज त्ति सूत्रम् । अस्य व्याख्या। अमद्यमांसाशी भवेदिति योगः। अमद्यपोऽमांसाशी च स्यात्। एते च मद्यमांसे लोकागमप्रतीते एव। ततश्च यत्केचनाभिदधत्यारनालारिष्टाद्यपि संधानादोदनाद्यपि प्राण्यङ्गत्वात्त्याज्यमिति। तदसत् ।अमीषां मद्यमांसत्वायोगात्। लोकशास्त्रयोरप्रसिद्धत्वात्। संधानप्राण्यङ्गत्वतुल्यत्वचोदना त्वसाध्वी । अतिप्रसङ्गदोषात् । द्रवत्वस्त्रीत्वतुल्यतया मूत्रपानमातृगमनादिप्रसंगादित्यलं प्रसङ्गेनाक्षरगमनिकामात्रप्रक्रमात् । तथा अमत्सरी च न परसंपद्द्वेषी च स्यात्। तथा अभीक्ष्णं पुनः पुनः पुष्टकारणाभावे निर्विकृतिकश्च निर्गतविकृतिपरिभोगश्च भवेत् । अनेन परिभोगोचितविकृतीनामप्यकारणे प्रतिषेधमाह। तथा अभीक्ष्णं गमनागमनादिषु विकृतिपरिभोगेऽपि चान्ये किमित्याह।कायोत्सर्गकारी भवेत्। ईर्यापथप्रतिक्रमणमकृत्वा न किंचिदन्यत् कुर्यादशुद्धता-

पत्तेरिति भावः। तथा स्वाध्याययोगे वाचनाद्युपचारव्यापार आचामाम्लादौ प्रयतोऽतिशययत्नपरो भवेत्तथैव तस्य फलवत्त्वाद्विपर्यय उन्मादादिदोषप्रसंगादिति सूत्रार्थः॥७॥

ण पडिन्नविज्जा सयणासणाइं, सिज्जं निसिज्जं तह भत्तपाणं॥
गामे कुले वा नगरे व देसे, ममत्तभावं न कहिं पि कुज्जा॥ ८॥

---

(अवचूरिः) न प्रतिज्ञापयेत् मासादिकल्पपरिसमाप्तौ गच्छन् भूयोऽप्यागतस्य ममैवैतानि दातव्यानीति प्रतिज्ञां न कारयेत् गृहिणम्। किमाश्रित्येत्याह। शयनासने शय्यां निषद्यां तथा भक्तपानमिति। तत्र शयनं संस्तारकादि। आसनं पीठकादि। शय्या वसतिर्निषद्या स्वाध्यायादिभूमिः। तथा तेन प्रकारेण तत्कालावस्थानौचित्येन भक्तपानं खण्डखाद्यद्राक्षापानादि न तत्प्रतिज्ञापयेत् ममत्वदोषात्। सर्वत्रैव निषेधमाह। ग्रामे शालिग्रामादौ। कुले वा श्रावकादौ। नगरे वा साकेतादौ। देशे वा मध्यदेशादौ। ममत्वभावं ममेदमिति स्नेहमोहं न क्वचिदुपकरणादिष्वपि कुर्यात्तन्मूलत्वाद्दुःखानाम्॥॥ ८॥

---

(अर्थ.) वली ण पडिन्नविज्जा इत्यादि सूत्र. साधु जे ते मासकल्प विगेरे पूरो करीने विहार करवाने वखते (सयणासणाइं के०) शयनासने एटले संस्तारक प्रमुख शयन अने पीठक प्रमुख आसन प्रत्ये, (सिज्जं के०) शय्यां एटले वसति प्रत्ये, (निसिज्जं के०) निषद्यां एटले स्वाध्याय विगेरे करवानी भूमि प्रत्ये, (तह के०) तथा एटले तेमज (भत्तपाणं के०) भक्तपानं एटले अन्नपान प्रत्ये (ण पडिन्नविज्जा के०) न प्रतिज्ञापयेत् एटले श्रावक पासे कबूल करावे नहि. अर्थात् हुं फरिथी आवीश त्यारे शयन, आसन प्रमुख मने आपवा. एवुं विहार करती वखते श्रावकपासे नक्की करावे नहि. कारण, तेम करवाथी ते वस्तुने विषे ममता उत्पन्न थाय छे. अने ममता सर्व अनर्थनुं मूल छे. माटे (गामे के०) ग्रामे एटले शालिग्राम प्रमुख गामने विषे, (कुले के०) कुले एटले श्रावककुलादिकने विषे, (वा के०) अथवा (नगरे के०) नगरे एटले अयोध्या प्रमुख नगरने विषे, (व के०) अथवा (देसे के०) देशे एटले मध्यदेशादिकने विषे (कहिं वि के०) क्वचिदपि एटले कोइ ठेकाणे पण (ममत्तभावं के०) ममत्वभावं एटले आ मारुं छे एवा परिणाम प्रत्ये (न कुज्जा के०) न कुर्यात् एटले न करे.॥ ८॥

---

(दीपिका.) किंच साधुर्मासादिकल्पसमाप्तावन्यत्र गच्छन् सन्निति गृहस्थं न प्रतिज्ञापयेत् न प्रतिज्ञां कारयेत्। इतीति किम्। पुनरागतस्य मम एतानि दातव्यानि। एतानि कानीत्या-

ह । शयनं संस्तारकादि, आसनं पीठकादि, शय्या वसतिः, निषद्या स्वाध्यायादिनूमिः । तथा तेन प्रकारेण तत्काले अवस्थाया औचित्येन नक्तं खण्डखाद्यादि, पानं च डाक्षादि न प्रतिज्ञापयेत् ममत्वदोषात्। अथ सर्वत्र ममतादोषपरिहारमाह । ग्रामे शालिग्रामादौ, कुले वा श्रावककुले, नगरे अयोध्यादौ, देशे च मध्यदेशादौ ममेदमिति ममत्वनावं स्नेहमोहं न क्वचिडुपकरणादिष्वपि कुर्यात् । कुतो न स्नेहं कुर्यात् । स्नेहमूलत्वाडुःखादीनामिति ॥ ७ ॥

---

(टीका.) किंच ण पडिन्नविज्ज त्ति सूत्रम् । अस्य व्याख्या । न प्रतिज्ञापयेन्मासादिकल्पपरिसमाप्तौ गछन् नूयोऽप्यागतस्य ममैवैतानि दातव्यानीति न प्रतिज्ञां कारयेद्गृहस्थम् । किमाश्रित्येत्याह । शयनासने, शय्यां निषद्यां । तथा नक्तपानमिति । तत्र शयनं संस्तारकादि । आसनं पीठकादि । शय्या वसतिः । निषद्या स्वाध्यायादिनूमिः। तथा तेन प्रकारेण तत्कालावस्थौचित्येन नक्तपानं खण्डखाद्यकडाक्षापानकादि न प्रतिज्ञापयेन्ममत्वदोषात् । सर्वत्रैतन्निषेधमाह । ग्रामे शालिग्रामादौ, कुले वा श्रावककुलादौ, नगरे साकेतादौ, देशे वा मध्यदेशादौ, ममत्वनावं ममेदमिति स्नेहमोहं न क्वचिडुपकरणादिष्वपि कुर्यात्तन्मूलत्वाडुःखादीनामिति ॥ ७ ॥

गिहिणो वेआवडिअं न कुज्जा, अनिवायणवंदणपूअणं वा ॥
असंकिलिठेहिं समं वसिज्जा, मुणी चरित्तस्स जर्ज न हाणी ॥ ए ॥

---

(अवचूरिः) उपदेशाधिकार एवैतदाह । गृहिणो वैयावृत्त्यं न कुर्यात् । अनिवादनं वाचिकनमस्काररूपं, वन्दनं कायप्रणामरूपं, पूजनं च वस्त्रादिनिः । असंक्लिष्टैर्गृहिवैयावृत्त्यादिकरणसंक्लेशरहितैः साधुनिः समं वसेत् । चारित्रस्य मूलगुणादिलक्षणस्य यतो येन्यः साधुन्यः सकाशान्न हानिः। अनागतकालविषयं चेदं सूत्रम् । प्रणयनकाले संक्लिष्टसाध्वनावात् ॥ ए ॥

---

(अर्थ.) उपदेशना अधिकारमांज कहे बे. गिहिणो इत्यादि सूत्र. (गिहिणो के०) गृहिणः एटले गृहस्थना (वेआवडिअं के०) वैयावृत्त्यं एटले जेथी गृहस्थ उपर उपकार थाय एवा कांइ पण तेना कामकाज प्रत्ये (न कुज्जा के०) न कुर्यात् एटले न करे. (वा के०) अथवा (अनिवायणवंदणपूअणं के०) अनिवादनवन्दनपूजनं एटले अनिवादन ते वाणीवडे नमस्कार शब्द उच्चारवो, वंदन ते कायावडे नमवुं अने पूजन ते वस्त्रादिकवडे सत्कार करवो ते प्रत्ये न करे. (जर्ज के०) यतः एटले जेना समागममां रहेवाथी (चरित्तस्स के०) चारित्रस्य एटले मूलगुण प्रमुख चारि-

भनी ( हाणी के० ) हानिः एटले हानि ( न के० ) न थाय. तेवा ( असंकिलिठेहिं के० ) असंक्लिष्टैः एटले गृहस्थनुं वेयावच करवा प्रमुख संक्लेशवडें रहित एवा साधुर्उनी ( समं के० ) साथे ( मुणी के० ) मुनिः एटले साधु जे ते ( वसिज्जा के० ) वसेत् एटले रहे. ॥ ए ॥

( दीपिका. ) पुनरुपदेशाधिकार एवमाह। मुनिः गृहिणो गृहस्थस्य वैयावृत्यं गृहिभावस्य उपकाराय तत्कर्मस्वात्मनो व्यापृतभावं न कुर्यात् । स्वपरोभयाश्रेयःसमायोजनदोषात् । अभिवादनं वाचा नमस्काररूपं, वन्दनं कायप्रणामलक्षणं, पूजनं वा वस्त्रादिभिः समभ्यर्चनं गृहिणो न कुर्यादुक्तदोषप्रसङ्गादेव । तथा एतद्दोषपरिहाराय एवमसंक्लिष्टैः गृहिवैयावृत्यादिकारणसंक्लेशरहितैः साधुभिः समं वसेत् मुनिः । यतो येभ्यः साधुभ्यः सकाशात् चारित्रस्य मूलगुणादिलक्षणस्य हानिर्न स्यात् ॥ ए ॥

( टीका. ) उपदेशाधिकार एवाह । गिहिणो त्ति सूत्रम् । अस्य व्याख्या । गृहिणो गृहस्थस्य वैयावृत्यं गृहिभावोपकाराय तत्कर्मस्वात्मनो व्यावृत्तभावं न कुर्यात् स्वपरोभयाश्रेयःसमायोजनदोषात् । तथा अभिवादनं वाङ्नमस्काररूपं वन्दनं कायप्रणामलक्षणं पूजनं वा वस्त्रादिभिः समभ्यर्चनं वा गृहिणो न कुर्यादुक्तदोषप्रसङ्गादेव । तथैतद्दोषपरिहारायैवासंक्लिष्टैर्गृहिवैयावृत्यकरणसंक्लेशरहितैः साधुभिः समं वसेन्मुनिः । चारित्रस्य मूलगुणादिलक्षणस्य यतो येभ्यः साधुभ्यः सकाशान्न हानिः । संवासतस्तदकृत्यानुमोदनादिनेत्यनागतविषयं चेदं सूत्रम् । प्रणयनकाले संक्लिष्टसाध्वभावादिति सूत्रार्थः ॥ ए ॥

ण या लभेज्जा निउणं सहायं, गुणाहिअं वा गुणउ समं वा ॥
इक्को वि पावाइं विवज्जयंतो, विहरिज्ज कामेसु असज्जमाणो ॥ १० ॥

( अवचूरिः ) असंक्लिष्टैः समं वसेदित्युक्तम् । अत्र विशेषमाह । कालदोषान्न यदि लभेत निपुणं सहायं संयमानुष्ठानकुशलं परत्रसाधनद्वितीयं ज्ञानादिगुणोत्कटं गुणाधिकं वा, गुणैः समं वा । तृतीयार्थे पञ्चमी । एकोऽपि संहननादियुक्तः पापानि पापकारणान्यसदनुष्ठानानि विवर्जयन्विहरेदुचितविहारेण । कामेष्विच्छाकामादिष्वपि सङ्गमगच्छन् ॥ १० ॥

( अर्थ. ) असंक्लिष्ट साधुनी साथे रहेवुं एम कह्युं तेमां विशेष कहेछे. णया इत्यादि सूत्र. साधु जे ते ( या के० ) यदि एटले जो कदाच ( गुणाहिअं के० ) गुणाधिकं

एटले पोताना करता अधिक गुणशाली एवा (वा के०) अथवा (गुणउ के०) गुणतः एटले गुणवडे (समं के०) समं एटले समान एवा (वा के०) वली (निउणं के०) निपुणं एटले संयम पालवामां कुशल एवा (सहायं के०) सहायं एटले परलोक साधन करवामां साहाय्य करनार एवा अन्य साधु प्रत्ये (न लजिज्जा के०) न लन्नेत एटले न पामे, तो (पावाइं के०) पापानि एटले पापकर्म प्रत्ये (विवज्जयंतो के०) विवर्जयन् एटले वर्ज करता तथा (कामेसु के०) कामेषु एटले इछा कामादिकने विषे (असज्जमाणो के०) असज्जमानः एटले आसक्त नहि थता एवा (एगो वि के०) एकोऽपि एटले एकला पण (विहरिज्ज के०) विहरेत् एटले विचरे. पण शिथिलचारित्रियानी साथे विचरे नहि. ॥ १० ॥

---

(दीपिका.) अत्र असंक्लिष्टैः समं वसेदित्युक्तं पुनर्विधिविशेषमाह । साधुः कालदोषात् यदि कथंचित् निपुणं संयमानुष्ठानकुशलं सहायं परलोकसाधने द्वितीयं न लन्नेत । किंनूतं सहायम् । गुणाधिकं वा ज्ञानादिगुणैरधिकं वा । गुणैः समं वा । वाशब्दात् गुणहीनमपि जात्यकाञ्चनकल्पं विनीतं वा । तदा किं कुर्यादित्याह । तदा एकोऽपि संहननादियुक्तः पापानि पापकारणानि असदनुष्ठानानि विवर्जयेत् । विविधमनेकैः प्रकारैः सूत्रोक्तैः परिहरन् सन् विहरेत् उचितविहारेण । किं कुर्वन् । कामेष्विछाकामादिषु असज्जमानः सङ्गमगछन् एकोऽपि विहरेत् । परं नतु पार्श्वस्थादिपापमित्रसङ्गं कुर्यात् । तस्य डुष्टत्वात् । तथा अन्यैरप्युक्तम् । वरं विहर्तुं सह पन्नगैर्न्नवेछिवात्मन्निर्वा रिपुन्निः सहोषितुम् अधर्मयुक्तैश्च परैरपण्डितैर्नपापमित्रैः सह वर्त्तितुं क्षमम् १ ॥ इहैव हन्युर्भुजगा हि रोषिता धृतासयश्छिद्रमवेद्य चारयः ॥ असत्प्रवृत्तेन जनेन संगतः परत्र चैवेह विहन्यते जनः ॥ २ ॥ तथा ॥ परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेत् ॥ आत्मानं योऽतिसंधत्ते सोऽन्यस्मै स्यात्कथं हितः ॥ ३ ॥ तथा ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ॥ महान्ति पातकान्याहुरेन्निश्च सह संगतम् ॥ इत्यलं प्रसङ्गेन । अथ सूत्रार्थावसर ॥ १० ॥

---

(टीका.) असंक्लिष्टैः समं वसेदित्युक्तमत्र विशेषमाह । ण्य त्ति सूत्रम् । अस्य व्याख्या । कालदोषान्न यदि लन्नेत । न यदि कथंचित् प्राप्नुयात् । निपुणं संयमानुष्ठानकुशलं सहायं परलोकसाधनद्वितीयम् । किंविशिष्टमित्याह । गुणाधिकं वा ज्ञानादिगुणोत्कटं वा । गुणतः समं वा । तृतीयार्थे पञ्चमी । गुणैस्तुल्यं वा । वाशब्दाद्धीनमपि जात्यकाञ्चनकल्पं विनीतं वा । ततः किमित्याह । एकोऽपि संहननादियुक्तः पापानि पापकारणान्यसदनुष्ठानानि विवर्जयन् विविधमनेकैः प्रकारैः सूत्रोक्तैः परि-

इति गाथार्थः। सांप्रतं प्रतिज्ञाशुद्धिमनिधातुकाम आह ॥ जह जिणसासणनिरया, धम्मं पालेंति साहवो सुद्धं ॥ न कुतित्थिएसु एवं, दीसइ परिपालणोवाउ ॥ ८३ ॥ व्याख्या ॥ यथा येन प्रकारेण जिनशासननिरता निश्चयेन रता धर्मं प्राग्निरूपितशब्दार्थं पालयन्ति रक्षन्ति। साधवः प्रव्रजिताः षड्जीवनिकायपरिज्ञानेन कृतकारितादिपरिवर्जनेन च शुद्धमकलङ्कं नैवं तन्त्रान्तरीयाः। यस्मान्न कुतीर्थिकेष्वेवं यथा साधुषु दृश्यते परिपालनोपायः। षड्जीवनिकायपरिज्ञानाद्यजावात्। उपायग्रहणं च साभिप्रायकम्। शास्त्रोक्तः खलूपायोऽत्र चिन्त्यते। न पुरुषानुष्ठानम्। कापुरुषा हि वितथकारिणोऽपि जवन्त्येवेति गाथार्थः। अत्राह ॥ तेसु वि य धम्मसद्दो, धम्मं निययं च ते पसंसंति। नणु जणिउं सावज्जो कुतित्थिधम्मो जिणवरेहिं ॥ ८४ ॥ व्याख्या ॥ तेष्वपि च तन्त्रान्तरीयधर्मेषु। किम्। धर्मशब्दो लोके रूढः। तथा धर्मं निज चात्मीयमेव यथातथं ते प्रशंसन्ति स्तुवन्ति। ततश्च कथमेतदित्यत्रोच्यते। नन्वित्यक्षमायां जणित उक्तः। पूर्वं सावद्यः सपापः कुतीर्थिकधर्मः चरकादिधर्मः। कैः। जिनवरैस्तीर्थकरैः "ण जिणेहिं उ पसद्धो" इति वचनात्। षड्जीवनिकायपरिज्ञानाद्यजावादेवेत्यत्रापि बहु वक्तव्यं तत्तु नोच्यते ग्रन्थविस्तरजयादिति गाथार्थः तथा॥ जो तेसु धम्मसद्दो, सो उवयारेण निच्छएण इहं ॥ जह सीहसद्दु सीहे, पाहमुवयारउ सन्ने ॥ ८५ ॥ व्याख्या ॥ यस्तेषु तन्त्रान्तरीयधर्मेषु धर्मशब्दः स उपचारेणापरमार्थेन, निश्चयेनात्र जिनशासने। कथम्। यथा सिंहशब्दः सिंहे व्यवस्थितः प्राधान्येनोपचारत उपचारेणान्य माणवकादौ यथा सिंहो माणवकः। उपचारनिमित्तं च शौर्यक्रौर्यादयः। धर्मे त्वनाद्यनिधानादय इति गाथार्थः ॥ एस पइन्नासुद्धी, हेउ अहिंसाइएसु पंचसु वि ॥ जावेण जयंती, हेउविसुद्धी इमा तह ॥ ८६ ॥ व्याख्या ॥ एषा उक्तस्वरूपा प्रतिज्ञाया शुद्धिः प्रतिज्ञाशुद्धिः। हेतुरहिंसादिषु पञ्चस्वपि सद्भावेन यतन्त इत्ययं च प्राग् व्याख्यात एव। शुद्धिमभिधातुकामेन च जाष्यकृता पुनरुपन्यस्त इत्यत एवाह। हेतोर्विशुद्धिर्हेतुविशुद्धिः। विषयविजाषावस्थापनं विशुद्धिः। इमा इयं तत्र प्रयोग इति गाथार्थः ॥ जं जत्तपाण-उवगरण-वसहिसयणासणाइसु जयंति ॥ फासुयअकयअकारिय-अणणुमयाणुद्दिट्ठ-जोई य ॥ ८७ ॥ व्याख्या ॥ यद्यस्माद्भक्तं च पानं चोपकरणं च वसतिश्च शयनासनादय श्चेति समासस्तेषु। किम्। यतन्ते प्रयत्नं कुर्वन्ति कथमेतदेवमित्यत्राह। यस्मात्प्रासुकं चाकृतं चाकारितं चाननुमतं चानुद्दिष्टं च। त प्रासुकं शीलं येषां ते तथाविधाः। तत्रासवः प्राणाः। प्रगता असवः प्राणा यस्मादिति प्रासुकं निर्जीवम्। तत्स्वकृतमपि जवत्यत आह अकृतम्। तदपि कारितमपि जवत्यत आह अकारितम्। तदप्यनुमतमपि जवत्यत आह अननुमतम्। तदप्युद्दिष्टमपि जवति

हरन् विहरेदुचितविहारेण कामेष्विच्छाकामादिष्वसज्जमानः संगमगच्छन्नेकोऽपि विहरेन्नतु पार्श्वस्थादिपापमित्रसङ्गं कुर्यात्तस्य दुष्टत्वात्तथा चान्यैरप्युक्तम् ॥ वरं विहर्तुं सहपन्नगैर्जवेन्निवात्मजिर्वा रिपुन्निः सहोषितुम् ॥ अधर्मयुक्तैश्चपलैरपण्डितैर्न पापमित्रैः सह वर्त्तितुं क्षमम् ॥ १ ॥ इहैव हन्युर्भुजगा हि रोषिताः, धृतासयश्छिद्रमवेक्ष्य चारयः ॥ असत्प्रवृत्तेन जनेन संगतः, परत्र चैवेह च हन्यते जनः ॥ २ ॥ तथा ॥ परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेत् ॥ आत्मानं योऽतिसंधत्ते, सोऽन्यस्मै स्यात्कथं हितः ॥ १ ॥ तथा ॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ॥ महान्ति पातकान्याहुरेजिश्च सह संगतम् ॥ १ ॥ इत्यलं प्रसङ्गेनेति सूत्रार्थः ॥ १० ॥

संवच्छरं वा वि परं पमाणं, बीअं च वासं न तहिं वसिज्जा ॥
सुत्तस्स मग्गेण चरिज्ज भिक्खू, सुत्तस्स अत्थो जह आणवेइ ॥११॥

---

( अवचूरिः ) विहारकालमाह । संवत्सरं वापि । संवत्सरो वर्षासु चतुर्मासिकम् । अपिशब्दान्मासमपि। परं प्रमाणं वर्षाऋतुबद्धयोरुत्कृष्टमेकत्र निवासकालमानमेतत् । द्वितीयं वर्षं वर्षासु च ऋतुबद्धे न तत्र वसेत् । तत्र सङ्गदोषात् । द्वितीयं तृतीयं परिहृत्य वसेदिति । किं बहुना । सर्वत्रैव सूत्रस्य मार्गेणैव । आगमोद्देशेन प्रवर्त्तेत इति भावः । सूत्रस्यार्थ उत्सर्गापवादगर्भो यथाज्ञापयति नियुङ्क्ते प्रवर्त्तेत तथा ॥ ११ ॥

---

( अर्थ. ) हवे विहार कालनुं प्रमाण कहे छे. संवच्छरं इत्यादि सूत्र. ( संवच्छरं के० ) संवत्सरं एटले वर्षाकालना चार महिना तथा ( वावि के० ) वापि एटले वली ऋतुबद्ध कालमां एक मास ए साधुर्उना एक ठेकाणे रहेवानुं ( परं के० ) परं एटले उत्कृष्ट ( पमाणं के० ) प्रमाणं एटले प्रमाण छे. जे ठेकाणे वर्षाकालनुं चोमासुं अथवा ऋतुबद्ध कालमां मासकल्प कर्यो. (तहिं के०) तत्र एटले त्यां लागट (बीअं के०) द्वितीयं एटले बीजुं (वासं के०) वर्षम् एटले चोमासुं अथवा मासकल्प प्रत्ये (न वसिज्जा के०) न वसेत् एटले रहे नहि. ( सुत्तस्स के० ) सूत्रस्य एटले सूत्रनो ( अत्थो के० ) अर्थः एटले अर्थ ( जह के० ) यथा एटले जेम ( आणवेइ के० ) आज्ञापयति एटले आज्ञा करे. तेम (भिक्खू के०) भिक्षुः एटले साधु ( सुत्तस्स के० ) सूत्रस्य एटले सूत्रना ( मग्गेण के० ) मार्गेण एटले मार्गवडे ( चरिज्ज के० ) चरेत् एटले चाले. ॥ ११ ॥

---

( दीपिका. ) साधोः संवत्सरं वर्षासु चातुर्मासिकं ज्येष्ठावग्रहं विहारकालमाह । द्वितीयं नैकत्र क्षेत्रे वसेत् । अपिशब्दात् मासमपि परं प्रमाणमृतुबद्धकाले द्वितीयं तत्र क्षेत्रे न वसेत् । यत्र एको वर्षाकल्पः कृतस्तत्रोत्कृष्टतो द्वितीयो वर्षाकल्पो न

कार्यः । एवं मासकल्पोऽपि द्वितीय एकक्षेत्रे उत्सर्गतो न कार्य ऋतुबद्धे काले । कुतः। गृहस्थादिसंगदोषात् । द्वितीयं तृतीयं वा वर्षं मासं वा परिहृत्य तत्र क्षेत्रे वसेदपि । किं बहुना सर्वत्रैव सूत्रमार्गेण चरेत् । भिक्षुरागमादेशे वर्त्तेतेति भावः । तथापि न उंघत एव यथाश्रुतग्राही स्यात् । अपितु सूत्रस्य अर्थः पूर्वापराविरोधितन्त्रयुक्तिघटितः पारमार्थिकोत्सर्गापवादगर्भो यथाज्ञापयति नियुङ्क्ते तथा वर्तेत न अन्यथा । यथेह अपवादतो नित्यवासेऽपि वसतावेव प्रतिमासादि साधूनां संस्तारगोचरादि परिवर्त्तेत नान्यथा शुद्धापवादायोगादित्येवं वन्दनप्रतिक्रमणादिष्वपि तदर्थं प्रत्युपेक्षणेन अनुष्ठानेन वर्त्तेत । नतु तथाविधलोकेहायातं परित्यजेत् । आशातनाप्रसङ्गात् ॥११॥

---

( टीका. ) विहारकालमाह । संवच्छरं ति सूत्रम् । अस्य व्याख्या । संवत्सरं वापि । अत्र संवत्सरशब्देन वर्षासु चातुर्मासिको ज्येष्ठावग्रह उच्यते । तमपि। अपिशब्दान्मासमपि परं प्रमाणम् । वर्षाऋतुबद्धयोरुत्कृष्टमेकत्र निवासकालमानमेतत् । द्वितीयं च वर्षम् । चशब्दस्य व्यवहित उपन्यासः । द्वितीयं वर्षं वर्षासु चशब्दान्मासं च ऋतुबद्धे न तत्र क्षेत्रे वसेत् । यत्रैको वर्षाकल्पो मासकल्पश्च कृतः । अपितु सङ्गदोषाद् द्वितीयं तृतीयं च परिहृत्य वर्षादिकालं ततस्तत्र वसेदित्यर्थः । सर्वथा किं बहुना सर्वत्रैव सूत्रस्य मार्गेण चरेद्भिक्षुः । आगमादेशेन वर्त्तेतेति भावः । तत्रापि नौघत एव यथाश्रुतग्राही स्यात् । अपि तु सूत्रस्यार्थः पूर्वापराविरोधितन्त्रयुक्तिघटितः पारमार्थिकोत्सर्गापवादगर्भो यथाज्ञापयति नियुङ्क्ते तथा वर्त्तेत नान्यथा । यथेहापवादतो नित्यवासेऽपि वसतावेव प्रतिमासादिसाधूनां संस्तारगोचरादि परिवर्त्तेत नान्यथा शुद्धापवादायोगादित्येवं वन्दनकप्रतिक्रमणादिष्वपि तदर्थं प्रत्युपेक्षणेनानुष्ठानेन वर्त्तेत। नतु तथाविधलोकेहायातं परित्यजेत्तदाशातनाप्रसङ्गादिति सूत्रार्थः ॥ ११ ॥

जो पुव्वरत्तावररत्तकाले, संपिक्खई अप्पगमप्पगेणं ॥
किं मे कडं किच्चमकिच्चसेसं, किं सक्कणिज्जं न समायरामि ॥ १२ ॥

---

( अवचूरिः ) एवं विविक्तचर्यावतोऽसीदनगुणोपायमाह । यः साधुः पूर्वरात्रापररात्रकाले रात्रिप्रथमचरमप्रहरयोरित्यर्थः । संप्रेक्षते सूत्रोपयोगनीत्या आत्मानमात्मनैव । कथमित्याह । किं मे कृतमिति । छान्दसत्वात्तृतीयार्थे षष्ठी । किं मया कृतं शक्त्यनुरूपं तपश्चरणादि । किं च मम कृत्यशेषं कर्त्तव्यशेषमुचितम् । किं वा शक्यं वैयावृत्त्यादि न समाचरामि न करोमीति ॥ १२ ॥

( अर्थ. ) एवी रीते विचरनार साधु न सीदाय तेनो उपाय कहे छे. जो इत्यादि सूत्र. ( जो के० ) यः एटले जे साधु ( पुव्वरत्तावररत्तकाले के० ) पूर्वरात्रापररात्रकाले एटले रात्रिना प्रथम अने चरम प्रहरने विषे ( अप्पगं के० ) आत्मानं एटले पोताने ( अप्पएणं के० ) आत्मना एटले पोते ( संपिक्खए के० ) संप्रेक्षते एटले सूत्रोक्त प्रकारवडे तपासे. ते आ रीते (मे के०) मया एटले में (किं के०) किं एटले कयुं ( किच्च के० ) कृत्यं एटले करवायोग्य एवुं तपस्या प्रमुख कृत्य (कडं के०) कृतं एटले कर्युं. तेमज ( किं के० ) कयुं ( म के० ) मम एटले मारा ( किच्चसेसं के० ) कृत्य शेषं एटले करवायोग्य कार्य बाकी छे, तथा ( किं के० ) किं एटले कयुं ( सक्कणिज्जं के० ) शक्यं एटले माराथी बनी शके एवुं वेयावच प्रमुख कार्य ( न समायरामि के०) न समाचरामि एटले आचरतो नथी ॥ १२ ॥

( दीपिका. ) एवं विशुद्धविविक्तचर्यावतोऽसीदनगुणोपायमाह । यः साधुर्भवेत् स पूर्वरात्रापररात्रकाले रात्रौ प्रथमचरमप्रहरयोरित्यर्थः । संप्रेक्षते सूत्रोपयोगनीत्यात्मानं कर्मभूतमात्मनैव करणभूतेन प्रेक्षते। कथं प्रेक्षत इत्याह। किं मे कृतमिति। छान्दसिकत्वात्तृतीयार्थे षष्ठी। किं मया कृतं शक्तेरनुरूपं तपश्चरणादि योगस्य । किंच मम कृत्यशेषं कर्तव्यात् शेषमुचितम् । पुनः किंच शक्यं वयोऽवस्थाऽनुरूपं वैयावृत्त्यादि अहं न समाचरामीति । तस्याकरणे हि तत्कालनाश इति ॥ १२ ॥

( टीका. ) एवं विविक्तचर्यावतोऽसीदनगुणोपायमाह । जो त्ति सूत्रम् । अस्य व्याख्या । यः साधुः पूर्वरात्रापररात्रकाले रात्रौ प्रथमचरमयोः प्रहरयोरित्यर्थः । संप्रेक्षते सूत्रोपयोगनीत्या आत्मानं कर्मभूतमात्मनैव करणभूतेन । कथमित्याह । किं मे कृतमिति छान्दसत्वात्तृतीयार्थे षष्ठी । किं मया कृतं शक्त्यनुरूपं तपश्चरणादि योगस्य । किंच मम कृत्यशेषं कर्तव्यशेषमुचितम् । किं शक्यं वयोऽवस्थानुरूपं वैयावृत्त्यादि न समाचरामि न करोमि । तदकरणे हि तत्कालनाश इति सूत्रार्थः ॥ १२ ॥

किं मे परो पासइ किंच अप्पा, किं वाहं खलिअं न विवज्जयामि ॥
इच्चेव सम्मं अणुपासमाणो, अणागयं नो पडिबंध कुज्जा ॥ १ ॥

( अवचूरिः ) किं मम स्खलितं परः पश्यति । किं वात्मा मनाक्संवेगापन्नः । किंवाहमोघत एव स्खलितं न विवर्जयामि । इत्येवं सम्यगनुपश्यन्ननागतं प्रतिबन्धं न कुर्यादागामिकालविषयं संयमप्रतिबन्धं न करोतीति ॥ १३ ॥

( अर्थ. ) वली ( परो के० ) परः एटले स्वपक्ष अथवा परपक्ष संबंधी कोइ बीजो

कार्यः । एवं मासकल्पोऽपि द्वितीय एकक्षेत्रे उत्सर्गतो न कार्यं ऋतुबद्धे काले । कुतः। गृहस्थादिसंगदोषात्। द्वितीयं तृतीयं वा वर्षं मासं वा परिहृत्य तत्र क्षेत्रे वसेदपि। किं बहुना सर्वत्रैव सूत्रमार्गेण चरेत् । भिक्षुरागमादेशे वर्त्ततेति भावः । तथापि न उद्यत एव यथाश्रुतग्राही स्यात् । अपितु सूत्रस्य अर्थः पूर्वापराविरोधितन्त्रयुक्तिघटितः पारमार्थिकोत्सर्गापवादगर्भो यथाज्ञापयति नियुङ्क्ते तथा वर्तेत न अन्यथा। यथेह अपवादतो नित्यवासेऽपि वसतावेव प्रतिमासादि साधूनां संस्तारगोचरादि परिवर्त्तेत नान्यथा शुद्धापवादायोगादित्येवं वन्दनप्रतिक्रमणादिष्वपि तदर्थं प्रत्युपेक्षणेन अनुष्ठानेन वर्त्तेत । नतु तथाविधलोकेहायातं परित्यजेत्। आशातनाप्रसङ्गात् ॥११॥

(टीका.) विहारकालमाह । संवच्छरं ति सूत्रम् । अस्य व्याख्या । संवत्सरं वापि । अत्र संवत्सरशब्देन वर्षासु चातुर्मासिको ज्येष्ठावग्रह उच्यते । तमपि। अपिशब्दान्मासमपि परं प्रमाणम्। वर्षाऋतुबद्धयोरुत्कृष्टमेकत्र निवासकालमानमेतत् । द्वितीयं च वर्षम्। चशब्दस्य व्यवहित उपन्यासः। द्वितीयं वर्षं वर्षासु चशब्दान्मासं च ऋतुबद्धे न तत्र क्षेत्रे वसेत् । यत्रैको वर्षाकल्पो मासकल्पश्च कृतः । अपितु सङ्गदोषाद् द्वितीयं तृतीयं च परिहृत्य वर्षादिकालं ततस्तत्र वसेदित्यर्थः । सर्वथा किं बहुना सर्वत्रैव सूत्रस्य मार्गेण चरेद्भिक्षुः । आगमादेशेन वर्त्तेतेति भावः । तत्रापि नौघत एव यथाश्रुतग्राही स्यात्। अपि तु सूत्रस्यार्थः पूर्वापराविरोधितन्त्रयुक्तिघटितः पारमार्थिकोत्सर्गापवादगर्भो यथाज्ञापयति नियुङ्क्ते तथा वर्त्तेत नान्यथा। यथेहापवादतो नित्यवासेऽपि वसतावेव प्रतिमासादिसाधूनां संस्तारगोचरादि परिवर्त्तेत नान्यथा शुद्धापवादायोगादित्येवं वन्दनकप्रतिक्रमणादिष्वपि तदर्थं प्रत्युपेक्षणेनानुष्ठानेन वर्त्तेत। नतु तथाविधलोकेहायातं परित्यजेत्तदाशातनाप्रसङ्गादिति सूत्रार्थः ॥ ११ ॥

जो पुव्वरत्तावररत्तकाले, संपिरकई अप्पगमप्पगेणं ॥
किं मे कडं किच्चमकिच्चसेसं, किं सक्कणिज्जं न समायरामि ॥ १२ ॥

(अवचूरिः) एवं विविक्तचर्यावतोऽसीदनगुणोपायमाह । यः साधुः पूर्वरात्रापररात्रकाले रात्रिप्रथमचरमप्रहरयोरित्यर्थः। संप्रेक्षते सूत्रोपयोगनीत्या आत्मानमात्मनैव । कथमित्याह । किं मे कृतमिति । छान्दसत्वात्तृतीयार्थे षष्ठी। किं मया कृतं शक्त्यनुरूपं तपश्चरणादि । किं च मम कृत्यशेषं कर्त्तव्यशेषमुचितम्। किं वा शक्यं वैयावृत्त्यादि न समाचरामि न करोमीति ॥ १२ ॥

( अर्थ. ) एवी रीते विचरनार साधु न सीदाय तेनो उपाय कहे छे. जो इत्यादि सूत्र. ( जो के० ) यः एटले जे साधु ( पुव्वरत्तावररत्तकाले के० ) पूर्वरात्रापररात्रकाले एटले रात्रिना प्रथम अने चरम प्रहरने विषे ( अप्पगं के० ) आत्मानं एटले पोताने ( अप्पएणं के० ) आत्मना एटले पोते ( संपिरकए के० ) संप्रेक्षते एटले सूत्रोक्त प्रकारवडे तपासे. ते आ रीते (मे के०) मया एटले में (किं के०) किं एटले कयुं ( किच्च के० ) कृत्यं एटले करवायोग्य एवुं तपस्या प्रमुख कृत्य (कडं के०) कृतं एटले कर्खुं. तेमज ( किं के० ) कयुं ( म के० ) मम एटले मारा ( किच्चसेसं के० ) कृत्य शेषं एटले करवायोग्य कार्य बाकी छे, तथा ( किं के० ) किं एटले कयुं ( सक्कणिज्जं के० ) शक्यं एटले माराथी बनी शके एवुं वेयावच प्रमुख कार्य ( न समायरामि के० ) न समाचरामि एटले आचरतो नथी ॥ १२ ॥

( दीपिका. ) एवं विशुद्धविविक्तचर्यावतोऽसीदनगुणोपायमाह । यः साधुर्भवेत् स पूर्वरात्रापररात्रकाले रात्रौ प्रथमचरमप्रहरयोरित्यर्थः । संप्रेक्षते सूत्रोपयोगनीत्यात्मानं कर्मभूतमात्मनैव करणभूतेन प्रेक्षते । कथं प्रेक्षत इत्याह । किं मे कृतमिति । छान्दसिकत्वा-त्तृतीयार्थे षष्ठी । किं मया कृतं शक्तेरनुरूपं तपश्चरणादि योगस्य । किंच मम कृत्यशेषं कर्तव्यात् शेषमुचितम् । पुनः किंच शक्यं वयोऽवस्थाऽनुरूपं वैयावृत्त्यादि अहं न समाचरामीति । तस्याकरणे हि तत्कालनाश इति ॥ १२ ॥

( टीका. ) एवं विविक्तचर्यावतोऽसीदनगुणोपायमाह । जो त्ति सूत्रम् । अस्य व्याख्या । यः साधुः पूर्वरात्रापररात्रकाले रात्रौ प्रथमचरमयोः प्रहरयोरित्यर्थः । संप्रेक्षते सूत्रोपयोगनीत्या आत्मानं कर्मभूतमात्मनैव करणभूतेन । कथमित्याह । किं मे कृतमिति छान्दसत्वात्तृतीयार्थे षष्ठी । किं मया कृतं शक्त्यनुरूपं तपश्चरणादि योगस्य । किंच मम कृत्यशेषं कर्तव्यशेषमुचितम् । किं शक्यं वयोऽवस्थानुरूपं वैयावृत्त्यादि न समाचरामि न करोमि । तदकरणे हि तत्कालनाश इति सूत्रार्थः ॥ १२ ॥

किं मे परो पासइ किंच अप्पा, किं वाहं खलिअं न विवज्जयामि ॥
इच्चेव सम्मं अणुपासमाणो, अणागयं नो पडिबंध कुज्जा ॥ १ ॥

( अवचूरिः ) किं मम स्खलितं परः पश्यति । किं वात्मा मनाक्संवेगापन्नः । किंवाहमोघत एव स्खलितं न विवर्जयामि । इत्येवं सम्यगनुपश्यन्ननागतं प्रतिबन्धं न कुर्यादागामिकालविषयं संयमप्रतिबन्धं न करोतीति ॥ १३ ॥

( अर्थ. ) वली ( परो के० ) परः एटले स्वपक्ष अथवा परपक्ष संबंधी कोइ बीजो

पुरुष ( मे के० ) मे एटले मारा ( किं के० ) किं एटले कया ( खलिअं के० ) स्खलितं एटले प्रमाद प्रत्ये ( पासइ के० ) पश्यति एटले जुवे छे, ( च के० ) वली ( अप्पा के० ) आत्मा एटले हुं पोते ( किं के० ) किं एटले कया मारा प्रमादप्रत्ये जोवुं बुं ( वा के० ) अथवा ( अहं के० ) अहं एटले हुं ( किं के० ) किं एटले कया ( खलिअं के० ) स्खलितं एटले प्रमादप्रत्ये ( न विवज्जयामि के० ) न विवर्जयामि एटले वर्जतो नथी. ( इच्चेव के० ) इत्येवं एटले उपर कहेल प्रकारे ( सम्मं के० ) सम्यक् एटले उत्तम प्रकारे (अणुपासमाणो के०) अनुपश्यन् एटले विचार करता रहे ते साधु ( अणागयं के० ) अनागतं एटले नावी ( पडिबंध के० ) प्रतिबंधं एटले प्रतिबंध प्रत्ये ( नो कुज्जा के० ) नो कुर्यात् एटले न करे. अर्थात् फरीथी तेवो दोष न आचरे. ॥ १३ ॥

---

( दीपिका. ) तथा किं मम स्खलितं परः स्वपक्षपरपक्षलक्षणः पश्यति । किंवा आत्मा क्वचित् मनाक् संवेगं प्राप्तः । किं वा अहमोघत एव स्खलितं न विवर्जयामी-त्येवं सम्यगनुपश्यन्ननेनैव प्रकारेण स्खलितं ज्ञात्वा आगमोक्तेन विधिना नूयः पश्यन्ननागतं न प्रतिबन्धं कुर्यात् साधुः । य आगामिकालविषयं न असंयमप्रतिबन्धं करोतीति ॥ १३ ॥

---

( टीका. ) तथा किं मे त्ति सूत्रम् । किं मम स्खलितं परः स्वपक्षपरपक्षलक्षणः पश्यति । किं वात्मा क्वचिन्मनाक् संवेगापन्नः । किंवाहमोघत एव स्खलितं न विव-र्जयामि । इत्येवं सम्यगनुपश्यन् अनेनैव प्रकारेण स्खलितं ज्ञात्वा सम्यगागमो-क्तेन विधिना नूयः पश्यन्ननागतं न प्रतिबन्धं कुर्यात् । आगामिकालविषयं ना-संयमप्रतिबन्धं करोतीति सूत्रार्थः ॥ १३ ॥

जत्थेव पासे कइ डुप्पउत्तं, काएण वाया अज्ज माणसेणं ॥
तत्थेव धीरो पडिसाहरिज्जा, आइन्नउ खिप्पमिव क्खलीणं ॥ १४ ॥

---

( अवचूरिः ) कथमित्याह । यत्रैव पश्येत् । यत्रैव पश्यत्युक्तवत्परात्मदर्शनद्वा-रेण । क्वचित्संयमस्थानावसरे । डुःप्रयुक्तं डुर्व्यवस्थितम् । आत्मानमिति गम्यते । कायेन, वाचा अथ मानसेन । तत्रैव संयमस्थानावसरे धीरो बुद्धिमान् प्रतिसंह-रेदात्मानमिति शेषः । निदर्शनमाह । आकीर्णो जात्याश्वः क्षिप्रं शीघ्रं यथा खलि-नं कविकं नियमितगमननिमित्तं प्रतिपद्यते । एवं यो डुःप्रयोगत्यागेन खलिनकल्पं सम्यग्विधिं प्रतिपद्यते ॥ १४ ॥

(अर्थ.) शी रीते अनागत प्रतिबंध न करे ते कहे छे. जछेव इत्यादि सूत्र. साधु जे ते ( कथ के० ) कदा एटले पडिलेहण प्रमुख क्रियाना कोइ पण वखते ( जछेव के० ) यत्रैव एटले जे ठेकाणेज ( काएण के० ) कायेन एटले कायावडे, ( वाया के० ) वाचा एटले वाणीवडे, ( अडु के० ) अथवा ( माणसेणं के० ) मानसेन एटले मनवडे पोताने ( डुप्पउत्तं के० ) डुःप्रयुक्तं एटले प्रमादी एवाने ( पासे के० ) पश्येत् एटले जुवे. (धीरो के०) धीरः एटले धीर एवा साधु जे ते (तछेव के०) तत्रैव एटले तेज ठेकाणे तथा तेज समये पोताने ( पडिसाहरिज्जा के० ) प्रतिसंहरेत् एटले ठेकाणे लावे. एना उपर दृष्टांत कहे छे. ( इव के० ) इव एटले जेम ( आइन्नउ के० ) आकीर्णकः एटले जातिवंत अश्व जे ते ( खिप्पं के० ) क्षिप्रं एटले शीघ्र ( खलीणं के० ) खलीनं एटले लगाम ग्रहण करे तेम; अर्थात् जेम सारो अश्व नियमित गमनने अर्थे शीघ्र लगाम ले छे, तेम ते साधु पण अविधिनो त्याग करी लगाम सरखा सम्यग्विधिनो अंगीकार करे. ॥ १४ ॥

---

(दीपिका.) कथमित्याह। साधुर्यत्रैव कचित् संयमस्थानावसरे धर्मोपधिप्रत्युपेक्षणादौ डुःप्रयुक्तं डुर्व्यवस्थितमात्मानमिति गम्यते। पश्येत् पश्यति उक्तवत्परमात्मदर्शनद्वारेण। केन इत्याह। कायेन, वाचा अथ मानसेन। मन एव मानसम्। करणत्रयेणेत्यर्थः। तत्रैव तस्मिन्नेव संयमस्थाने धीरो बुद्धिमान् प्रतिसंहरेत् प्रतिसंहरति यः स्वात्मानं सम्यग् विधिं प्रतिपद्यत इत्यर्थः। अत्र दृष्टान्तमाह। यथा जवादिन्निर्गुणैराकीर्णो व्याप्तो जात्योऽश्व इति गम्यते। असाधारणविशेषणात्। तच्चेदम्। क्षिप्रमिव खलिनं शीघ्रं। कविकमिव। यथा जात्योऽश्वो नियमितगमननिमित्तं शीघ्रं खलिनं प्रतिपद्यत एवं यो डुःप्रयोगत्यागेन खलिनकल्पं सम्यग्विधिम्। एतावतांशेन दृष्टान्तः ॥ १४ ॥

---

(टीका.) कथमित्याह। जछेव त्ति सूत्रम्। अस्य व्याख्या। यत्रैव पश्येत् यत्रैव पश्यत्युक्तवत्परात्मदर्शनद्वारेण कचित्संयमस्थानावसरे धर्मोपधिप्रत्युपेक्षणादौ डुःप्रयुक्तं डुर्व्यवस्थितमात्मानमिति गम्यते। केनेत्याह। कायेन वाचा अथ मानसेनेति। मन एव मानसम्। करणत्रयेणेत्यर्थः। तत्रैव तस्मिन्नेव संयमस्थानावसरे धीरो बुद्धिमान् प्रतिसंहरेत् प्रतिसंहरति य आत्मानं सम्यग् विधिं प्रतिपद्यत इत्यर्थः। निदर्शनमाह। आकीर्णो जवादिन्निर्गुणैर्जात्योऽश्व इति गम्यते। असाधारणविशेषणात्। तच्चेदम्। क्षिप्रमिव खलिनं शीघ्रं कविकमिव। यथा जात्योऽश्वो नियमितगमननिमित्तं

शीघ्रं खलिनं प्रतिपद्यत एवं यो दुःप्रयोगत्यागेन खलिनकल्पं सम्यग्विधिमेतावतांशेन दृष्टान्त इति सूत्रार्थः ॥ १४ ॥

जस्सेरिसा जोग जिइंदिअस्स, धिईमऊ सप्पुरिसस्स निच्चं ॥
तमाहु लोए पडिबुद्धजीवी, सो जीअइ संजमजीविएणं ॥ १५ ॥

---

( अवचूरिः ) यः पूर्वरात्रेत्याद्यधिकारोपसंहारायाह । यस्य साधोरीदृशाः स्वहितालोकनप्रवृत्तिरूपा योगा मनोवाक्कायव्यापारा जितेन्द्रियस्य धृतिमतः संयमे सधृतिकस्य सत्पुरुषस्य प्रमादजयात् । नित्यं सर्वकालं तमेवंभूतमाहुरभिदधति । लोके विद्वांसः प्रतिबुद्धजीविनं प्रमादनिद्रारहितजीवितशीलम् । स एवंगुणयुक्तः सन् जीवति संयमजीवितेन सर्वथा संयमप्रधानेन जीवितेनेति ॥ १५ ॥

---

( अर्थ. ) हवे प्रस्तुत प्रकरणनो उपसंहार करे छे. जस्स इत्यादि सूत्र. ( जिइंदिअस्स के० ) जितेन्द्रियस्य एटले चक्षुरादि इंद्रियोने जितनार एवा ( धिईमऊ के० ) धृतिमतः एटले संयमने विषे धृतिवाला एवा ( सप्पुरिसस्स के० ) सत्पुरुषस्य एटले सत्पुरुष एवा ( जस्स के० ) यस्य एटले जे साधुना ( जोग के० ) योगाः एटले मन वचन कायाना योग जे ते ( एरिसा के० ) ईदृशाः एटले एवा (निच्चं के०) नित्यं एटले दीक्षाथी मांडीने मरण सूधी रहे छे. ( तं के० ) तं एटले ते साधुने विद्वान लोको ( लोए के० ) लोके एटले सर्व जीवोमां ( पडिबुद्धजीवी के० ) प्रतिबुद्धजीविनं एटले प्रमादादि रहित जीवितवालाने ( आहु के० ) आहुः एटले कहे छे. कारण, ( सो के० ) सः एटले ते साधु ( संजमजीविएणं के० ) संयमजीवितेन एटले संयमजीवितवडे ( जीवइ के० ) जीवति एटले जीवे छे. ॥ १५ ॥

---

( दीपिका. ) यः पूर्वरात्रेत्याद्यधिकारोपसंहारायाह । विद्वांसस्तं साधुमेवंभूते लोके प्राणिसंघाते नित्यं सर्वकालं सामायिकप्रतिपत्तेरारभ्य आमरणं प्रतिबुद्धजीविनमाहुः कथयन्ति । कोऽर्थः । प्रतिबुद्धजीविनं प्रमादरहितजीवितशीलम् । स एवंगुणयुक्तः सन् जीवति संयमजीवितेन कुशलाभिसंधिभावात् सर्वथा संयमप्रधानजीवितेन । तं साधुं कम् । यस्य साधोरीदृशाः स्वहितालोचनप्रवृत्तिरूपा योगा मनोवाक्कायव्यापारा भवन्ति । किंभूतस्य साधोः । जितेन्द्रियस्य वशीकृतस्पर्शनादीन्द्रियसमूहस्य । पुनः किंभूतस्य यस्य । धृतिमतः संयमे धैर्यसहितस्य । पुनः किं० यस्य । सत्पुरुषस्य प्रमादजयान्महापुरुषस्य ॥ १५ ॥

---

( टीका. ) यः पूर्वरात्रेत्याद्यधिकारोपसंहारायाह । जस्स त्ति सूत्रम् । अस्य

व्याख्या। यस्य साधोरीदृशाः स्वहितालोचनप्रवृत्तिरूपा योगा मनोवाक्कायव्यापारा जितेन्द्रियस्य वशीकृतस्पर्शनादीन्द्रियकलापस्य धृतिमतः संयमे सद्वृत्तिकस्य सत्पुरुषस्य प्रमादजयान्महापुरुषस्य नित्यं सर्वकालं सामायिकप्रतिपत्तेरारभ्यामरणान्तम्। तमाहुर्लोके प्रतिबुद्धजीविनं तमेवंभूतं साधुमाहुरभिदधति विद्वांसः। लोके प्राणिसंघाते प्रतिबुद्धजीविनं प्रमादनिद्रारहितजीवितशीलम्। स एवंगुणयुक्तः सन् जीवति संयमजीवितेन कुशलाभिसंधिभावात् सर्वथा संयमप्रधानेन जीवितेनेति सूत्रार्थः ॥ १५ ॥

अप्पा खलु सइ पर रक्खिअव्वो, सव्विंदिएहिं सुसमाहिएहिं ॥
अरक्खिउ जाइपहं उवेइ, सुरक्खिउ सव्वदुहाण मुच्चइ त्ति बेमि ॥ १६ ॥
विवित्तचरिआ चूला सम्मता ॥ २ ॥
इइ दसवेआलिअं सुत्तं संमत्तं ॥ शुभम् ॥

---

(अवचूरिः) शास्त्रमुपसंहरन्नुपदेशसर्वस्वमाह। आत्मा। खलुशब्दो विशेषणार्थः। शक्तौ सत्यां परोऽपि सततं सर्वकालं रक्षितव्यः पालनीयः पारलौकिकापायेभ्यः। कथम्। सर्वेन्द्रियैः स्पर्शनादिभिः सुसमाहितेन निवृत्तविषयव्यापारेणेत्यर्थः। अरक्षणरक्षणयोः फलमाह। अरक्षितः सन् जातिपन्थानं जन्ममार्गमुपैति। सुरक्षितो यथागममप्रमादेन सर्वदुःखेभ्यः शारीरमानसेभ्यो विमुच्यते। इति ब्रविमीति पूर्ववत् ॥ १६ ॥ इति द्वितीयचूला व्याख्याता ॥ २ ॥

---

(अर्थ.) हवे शास्त्रनो उपसंहार करता उपदेशनो सार कहे छे. (हु खलु के०) खलु एटले निश्चये (अप्पा के०) आत्मा एटले पोतानो आत्मा जे ते (सययं के०) सततं एटले निरंतर (सुसमाहिएहिं के०) सुसमाहितैः एटले सारा समाधिमां राखेल एवा (सव्विंदिएहिं के०) सर्वेन्द्रियैः एटले सर्व इंद्रियोवडे (रक्खिअव्वो के०) रक्षितव्यः एटले रक्षण करवो. कारण के, आत्मा जे ते (अरक्खिउ के०) अरक्षितः एटले बराबर संयमवडे रक्षण कर्यो न होय तो (जाइपहं के०) जातिपथं एटले संसारप्रत्ये (उवेइ के०) उपैति एटले पामे छे. अने (सुरक्खिउ के०) सुरक्षितः एटले सम्यक् प्रकारे संयमवडे रक्षण कर्यो होय तो (सव्वदुहाण के०) सर्वदुःखेभ्यः एटले सर्व दुःखथी (मुच्चइ के०) मुच्यते एटले मुक्त थाय छे. (त्ति बेमि के०) इति ब्रवीमि एटले तीर्थंकर गणधरना उपदेशथी हुं एम कहुं छुं. ॥ १६ ॥

इति श्री दशवैकालिकनी बीजी चूलिकानो बालावबोध संपूर्ण. ॥ २ ॥

(दीपिका.) अथ शास्त्रमुपसंहरन्नुपदेशसर्वस्वमाह । एवंविधेन साधुना आत्मा । खलुशब्दो विशेषणार्थः । शक्तौ सत्यां परोऽपि सततं सर्वकालं रक्षितव्यः पालनीयः । परलोकसंबन्धिकष्टेभ्यः । कथमित्युपायमाह । यतः किं० साधुना । सर्वेन्द्रियैः स्पर्शनादिभिः सुसमाहितेन निवृत्तविषयव्यापारेण । अरक्षणरक्षणयोः फलमाह । अरक्षितः सन्नात्मा पन्थानं जन्ममार्गं संसारमुपैति सामीप्येन गच्छति । अथ सुरक्षितः पुनरात्मा यथागममप्रमादेन सुष्ठु रक्षितः सन् सर्वदुःखेभ्यः शारीरमानसेभ्यो विमुच्यते । विविधमनेकैः प्रकारैरपुनर्ग्रहणपरमस्वास्थ्यापादनलक्षणैर्मुच्यते विमुच्यते । ब्रवीमीति पूर्ववत् ॥ १६ ॥ इति चूलिकाद्वयं व्याख्यातम् ॥

---

(टीका.) शास्त्रमुपसंहरन्नुपदेशसर्वस्वमाह । अप्प त्ति सूत्रम् । अस्य व्याख्या । आत्मा खल्विति । खलुशब्दो विशेषणार्थः । शक्तौ सत्यां परोऽपि सततं सर्वकालं रक्षितव्यः पालनीयः । पारलौकिकापायेभ्यः । कथमित्युपायमाह । सर्वेन्द्रियैः स्पर्शनादिभिः सुसमाहितेन निवृत्तविषयव्यापारेणेत्यर्थः । अरक्षणरक्षणयोः फलमाह । अरक्षितः सन् जातिपन्थानं जन्ममार्गं संसारमुपैति सामीप्येन गच्छति । सुरक्षितः पुनर्यथागममप्रमादेन सर्वदुःखेभ्यः शारीरमानसेभ्यो विमुच्यते विविधमनेकैः प्रकारैरपुनर्ग्रहणपरमस्वास्थ्यापादनलक्षणैर्मुच्यते । इति ब्रवीमीति पूर्ववदिति सूत्रार्थः ॥१६॥

---

## अथावचूरिकोपसंहारः ।

अथ शास्त्रकर्त्तुः स्तवमाह निर्युक्तिकारः ॥ सिज्जंनवं गणधरं जिण पडिमादंसणेण पडिबुद्धं ॥ मणगपिअरं दसका-लिअस्स निज्जुहगं वंदे ॥ १ ॥ अर्थः । अनुत्तरज्ञानादिधर्मगणं धारयतीति गणधरस्तम् । प्रतिबुद्धं मिथ्यात्वाविरत्यज्ञानापगमेन सम्यक्त्वविकाशं प्राप्तम् । निर्यूहकं पूर्वगतोद्धृतार्थविरचनाकर्त्तारं वन्दे इति गाथाक्षरार्थः । भावार्थस्तु कथानकगम्यस्तच्चेदम् । श्रीसुधर्मशिष्यो जम्बूस्तस्य प्रभवः । तस्य कदाचिन्निशीथे को मे गणधर इति चिन्ता । आत्मनः सङ्घे गच्छे चोपयोगेनासद्भावं ज्ञात्वा तीर्थान्तरीयेषु राजगृहे शिज्जंभवं यजमानं दृष्ट्वा तत्र यज्ञवाटे धर्मलाभपूर्वम् 'अहो कष्टमहो कष्टं तत्त्वं न ज्ञायते पुनः' इति पठनाय शिष्यवृन्दं प्रेषितम् । तेन तत्कृतम् । तच्च शय्यंभवो द्वार्मूलस्थितो निशम्य चिन्तयति । एते शान्तास्तपस्विनोऽसत्यं न वदन्तीति । उपाध्यायान्ते गत्वा तत्त्वं किमिति पृष्टे वेदास्तत्त्वमित्युक्तौ असिमाकृष्य वदति 'शीर्षं ते छेत्स्यामि यदि तत्त्वं न कथयसि' । शीर्षच्छेदे तत्त्वं वाच्यमिति ध्यात्वा यूपस्याधस्तात्सर्वरत्नमयीपार्श्वप्रतिमां दर्शयित्वेदमत्र तत्त्वम् । अर्हद्धर्मस्तत्त्वं

न च तदिष्यत इत्यत आहानुद्दिष्टमिति। एतत्परिज्ञानोपायश्चोपन्यस्तसकलप्रदानादिलक्षणस्तत्रावगन्तव्य इति गाथार्थः। तदन्ये पुनः किमित्यत आह ॥ अफासुयकयकारिय–अणुमयउद्दिठ्ठजोइणो हंदि ॥ तसथावरहिंसाए, जणा अकुसला उ लिप्पंति ॥९७॥ व्याख्या ॥ अप्रासुककृतकारितानुमोदितोद्दिष्टभोजिनश्चरकादयः। हंदीत्युपप्रदर्शने। किमुपप्रदर्शयति। त्रसन्तीति त्रसा द्वीन्द्रियादयः। तिष्ठन्तीति स्थावराः पृथिव्यादयः। तेषां हिंसा प्राणव्यपरोपणलक्षणा तया जनाः प्राणिनः अकुशलाः अनिपुणा स्थूलमतयश्चरकादयो लिप्यन्ते संबध्यन्त इत्यर्थः। इह च हिंसाक्रियाजनितेन कर्मणा लिप्यन्त इति भावनीयम्। कारणे कार्योपचारात्ततश्च ते शुद्धधर्मसाधका न भवन्ति। साधव एव भवन्तीति गाथार्थः ॥ एसा हेउविसुद्धी, दिठ्ठंतो तस्स चेव य विसुद्धी ॥ सुत्ते भणिया उ फुडा, सुत्तफासे उ इयमन्ना ॥ ९९ ॥ व्याख्या ॥ एषानन्तरोक्ता हेतुविशुद्धिः प्राग्निरूपितशब्दार्था। अधुना दृष्टान्तः प्राग्निरूपितशब्दार्थस्तथा तस्यैव च दृष्टान्तस्य विशुद्धिः। किम्। सूत्रे भणितोक्तैव स्फुटा स्पष्टा। तच्चेदं सूत्रम्।

जहा दुमस्स पुप्फेसु,भमरो आवियइ रसं ॥ ण य पुप्फं किलामेइ, सोअ पीणेइ अप्पयं ॥ २ ॥ एमेए समणा वुत्ता, जे लोए संति साहुणो ॥ विहंगमा व पुप्फेसु, दाणभत्तेसणे रया ॥ ३ ॥

---

अवचूरिः। असमस्तपदाभिधानमनुमेये गृहिद्रुमाणामाहारादिषु पुष्पाण्यधिकृत्य प्रतिपादनार्थमिति। तथा न्यायोपात्तवित्तदाने ग्रहणं प्रतिषिद्धमेव। आपिबति नच नैव क्लामयति प्रीणाति तर्पयति॥२॥ एवमनेन प्रकारेण एते श्राम्यन्तीति श्रमणाः तपस्यन्तीत्यर्थः। ते च तापसादयोऽपि स्युः। अत आह। मुक्ताः सबाह्याभ्यन्तरेण ग्रन्थेन अर्धतृतीयद्वीपसमुद्रमाने। आह, ये मुक्तास्ते साधव एवेत्यत इदमयुक्तम्। उच्यते। इह व्यवहारेण निह्नवा अपि मुक्ता भवन्त्येव नच ते साधव इति व्यवच्छेदार्थत्वाददोषः। अथवा शान्तिः सिद्धिरुच्यते तां साधयन्तीति शान्ति-साधवः। दानभक्तैषणासु रताः। दानग्रहणाद्दत्तं गृह्णन्ति नादत्तम्। भक्तग्रहणात्प्रासुकं न पुनराधाकर्मादि। एषणाग्रहणाद्गवेषणात्रयं साधूनां भ्रमरेभ्यो विशेष इति ॥ ३ ॥

---

अर्थ। हवे एवा उत्कृष्ट मंगलरूप धर्मने पोतें अनतिचार पणें पालन करनारा एवा साधुने आहारनी शुद्धि जोइये, माटे ते दृष्टांतपूर्वक कहे छे.( जहा के०) यथा एटले जेम (भमरो के०) भ्रमरः एटले भ्रमर (दुमस्स पुप्फेसु के०) द्रुमस्य पुष्पेषु एटले वृक्षना फूलोने विषे (रसं के०) पुष्पमांहेला मकरंदने ( आवियइ के० ) आपिबति, आ एटले मर्यादायेंकरी थोडे थोडे पिबति एटले पीये छे, आस्वादे छे. पण

ततस्तस्य पादौ नत्वा यज्ञवाटोपस्करं दत्वा तान् साधून् गवेषयन्नाचार्यान्ते गत्वा धर्ममाकर्ण्य व्रतमादाय चतुर्दशपूर्वी जातः। तद्भूत्वे तस्य जार्या तरुणीयमिति कृत्वा स्वजनैरस्ति तव जठरे किञ्चिदिति पृष्टा मणयमित्यूचे। ततः पुत्रे जाते सति तदेव नाम कृतम्। तेनाष्टवार्षिकेण मातृतः पितरं धृतव्रतं ज्ञात्वा नंष्ट्वा जनकान्ते गन्तुमिब्रता चम्पायां गतम्। आचार्यैर्बहिर्जूमिगतैर्दृष्टः सः। तेन च दीक्षितः। द्वयोः स्नेहो जातः। पृष्ठायाः स्वसुतं ज्ञात्वा चतुर्दशपूर्वी कारणे निर्यूहति। अन्तिमस्तु अवश्यं निर्यूहति। ममापीदं कारणं संजातम्। इति निश्चित्येदं निर्यूढम्॥ दशवैकालिकाद्‍र्‍थमाह॥ मणगं पडुच्च सज्जं-जवेण निज्जूहिआ दसज्झयणा॥ वेआलिआइ ठविआ तम्हा दसकालिअंनाम॥ २॥ मनकं प्रतीत्याश्रित्य निर्यूढानि पूर्वगताद्धृत्य विरचितानि दशाध्ययनानि द्रुमपुष्पिकादीनि सन्निद्वध्ययनप्रान्तानि। विगतः कालो विकालो विकलनं वा विकालः। असकलः खण्डश्चेति तस्मिन्विकाले अपराह्णेऽतिक्रान्ते तृतीयपौरुषीरूपे स्थापितानि न्यस्तानि तस्माद्दकशालिकं नाम। विकाले निर्वृत्तं वैकालिकं दशवैकालिकं वा॥ २॥ यं प्रतीत्य कृतं तद्वक्तव्यतामाह। ठहिंमासेहिं अहीअं, अज्झयणमिणं तु अज्जमणगेण॥ ठम्मासा परिआउ, अह कालगउ समाहीए॥ ३॥ षड्भिर्मासैरधीतमध्ययनमिदम्। आर्यश्चासौ मनकश्च आर्यमनकस्तेन षण्मासा एव पर्यायकालः। अथ कालगतः समाधितः शुक्ललेश्यायोगेन। अत्रायंजावः। तेनैतावता श्रुतमाराधितमेवेत्यन्येऽप्येतदनुष्ठानत आराधका जवन्ति॥ ३॥ आणंदअंसुपायं, आसी सिज्जंजवा तहिं थेरा॥ जसजद्दस्स य पुब्बा, कहणा अ विचालणा संघे॥ ४॥ आनन्दाश्रुपातमहो आराधितमनेनेति हर्षाश्रुमोचनमकार्षुः शय्यंजवास्तत्र तस्मिन् काले स्थविरः श्रुतपर्यायवृद्धो यशोजद्रस्तस्य च शय्यम्जवशिष्यस्य गुर्वश्रुपातदर्शनेन किमेतदाश्चर्यमिति विस्मितस्य पृष्ठा किमेतदकृत पूर्वमित्येवम्। शय्यंजवकथिताच्च इदक् सुतोऽयं मे इत्येवंरूपाच्छब्दादनुतापो यशोजद्रादीनां गुराविव गुरुपुत्रेऽपि वर्त्तितव्यमिति न कृतमिदमस्मन्निरेवम्भूतः। तत आचार्यः संघं प्रत्याह। एतदुपकाराय मयाल्पायुषमेनमधिकृत्येदं शास्त्रं निर्यूढं किमत्र युक्तमिति निवेदिते विचारणा संघे कालह्रासदोषादिदमेव प्रजूतसत्वानामुपकारकमतस्तिष्ठत्वेतदित्येवंजूता स्थापना चेति॥ ४॥ इति दशवैकालिकावचूरिः समाप्ता॥ शुजम्॥

---

## बाळावबोधनो उपसंहार.

हवे दशवैकालिकना कर्ता श्री शय्यंजव मुनि तथा तेमना शिष्य मनकमुनि ए-

मनो संबंध निर्युक्तिकार कहे छे. "सिज्जं भवं गणहरं, जिणपडि मादंसणेण पडि बुद्धं ॥ मणगपिअरं, दसकालिअस्स निज्जूहगं वंदे ॥ १ ॥" अर्थ–जिन प्रतिमा देखीने प्रतिबोध पामेला, मनकमुनिना पिता, श्री दशवैकालिक सूत्रनो सिद्धांतमांथी उद्धार करनार एवा गणधर श्री सज्जंभव आचार्यने हुं वांदु छुं ॥ १ ॥ मणगं पडुच्च सिज्जं–भवेण निज्जूहिआ दसज्झयणा ॥ वेआलिआइ ठविआ, तम्हा दसकालिअं नाम ॥ २ ॥ अर्थ–श्री सज्जंभव सूरिए मनकने अर्थे सिद्धांतमांथी दस अध्ययन उद्धर्यां, अने ते विकाले स्थापन कर्यां माटे दशवैकालिक नामथी कहेवाय छे. ॥२॥ हवे जेने अर्थे उद्धार कर्यो ते वात कहे छे, "छहि मासेहि अहीअं, अज्झयणमिणं तु अज्जमणगेण ॥ छम्मासा परिआओ, अह कालगओ समाहीए ॥ ३ ॥ अर्थ–आर्यमनके छ महिनामां ए अध्ययन ( सूत्र ) पठन कर्युं. ए मनकमुनिनो चारित्र पर्याय छ महिनानोज हतो. छ महिना पूरा थये ते मनकमुनि समाधिमां कालधर्म पाम्या. ॥ आणंदअंसुपायं, कासी सिज्जंभवा तहिं थेरा ॥ जसभद्दस्स य पुछा, कहणा अ विआलणा संघे ॥ ४ ॥ अर्थ–श्रीमनकमुनि काल करी गया त्यारे एणे धर्मनी आराधना सम्यक् प्रकारे करी एम जाणी श्री सज्जंभव सूरिना नेत्रमांथी आनंदनां अश्रु आव्यां. श्री यशोभद्र सूरिए अश्रुनुं कारण पूछवाथी श्रीसज्जंभव सूरिए यथार्थ वात कही. पछी संघना विचारथी श्रीदशवैकालिक सूत्रनी मंदबुद्धि शिष्यना उपर उपकारने अर्थे स्थापना थइ. ॥ ४ ॥ हवे ए चारे गाथानो भावार्थ आ रीते–ज्यारे सज्जंभव सूरिए दीक्षा लीधी, त्यारे तेमनी स्त्री गर्भिणी हती. तरुणवय होवाथी तेना स्वजनोए पूछ्युं के, तारा उदरमां कांइ छे, त्यारे ते स्त्रीए प्राकृत भाषामां कह्युं के, 'मणयं' एटले किंचित् मात्र छे, अनुक्रमे तेने पुत्र थयो. तेनुं नाम मनक राख्युं. ते आठ वरसनो थयो, एकदिवसे तेणे पोतानी माने पूछ्युं के, 'मारा पिताजी क्यां छे.' माए कह्युं के, 'तेमणे चारित्र आदर्यां छे.' एम सांभली पितानीपासे जवानुं मनकना मनमां आव्युं. 'चंपानगरीमां पिताजी छे' एवी खबर मलवाथी ते त्यां गयो. ठंडिल भूमिए जता आचार्य श्री सज्जंभवसूरिए मनकने देख्यो त्यारे पूछ्युं के, 'तुं कोण छे.' मनके आचार्यने वांद्या. दृष्टिनो मेलाप थतांज परस्पर स्नेह बंधाणो. आचार्ये पूछ्युं, तारो पिता कोण ? मनके कह्युं, 'सज्जंभव.' आचार्ये कह्युं, 'तुं अहिं कया कार्यने अर्थे आव्यो.' मनके कह्युं, 'दीक्षा लेवाने अर्थे.' वली मनके कह्युं के, 'आप जाणता होय तो कहो के, 'मारा पिताजी क्यां छे.' आचार्ये कह्युं के, ते अने हुं भिन्न नथी माटे तुं मारीपासे दीक्षा ले. मनकने ते वात कबूल थवाथी आचार्ये तेने त्यांज दीक्षा आपी.

पछी आचार्य तेनी साथे उपासरे आव्या. उपयोग दीधो के, 'एनुं आयुष्य केटलुं छे.' ज्ञानबलथी आचार्यें जाण्युं के, एनुं आयुष्य छ मास बाकी छे. पछी विचार कस्यो के, एटला थोडा समयमां ए मनक कृतार्थ शीरीते थशे चउदपूर्वी कारण पडे पूर्वमांथी सूत्रनो उद्धार कहेछे, मनेपण आ कारण प्राप्त थयुं छे, माटे उद्धार करुं. एवो विचार करी आचार्यजीए पूर्वमांथी दस अध्ययननो उद्धार कस्यो. मनकने ते दस अध्ययन जणावतां छ मास लाग्या. छ मास पूर्ण थतांज मनके समाधिमां काल कस्यो. त्यारे आचार्यना नेत्रमां आनंदाश्रु आव्यां. जसभद्रविगेरे साधुए आ श्रुनुं कारण पूछवाथी मनकनुं वृत्तांत आचार्यजीए कह्युं. ते सांभली 'गुरुपुत्र एवा मनकनी सेवा आपणाथी बनी नहि' एवो ते साधुउने पस्तावो थयो. पछी संघना आग्रहथी सज्जंभव सूरिए उद्धरेला अध्ययन प्रकट राख्या. तेज दस अध्ययन दशवैकालिकना नामथी प्रसिद्ध छे. बे चूलिक तो श्रीसंघने श्रीसीमंधर स्वामीए भेट मोकलेली ए वात प्रसिद्ध छे. माटे अहिं विस्तार करता नथी.

इति श्री दशवैकालिकनो बालावबोध संपूर्ण. ॥

---

अथ प्रशस्तिमाह ॥

हरिभद्रकृता टीका वर्त्तते विषमा परम् ॥ मया तु शीघ्रबोधाय शिष्यार्थं सुगमा कृता ॥ १ ॥ चंद्रकुले श्रीखरतर-गछे जिनचन्द्रसूरिनामानः ॥ जाता युगप्रधानास्तच्छिष्यः सकलचन्द्रगणिः ॥ २ ॥ तच्छिष्यसमयसुन्दर-गणिना च स्तम्भतीर्थपुरे चक्रे॥ दशवैकालिकटीका शशिनिधिशृङ्गार ( १६९१ ) मितवर्षे ॥ ३ ॥ अर्थस्यानवबोधेन मतिमान्द्यान्मतिभ्रमात् ॥ जिनाज्ञाविपरीतं य-त्तन्मिथ्यादुष्कृतं मम ॥ ४ ॥ ममोपरि कृपां कृत्वा शोधयन्तु बुधा इमाम् ॥ परोपकरणे यस्मात्तत्परा उत्तमा-नराः ॥ ५॥ टीका करणतः पुण्यं, यन्मयोपार्जितं भवेत् ॥ तेनाहमिदमिछामि, बोधिरत्र परत्र मे ॥ ६ ॥ शब्दार्थवृत्तिटीकायाः श्लोकमानमिदंस्मृतं ॥ सहस्त्रत्रयमग्रे च पुनः सार्धचतुःशतम् ॥ ७ ॥ इति श्रीसमयसुन्दरोपाध्यायविरचितश्रीदशवैकालिकशब्दार्थवृत्तिप्रशस्तिः संपूर्णा ।

---

अथ दीपिकोपसंहारः ।

अत्र दशवैकालिककारकशय्यं भवसूरेस्तत्पुत्रमनकमुनेश्च संबन्धसूचकं द्रुमपुष्पिकाध्ययननिर्युक्तिगाथाद्विकं यथा ॥ सेज्जंभवं गणहरं, जिणपडिमादंसणेण पडिबुद्धं ॥ मणगपिअरं दसका-लिअस्स निज्जूहगं वंदे ॥ १ ॥ मणगं पडुच्च सेज्जंभ-

वेण निज्जूहिआ दसझयणा ॥ वेआलिआइ ठविआ, तम्हा दसकालिअं नाम॥ २ ॥ तद्विषसंबन्धसूचकं चूलिकाद्वयनिर्युक्तिगाथाद्विकमिदम् ॥ ठहिं मासेहिं अहीअं, अझयणमीणं तु अज्जमणगेणं ॥ ठम्मासा परिआउ, अह कालगउ समाहीए ॥ ३ ॥ आणंदअंसुपायं, काही सिज्जंनवा तहिं थेरा ॥ जसन्नद्दस्स य पुच्छा, कहणा य विचालणा संघे ॥ ४ ॥ एतज्ञाथाचतुष्कार्थः श्रीहरिन्नद्रसूरिविरचितवृत्तेरवसेयः ॥ अथात्र किंचित्कथानकमुच्यते ॥ यदा शय्यंन्नवाचार्यः प्रव्रजितस्तदा तस्य गृहिणी गुर्विण्यासीत् । जातश्चा तस्याः पुत्रः क्रमेण । नामास्य कृतं मनक इति। यदा च सोऽष्टवार्षिको जातस्तदा मातरं पृछति । क्व मम पिता । सा नणति। तव पिता प्रव्रजितः। ततः स पितृसकाशे गन्तुमना लब्धवृत्तान्तश्चम्पायां गतः । आचार्येण संज्ञान्नूमिं गतेन स दृष्टः । तेन च वन्दित आचार्यः । उन्नयोश्च मिथः प्रेक्षमाणयोः स्नेहो जातः। आचार्यः पृछति । कस्तव पिता । स नणति शय्यंन्नव इति । ततः सूरिणा नणितम् । किमर्थमत्रागतोऽसि । तेनोक्तम् । प्रव्रजिष्यामि । यदि यूयं जानीथ तदा कथयत कास्ति मम पितेति । सूरिणोक्तम् । स मम मित्रमेकशरीरीन्नूतः । ततः प्रव्रज त्वं मत्पार्श्वे । प्रतिपन्नं च तेन। ततः स प्रव्राजितस्तत्रैव सूरिणा । आगतस्तेन सहोपाश्रये। उपयोगं दत्तवानाचार्यः । कियदायुरस्येति । ज्ञातं चातः परं षण्मासा आयुरस्येति । उत्पन्ना च बुद्धिराचार्यस्य। अस्य स्तोकायुषः किं कर्त्तव्यमिति । विममर्श च “ चउदसपुव्वी कम्हि वि कारणे समुप्पन्ने निज्जूहइ। अपछिमो पुण चउदसपुव्वी अवस्समेव निज्जूहइ । मम वि इमं कारणं समुप्पन्नं । तउ अहमवि निज्जूहामि । ताहे आढत्तो निज्जूहिउं। जाव थोवावसेसे दिअसे इमे दसझयणा निय्यूढा । उधृतानि विकालवेलायां पाश्चात्यचतुर्घटिकारूपायां स्थापितान्येकत्र कृतानीति । ततः षड्भिर्मासैरधीतमध्ययनमिदं दशवैकालिकाख्यः श्रुतस्कन्धो मनकेन । ततः समाधिना स कालं गतः । तस्मिन्स्वर्गते आराधितमनेन इति शय्यंन्नवा आनन्दाश्रुपातमकार्षुः । ततस्तत्प्रधानशिष्येण यशोन्नद्रेण कारणे पृष्टे प्रोक्तं नगवता संसारस्वरूपम् । ततो यशोन्नद्रादयो गुरुवद्गुरुपुत्रे वर्त्तितव्यमिति न्यायमार्गः सचास्मान्निर्नाचरित इति पश्चात्तापं चक्रुः । अथ शय्यंन्नवेनाल्पायुषमेनमवेत्य मयेदं शास्त्रमुद्धृतं किमत्र युक्तमिति संघाय निवेदिते विचारणा कृता । यद्गुत कालदोषात्प्रन्नूतसत्त्वानामिदमेवोपकारकमतस्तिष्ठत्वेतदिति नोपसंहृतं प्रवचनगुरुणेति ।

इति श्रीसमयसुन्दरोपाध्यायविरचिता श्रीदशवैकालिकशब्दार्थवृत्त्युपसंहारः संपूर्ण॥

---

श्री हरिभद्रसूरिविरचित टीकोपसंहारः ॥

यदुक्तं निर्युक्तिकृता प्राक्। येन वा यंवा प्रतीत्येति । तत्र येन कृतं तद्वक्तव्यतामाह ॥ सेज्जंभवं गणहरं जिणपडिमादंसणेण पडिबुद्धं ॥ मणगपिअरं दसका–लिअस्स निज्जूहगं वंदे ॥ १ ॥ ॥ अस्या व्याख्या ॥ शय्यंभवमनुत्तरज्ञानादिधर्मगणं धारयतीति गणधरस्तं प्रतिबुद्धं मिथ्यात्वाविरत्यज्ञाननिद्रापगमेन सम्यक्त्वविकाशं प्राप्तं पूर्वगतोद्धृतार्थविरचनाकर्तारं वन्दे स्तौमीति गाथाक्षरार्थः। भावार्थस्तु कथानकादवसेयः । श्रीसुधर्मशिष्यो हि जम्बूस्तस्य श्रीप्रभवस्तस्य शय्यंभवः। मनकपितरं दशवैकालिककृतं तं वन्दे चेति ॥ १ ॥ ॥ मणगं पडुच्च सिज्जंभवेण निज्जू–हिआद सप्रयणा ॥ वेआलिआइ ठविआ तम्हा दसकालिअं णाम ॥ २ ॥ म्याख्या ॥ मनकं प्रतीत्य मनकाख्यमपत्यमाश्रित्य शय्यंभवेन निर्यूढानि पूर्वगताद्धृत्य विरचितानि दश अध्ययनानि द्रुमपुष्पिकादीनि सभिक्ष्वध्ययनप्रान्तानि। विगतः कालो विकालः। विकलनं वा विकालः। सकलः खएडश्चेति तस्मिन् विकाले निर्वृत्तं दशाध्ययननिर्माणं च इदं वैकालिकम् ॥ २ ॥ ॥ यं प्रतीत्य कृतं तद्वक्तव्यतामाह ॥ छहिं मासेहिं अहीअं, अप्रयणमिणं तु अज्जमणगेण ॥ छम्मासा परिआउ, अह कालगउ समाहीए ॥ ३ ॥ ॥ अस्या व्याख्या ॥ षड्भिर्मासैरधीतं पठितमध्ययनमिदं त्वधीयत इत्यध्ययनम् । इदमेव दशवैकालिकाख्यं शास्त्रम्। केनाधीतमित्याह। आर्यमणकेन। भावाराधनयोगात् आराद्यातः सर्वहेयधर्मेभ्य इत्यार्यः। आर्यश्चासौ मणकश्चेति विग्रहस्तेन। षएमासाः पर्याय इति। तस्यार्यमणकस्य षएमासा एव प्रव्रज्याकालः अल्पजीवितत्वात्। अत एवाह। अथ कालगतः समाधिनेति। यथोक्तशास्त्राध्ययनपर्यायानन्तरं कालगत आगमोक्तेन विधिना मृतः। समाधिना शुक्लेश्याध्यानयोगेनेति गाथार्थः ॥ ३ ॥ ॥ अत्र चैवं वृद्धवादः। यथा तेनैतावता श्रुतेनाराधितमेवमन्येऽप्येतदध्ययनानुष्ठानत आराधका भवन्त्विति ॥ आणंदअंसुपायं, कासी सिज्जंभवा तहिं थेरा ॥ जसभद्दस्स य पुछा, कहणा अ विआलणा संघे ॥ ४ ॥ ॥अस्या व्याख्या। आनन्दाश्रुपातमहो आराधितमनेनेति हर्षाश्रुमोक्षणमकार्षुः कृतवन्तः शय्यंभवाः प्राग्व्याख्यातस्वरूपास्तत्र तस्मिन् कालगते स्थविराः श्रुतपर्यायवृद्धाः प्रवचनगुरवः। पूजार्थं बहुवचनमिति। यशोभद्रस्य च शय्यंभवप्रधानशिष्यस्य गुर्वश्रुपातदर्शनेन किमेतदाश्चर्यमिति विस्मितस्य सतः पृछा। भगवन् किमेतदकृतपूर्वमित्येवंभूता। कथना च भगवतः संसारस्नेह ईदृशः। सुतो ममायमित्येवंरूपा। चशब्दादनुतापश्च यशोभद्रादीनाम्। अहो गुराविव गुरुपुत्रके वर्त्तितव्यमिति।

न तत्कृतमस्माभिरित्येवंभूतप्रतिबन्धदोषपरिहारार्थं न मया कथितं नात्र भवतां दोष इति गुरुपरिसंस्थापनं च । विचारणा संघ इति । शय्यंभवेनाल्पायुष्कमेनमवेत्य मयेदं शास्त्रं निर्यूढं किमत्र युक्तमिति निवेदिते विचारणा संघे। कालन्हासदोषात् प्रभूतसत्त्वानामिदमेवोपकारकमतस्तिष्ठत्वेतदित्येवंभूता स्थापना चेति गाथार्थः ॥ ४ ॥ उक्तोऽनुगमः सांप्रतं नयास्ते च नैगमसंग्रहव्यवहारऋजुसूत्रशब्दसमभिरूढैवंभूतभेदभिन्नाः खल्वोघतः सप्त भवन्ति । स्वरूपं चैतेषामथ आवश्यके सामायिकाध्ययनेऽन्यत्रच प्रदर्शितमेवेति नेह प्रतन्यते । इह पुनः स्थानाशून्यार्थमेते ज्ञानक्रियानयान्तर्भावद्वारेण समासतः प्रोच्यन्ते । ज्ञाननयः क्रियानयश्च । तत्र ज्ञाननयदर्शनमिदम् । ज्ञानमेव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणं युक्तियुक्तत्वात्तथाचाह ॥ णायंमि गिण्हिअव्वे, अगिण्हिअव्वे अ तहय अत्थम्मि ॥ जइअव्वमेव इइ जो, उवएसो सो नउ नाम ॥ णायंमि त्ति। अस्या व्याख्या । ज्ञाते सम्यक्परिछिन्ने गिण्हिअव्वेत्ति ग्रहीतव्य उपादेये। अगिण्हिअव्वत्ति अग्रहीतव्येऽनुपादेये हेय इत्यर्थः । चशब्दः खलूभयोर्ग्रहीतव्याग्रहीतव्ययोर्ज्ञातत्वानुकर्षणार्थ उपेक्षणीयसमुच्चयार्थो वा । एवकारस्त्ववधारणार्थः । तस्य चैवं व्यवहितः प्रयोगो द्रष्टव्यः । ज्ञात एव ग्रहीतव्ये तथाग्रहीतव्ये तथोपेक्षणीये च ज्ञात एव नाज्ञाते । अत्थम्मि त्ति । अर्थे ऐहिकामुष्मिके । तत्रैहिको ग्रहीतव्यः स्रक्चन्दनाङ्गरागादिः । अग्रहीतव्यो विषशस्त्रकण्टकादिः । उपेक्षणीयस्तृणादिः । आमुष्मिको ग्रहीतव्यः सद्दर्शनादिरग्रहीतव्यो मिथ्यात्वादिरुपेक्षणीयो विवक्षया अभ्युदयादिरिति । तस्मिन्नर्थे यतितव्यमेवेति । अनुस्वारलोपाद्यतितव्यमेवमनेन प्रकारेणैहिकामुष्मिकफलप्राप्त्यर्थिना सत्त्वेन प्रवृत्त्यादिलक्षणः प्रयत्नः कार्य इत्यर्थः । इत्थं चैतदङ्गीकर्तव्यम् । सम्यग्ज्ञाते प्रवर्त्तमानस्य फलाविसंवाददर्शनात् । तथा चान्यैरप्युक्तम् ॥ विज्ञप्तिः फलदा पुंसां, न क्रिया फलदा मता ॥ मिथ्याज्ञानात्प्रवृत्तस्य फलप्राप्तेरदर्शनात् ॥ १ ॥ तथामुष्मिकफलप्राप्त्यर्थिनापि ज्ञात एवयतितव्यम् । तथा चागमोऽप्येवमेव स्थितः । यत उक्तम् ॥ पढमं नाणं तउ दया, एवं चिठ्ठइ सव्वसंजए ॥ अणाणी किं काही किंवा णाहीइ छेअपावगं ॥१॥ इतश्चैतदेवमङ्गीकर्तव्यम् । यस्मात्तीर्थकरगणधरैरगीतार्थानां केवलानां विहारक्रियापि निषिद्धा। तथा चागमः॥ गीअत्थो अ विहारो, बिइउ गीअत्थमीसिउ भणिउ॥ एत्तो तइअविहारो, णाणुण्णाउ जिणवरेहिं ॥ न यस्मादन्धेनान्धः समाकृष्यमाणः सम्यक् पन्थानं प्रतिपद्यत इत्यभिप्रायः । एवं तावत्क्षायोपशमिकं ज्ञानमधिकृत्योक्तम् । क्षायिकमप्यङ्गीकृत्य विशिष्टफलसाधकत्वं तस्यैव विज्ञेयम् । यस्मादर्हतोऽपि भवा-

महापरिग्रहा इत्यर्थः । वधन्तीति वधकाः प्राण्युपमर्दकर्तारः । जइ ते वि नाम पुद्यंतित्ति । यदीति पराज्युपगमसंसूचकः । त इति याज्ञिकाः । अपिः संनावने । नाम इति निपातो वाक्यालंकारार्थः । ये जितेन्द्रियादिदोषडुष्टा यज्ञयाजिनो वर्तन्ते । यदि ते नाम पूज्यन्ते । तर्ह्यग्निरपि नवेच्छीतः । न च कदाचिदप्यसौ शीतो नवति । तथा वियदिन्दीवरस्रजोऽपि वान्ध्येयोरस्थलशोनामादधीरन् । न चैतन्नवति । यथैवमादिरत्यन्तोऽनावस्तथेदमपीति मन्यतेऽथापि कालदौर्गुण्येन कथंचिदविवेकिना जनेन पूज्यन्ते । तथापि तेषां न मङ्गलत्वसंप्रसिद्धिरप्रेक्षावतामतद्रूपेऽपि वस्तुनि तद्रूपाध्यारोपेण प्रवृत्तेस्तथा ह्यकलङ्कधियामेव प्रवृत्तिर्वस्तुनस्तद्रूपतां गमयत्यतथाभूते वस्तुनि तद्बुद्ध्या तेषामप्रवृत्तेः । सुविशुद्धबुद्धयश्च दैत्यामरेन्द्रादयस्ते चाहिंसादिलक्षणं धर्ममेव पूजयन्ति न यज्ञयाजिनस्तस्माद्दैत्यामरेन्द्रादिपूजितत्वाद्धर्म एवोत्कृष्टं मङ्गलं न याज्ञिका इति स्थितम् । हेउविनत्तीणं ति । एष हेतुतद्विनक्त्योः । पमिसेहोत्ति । विपक्षप्रतिषेधः । विपक्षशब्द इहानुक्तोऽपि प्रकरणाज्ज्ञातव्य इति गाथार्थः । एवं हेतुतद्बुद्ध्योर्विपक्षप्रतिषेधो दर्शितः । सांप्रतं दृष्टान्तविपक्षप्रतिषेधं दर्शयन्नाह ॥ बुद्धाईउवयारे, पूयाठाणं जिणाउ सप्नावं॥ दिठ्ठंते पमिसेहो, बठो एसो अवयवो उ ॥ १५० ॥ व्याख्या ॥ बुद्धादय आदिशब्दात्कापिलादिपरिग्रहः उपचार इति । सुपां सुपो नवन्तीति न्यायाडुपचारेण । किंचिदतीन्द्रियं कथयन्तीति कृत्वा न वस्तुस्थित्या पूजायाः स्थानं पूजास्थानम् । जिनास्तु सद्भावं परमार्थमधिकृत्येति वाक्यशेषः । सर्वज्ञत्वाद्यसाधारणगुणयुक्तत्वादिति नावना । दृष्टान्तप्रतिषेध इति विपक्षशब्दलोपाद् दृष्टान्तविपक्षप्रतिषेधः । किम् । षष्ठ एषोऽवयवः। तुर्विशेषणार्थः। किं विशिनष्टि । सर्वोऽप्ययमनन्तरोदितः प्रतिज्ञादिविपक्षप्रतिषेधः पञ्चप्रकारोऽप्येक एवेति गाथार्थः । षष्ठमवयवमनिधायेदानीं सप्तमं दृष्टान्तनामानमनिधातुकाम आह ॥ अरहंतमग्गगामी, दिठ्ठंतो साहुणो वि समचित्ता ॥ पागरएसु गिहीसु, एसंते अवहमाणा उ ॥ १५१ ॥ व्याख्या ॥ पूजामर्हन्तीत्यर्हन्तः । न रुहन्तीति वा अरुहन्तः । किम् । दृष्टान्त इति संबन्धः । तथा मार्गगामिन इति । प्रक्रमात्तडुपदिष्टेन मार्गेण गन्तुं शीलं येषां त एव गृह्यन्ते । केच त इत्यत आह । साधवः । साधयन्ति सम्यग्दर्शनादियोगैरपवर्गमिति साधवः तेऽपि दृष्टान्त इति योगः । किंनूताः समचित्ता रागद्वेषरहितचित्ता इत्यर्थः । किमिति तेऽपि दृष्टान्त इति । अहिंसादिगुणयुक्तत्वात् । आह च । पाकरतेष्वात्मार्थमेव पाकसक्तेषु गृहेष्वगारेष्वेषन्ते गवेषयन्ति पिण्डपातमित्यध्याहारः । किं कुर्वाणा इत्यत आह । अवहमाणा उ । न घ्नन्तोऽघ्नन्तः । तुरवधारणार्थः । ततश्चाघ्नन्त एव आरम्नाकरणेन पीडामकुर्वाणा इत्यर्थः । एवं द्वि-

विधोपि दृष्टान्त उक्तः । दृष्टान्तवाक्यं चेदं स तु संस्कृत्य कर्तव्योऽर्हदादिवदिति गाथार्थः । उक्तः सप्तमोऽवयवः सांप्रतमष्टममभिधित्सुराह ॥ तत्र भवे आसंका, उद्दिस्स जई वि कीरए पागो ॥ तेण र विसमं नायं, वासतणा तस्स पडिसेहे ॥ १५२ ॥ ॥ व्याख्या ॥ तत्र तस्मिन् दृष्टान्ते भवेदाशङ्का भवत्याक्षेपः । यथोद्दिश्याङ्गीकृत्य यतीनपि संयतानपि । अपिशब्दादपत्यादीन्यपि । क्रियते निर्वर्त्यते पाकः। कैः। गृहिभिरिति गम्यते । ततः किमित्यत आह । तेन कारणेन । र इति निपातः किलशब्दार्थः । विषममतुल्यं ज्ञातमुदाहरणं वस्तुतः पाकोपजीवित्वेन साधूनामनवद्यवृत्त्यभावादिति भावितमेवैतत् पूर्वमित्यष्टमोऽवयवः । इदानीं नवममधिकृत्याह । वर्षातृणानि तस्य प्रतिषेध इत्येतच्च भाष्यकृता प्राक् प्रपञ्चितमेवेति न प्रतन्यत इति गाथार्थः । उक्तो नवमोऽवयवः । सांप्रतं चरममभिधित्सुराह ॥ तम्हा उ सुरनराणं, पुज्जत्ता मंगलं सया धम्मो ॥ दसमो एस अवयवो, पइन्नहेऊ पुणवयणं ॥ १५३ ॥ ॥ व्याख्या ॥ यस्मादेवं तस्मात्सुरनराणां देवमनुष्याणां पूज्यस्तद्भावस्तस्मात्पूज्यत्वान्मङ्गलं प्राग्निरूपितशब्दार्थं सदा सर्वकालं धर्मः प्रागुक्तः । दशम एषोऽवयव इति संख्याकथनम् । किं विशिष्टोऽयमित्यत आह । प्रतिज्ञाहेत्वोः पुनर्वचनं पुनर्हेतुप्रतिज्ञावचनमिति गाथार्थः । उक्तं द्वितीयं दशावयवं। साधनाङ्गता चावयवानां विनेयापेक्षया विशिष्टप्रतिपत्तिजनकत्वेन भावनीयेत्युक्तोऽनुगमः। सांप्रतं नया उच्यन्ते । ते च नैगमसंग्रहव्यवहारऋजुसूत्रशब्दसमभिरूढैवंभूतभेदभिन्नाः खल्वोघतः सप्त भवन्ति। स्वरूपं चैतेषामेवावश्यके सामायिकाध्ययनेऽन्यत्र्क्षणे प्रदर्शितमेवातो नेह प्रतन्यते । इह पुनः स्थानाशून्यार्थमेते ज्ञानक्रियानयद्वयान्तर्भावद्वारेण समासतः प्रोच्यन्ते । ज्ञाननयः क्रियानयश्च । तत्र ज्ञाननयदर्शनमिदं ज्ञानमेव प्रधानमैहिकामुष्मिकफलावाप्तिकारणं युक्तियुक्तत्वात्तथा चाह ॥ णायंमि गिण्हियव्वे, अगिण्हियव्वंमि चेव अत्थंमि ॥ जइयव्वमेव इइ जो, उवएसो सो नओ नामं ॥ १५५ ॥ व्याख्या ॥ णायमिति। ज्ञाते सम्यक्परिच्छिन्ने । गिण्हियव्वेत्ति । गृहीतव्य उपादेये । अगिण्हियव्वंमि त्ति। अगृहीतव्येऽनुपादेये हेय इत्यर्थः । चशब्दः खलूभयोर्गृहीतव्यागृहीतयोर्ज्ञातत्वानुकर्षणार्थः। उपेक्षणीयसमुच्चयार्थो वा। एवकारस्त्ववधारणार्थः। तस्य चैवं व्यवहितः प्रयोगो द्रष्टव्यः । ज्ञात एव गृहीतव्ये तथागृहीतव्ये तथोपेक्षणीये चार्थे तु ज्ञात एव नाज्ञाते । अत्थंमि त्ति । अर्थेऽप्यैहिकामुष्मिके तत्रैहिको गृहीतव्यः स्रक्चन्दनाङ्गनादिः । अगृहीतव्यो विषशस्त्रकण्टकादिः । उपेक्षणीयः तृणादिः । आमुष्मिको गृहीतव्यः सम्यग्दर्शनादिः अगृहीतव्यो मिथ्यात्वादिः । उपेक्षणीयो विवक्षयाभ्युदयादिरिति । तस्मिन्नर्थे यतितव्यमेवेति । अनुस्वारलोपाद्यतितव्यमेवमनेन क्र-

मैणैहिकामुष्मिकफलप्राप्त्यर्थिना सत्त्वेन प्रवृत्त्यादिलक्षणः प्रयत्नः कार्य इत्यर्थः । इह चैवैतदङ्गीकर्तव्यम् । सम्यग्ज्ञाते प्रवर्तमानस्य फलविसंवाददर्शनात्तथाचान्यैरप्युक्तम् "॥ विज्ञप्तिः फलदा पुंसां, न क्रिया फलदा मता ॥ मिथ्याज्ञानात्प्रवृत्तस्य, फलप्राप्तेरसंभवात् ॥" तथामुष्मिकफलप्राप्त्यर्थिनापि ज्ञात एव यतितव्यम् । तथा चागमोऽप्येवमेव व्यवस्थितः । यत उक्तम् "॥ पढमं नाणं तउ दया, एवं चिठइ सव्वसंजये ॥ अन्नाणी किं काही, किंवा णाहितिछेयपावगं ॥" इतश्च तदेवाङ्गीकर्तव्यम् । यस्मात्तीर्थकरगणधरैरगीतार्थानां केवलानां विहारक्रियापि निषिद्धा । तथा चागमः "॥ गीयत्थो य विहारो, बीउ गीयत्थमीसिउ चेव ॥ इत्तो तइयविहारो, णाणुन्नाउ जिणवरेहिं ॥" यस्मादन्धेनान्धः समाकृष्यमाणः सम्यक्पन्थानं न प्रतिपद्यत इत्यभिप्रायः । एवं तावत्क्षायोपशमिकं ज्ञानमधिकृत्योक्तं क्षायिकमङ्गीकृत्य विशिष्टफलसाधकत्वं तस्यैव विज्ञेयम् । यस्मादर्हतोऽपि भवाम्भोधितटस्थस्य दीक्षां प्रतिपन्नस्योत्कृष्टतपश्चरणवतोऽपि न तावदपवर्गप्राप्तिः संजायते यावज्जीवाजीवाद्यखिलवस्तुपरिच्छेदरूपं केवलज्ञानं नोत्पन्नमिति । तस्माज्ज्ञानमेव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणमिति स्थितम् । इति ॥ जो उवएसो सो णउ णामं ति । इत्येवमुक्तेन न्यायेन य उपदेशो ज्ञानप्राधान्यख्यापनपरः स नयो नाम ज्ञाननय इत्यर्थः । अयं च ज्ञानवचनक्रियारूपेऽस्मिन्नध्ययने ज्ञानरूपमेवेदमिछति ज्ञानात्मकत्वादस्य वचनक्रिये तु तत्कार्यत्वात्तदायत्तत्वान्नेछति । गुणभूते चेछति इति गाथार्थः । उक्तो ज्ञाननयः । अधुना क्रियानयावसरस्तद्दर्शनं चेदम् । क्रियैव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणं युक्तियुक्तत्वात्तथा चायमप्युक्तलक्षणामेव स्वपक्षसिद्ध्ये गाथामाह ॥ णायंमि गिण्हियव्वे, अगिण्हियव्वंमि चेव अत्थंमि ॥ जइयव्वमेव इइ जो, उवएसो सोनउ नामं ॥ १५५ ॥ व्याख्या ॥ अस्याः क्रियानयदर्शनानुसारेण व्याख्या । ज्ञाते गृहीतव्ये अगृहीतव्ये चैव अर्थे ऐहिकामुष्मिकफलप्राप्त्यर्थिना यतितव्यमेव । न यस्मात्प्रवृत्त्यादिलक्षण प्रयत्नव्यतिरेकेण ज्ञानवतोऽप्यभिलषितार्थावाप्तिर्दृश्यते । तथा चान्यैरप्युक्तम् ॥ क्रियैव फलदा पुंसां, न ज्ञानं फलदं मतम् ॥ यतः स्त्रीभक्ष्यभोगज्ञो तज्ज्ञानाद्दुःखितो भवेत् । तथामुष्मिकफलप्राप्त्यर्थिना क्रियैव कर्तव्या । तथा च मौनीन्द्रप्रवचनमप्येवमेव स्थितम् । यत उक्तम् " ॥ चेइयकुलगणसंघे, आयरियाणं च पवयणसुए य ॥ सव्वेसु वि तेण कयं, तवसंजममुज्जमं तेण ॥" इतश्चैतदेवमङ्गीकर्तव्यम् । यस्मात्तीर्थकरगणधरैः क्रियाविकलानां ज्ञानमपि अफलमेवोक्तम् । तथाचागमः "॥ सुबहुंपि सुयमहीयं, किं काहीइ चलणविप्पमुक्कस्स ॥ अंधस्स जह पलित्ता, दीवसय सहस्स कोडीवि ॥" इत्यक्रियाविकलत्वात्तस्येत्यभिप्रायः । एवं तावत्क्षायोपश-

मिकं चारित्रमङ्गीकृत्योक्तम्। चारित्रं क्रियेत्यनर्थान्तरम्। क्षायिकमप्यङ्गीकृत्य प्रकृष्टफलसाधकत्वं तस्यैवं विज्ञेयम्। यस्मादर्हतोऽपि भगवतः समुत्पन्नकेवलज्ञानस्यापि न तावन्मुक्त्यवाप्तिः संजायते यस्मादखिलकर्मेन्धनानलभूता ह्रस्वपञ्चाक्षरोच्चारणमात्रकालावस्थायिनी सर्वसंवररूपा चारित्रक्रिया नावाप्तेति। तस्मात् क्रियैव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणमिति स्थितम्। इति। जो उवएसो सो णउ णामं ति। इति एवमुक्तन्यायेन य उपदेशः। किम्। क्रियाप्राधान्यख्यापनपरः स नयो नाम क्रियानय इत्यर्थः। अयं च ज्ञानवचनक्रियारूपेऽस्मिन्नध्ययने क्रियारूपमेवेदमिच्छति। तदात्मकत्वादस्य ज्ञानवचने तु तदर्थमुपादीयमानत्वादप्रधानत्वान्नेच्छति। गुणभूते चेच्छतीति गाथार्थः। उक्तः क्रियानय इत्थं ज्ञाननयक्रियानयस्वरूपं श्रुत्वाविदिततदभिप्रायो विनेयः संशयापन्नः सन्नाह। किमत्र तत्त्वं पक्षद्वयेऽपि युक्तिसंभवादाचार्यः पुनराह॥ सव्वेसिं पि नयाणं, बहुविहवत्तव्वयं निसामेत्ता॥ तं सव्वनयविसुद्धं, जं चरणगुणट्ठिउ साहू॥ १५८॥ व्याख्या॥ अथवा ज्ञानक्रियानयमतं प्रत्येकमभिधायाधुना स्थितपक्षमुपदर्शयन्नाह। सव्वेसिं पि गाहा। सर्वेषामिति मूलनयानामपिशब्दात्तद्भेदानां च द्रव्यास्तिकायादीनां बहुविधवक्तव्यतां सामान्यमेव विशेषा एव उभयमेव वानपेक्षमित्यादिरूपामथवा नामादीनां नयानां कः कं साधुमिच्छतीत्यादिरूपां निशम्य श्रुत्वा तत्सर्वनयविशुद्धं सर्वनयसंमतं वचनम्। यच्चरणगुणस्थितः साधुः। यस्मात् सर्वनया एव भावविषयं निक्षेपमिच्छन्तीति गाथार्थः। दुमपुप्फियनिज्जुत्ती, समासउ वण्णिया विभासाए॥ जिण चउद्दसपुव्वी वित्थरेण कहयंति से अत्थं॥ १५९॥ दुमपुप्फियनिज्जुत्ती संमत्ता। दुमपुप्फियगाहा सुगमा॥

इत्याचार्यश्रीहरिभद्रसूरिविरचितायां दशवैकालिकटीकायां द्रुमपुष्पकाध्ययनं समाप्तम्॥ १॥

व्याख्यायाध्ययनमिदं, प्राप्तं यत्कुशलमिह मया किंचित्॥ सद्धर्मलाभमखिलं लभतां भव्यो जनस्तेन॥ १॥

---

अथ श्रामण्यपूर्वकाध्ययनम्॥ २॥

कहं नु कुज्जा सामण्णं, जो कामे न निवारए॥
पए पए विसीदंतो, संकप्पस्स वसं गउ॥ १॥

---

(अवचूरिः)॥ अथ द्वितीयाध्ययनम्। नु क्षेपे। यथा कथं नु स राजा यो न रक्षति। एवं कथं नु कुर्याच्छ्रामण्यं यः कामान्न निवारयति। किमिति न करोति। तत्र हेतुमाह। पदे पदे विषीदन् संकल्पस्य वशं गतः। कामानिवारणेनेन्द्रियाद्यपराधपदा-

पेक्षया पदे पदे विषीदनात्संकल्पस्य वशंगतत्वात्। अप्रशस्तोऽध्यवसायः संकल्पः ॥१॥

---

(अर्थ) अथ द्वितीयाध्ययन। पूर्वोक्त अध्ययनमां धर्मप्रशंसा कही, तेथी धर्म जे बे, ते जिनशासनमांज बे, एम सिद्ध थयुं. एवा धर्मउपर सद्दहणा राखीने जेमणे चारित्र लीधुं बे, एवा नवा दीक्षा लीधेला अधीरा साधुओने जिनाम्नाय विषे मोह नहीं थवो जोइये, माटें साधुयें धृति (धैर्य) राखवी एम धैर्य राखवानो उपदेश आ अध्ययनमां कस्यो बे. कह्युं बे केः–"जस्स धिई तस्स तवो, जस्स तवो तस्स सा गई सुलहा ॥ जे अधिइमंत पुरिसा, तवो वि खलु डुल्लहो तेसिं ॥ १ ॥" इति। एवा संबंधथी प्राप्त थयेला आ अध्ययननुं नाम 'श्रामण्यपूर्वक' एवुं बे, तेनो अर्थः–'श्राम्यंतीति श्रमणाः, तेषां नावः श्रामण्यं तस्य पूर्वं श्रामण्यपूर्वं तदेव श्रामण्यपूर्वकम् जे तपादि श्रम करे बे, ते श्रमण अर्थात् साधु जाणवा. तेमनो जे धर्म ते श्रामण्य जाणवुं. तेनुं जे पूर्व कारण ते धृति (धैर्य) जाणवी. तेनुं प्रतिपादन जेमां करेलुं बे, ते अध्ययनने पण श्रामण्यपूर्वक अध्ययन कहियें.

हवे अध्ययनना प्रथम सूत्रमां साधुयें वस्त्रादिक डव्यकाम तथा नोगेबारूप नावकाम अवश्य वर्जववा जोइये, ते कहे बे. (जो के०) यः एटले जे पुरुष (कामे के०) कामान् एटले डव्यनावरूप बे प्रकारना कामने (न निवारए के०) न निवारयति। एटले त्याग करतो नथी. ते पुरुष, कामत्याग न कस्याथी (पए पए के०) पदे पदे एटले पगले पेगले (विसीअंतो के०) विषीदन् एटले विषयपरिग्रहथी विखवाद पामतो थको, अने (संकप्पस्स के०) संकल्पस्य एटले अप्राप्तविषनी प्राप्तीने वास्ते अप्रशस्त अध्यवसायरूप संकल्पने (वसं गर्ज के०) वशंगतः एटले वश थयो थको (सामन्नं के०) श्रामण्यं एटले चारित्रने (कहं नु के०) कथं नु एटले कया प्रकारें (कुज्जा के०) कुर्यात्, पालयेत् एटले पालशे. इहां खातानो दृष्टांत जाणवो ॥ १ ॥

---

(दीपिका) प्रथमाध्ययने धर्मप्रशंसा उक्ता सा च इहैव जिनशासने। इह तु अध्ययने जिनशासनेऽङ्गीकृते सति मा नूत् नवदीक्षितस्य संयमेऽधृतिरतो धृतिमता नाव्यमित्येतडुच्यते इत्यनेन संबन्धेन आयातमिदमध्ययनं व्याख्यायते। कथं केन प्रकारेण। नु इति क्षेपे। यथा कथं नु स राजा यो न रक्षति प्रजाम्। कथं नु स वैयाकरणो योऽपशब्दं प्रयुङ्क्ते। कुर्यात् श्रामण्यं श्रमणनावम्। यः कामान् न निवारयति। कारणमाह। श्रामण्यस्याकरणे पदे पदे स्थाने स्थाने विषीदन् विषादं प्राप्नुवन् संकल्पस्य वशं गतः। न केवलमयमधिकृतसूत्रोक्तः यथोक्तश्रामण्यानावेन अ-

श्रमणः किंतु आजीविकादिभावेन प्रव्रजितः संक्लिष्टचित्तो द्रव्यक्रियां कुर्वन्नप्य-श्रमण एव ॥ १ ॥

---

(टीका) व्याख्यातं द्रुमपुष्पिकाध्ययनमधुना श्रामण्यपूर्वकाख्यमारभ्यते । अस्य चायमभिसंबन्धः । इहानन्तराध्ययने धर्मप्रशंसोक्ता । सा चेहैव जिनशासन इति । इह तु तदभ्युपगमे सति मा भूदभिनवप्रव्रजितस्याधृतेः संमोह इत्यतो धृतिमता भवितव्यमित्येतदुच्यते । उक्तं च "॥ जस्स धिई तस्स तवो, जस्स तवो तस्स सुग्गई सुलभा ॥ जे अधिइमंत पुरिसा, तवो वि खलु दुल्लहो तेसिं ॥" अनेनाभिसंबन्धेनायातस्यास्याध्ययनस्य चत्वार्यनुयोगद्वाराणि पूर्ववन्नवरं नामवदध्ययनविषयत्वादुपक्रमादिद्वारकलापस्य व्याप्तिप्राधान्यतो नामनिष्पन्नं निक्षेपमभिधित्सुराह निर्युक्तिकारः ॥ सामन्नपुव्वगस्स उ, निक्खेवो होइ नामनिप्फन्नो ॥ सामन्नस्स चउक्को, तेरसगो पुव्वयस्स भवे ॥ १५७ ॥ व्याख्या ॥ श्राम्यतीति श्रमणः । श्राम्यति तपस्यति । तद्भावः श्रामण्यं तस्य पूर्वं कारणं श्रामण्यपूर्वं तदेव श्रामण्यपूर्वकमिति । संज्ञायां कन् । श्रामण्यकारणं च धृतिस्तन्मूलत्वात्तस्य । तत्प्रतिपादकं चेदमध्ययनमिति भावार्थः । अतः श्रामण्यपूर्वकस्य तु निक्षेपो भवति नामनिष्पन्नः । कोऽसावन्यस्याश्रुतत्वाच्छ्रामण्यपूर्वकमित्ययमेव । तुशब्दः सामान्यविशेषवन्नामविशेषणार्थः । श्रामण्यपूर्वकमिति सामान्यम् । श्रामण्यं पूर्वं चेति विशेषः । तथा चाह । श्रामण्यस्य चतुष्ककस्त्रयोदशकः पूर्वकस्य भवेन्निक्षेप इति गाथार्थः । निक्षेपमेव विवृणोति ॥ समणस्स उ निक्खेवो, चउक्कओ होइ आणुपुव्वीए ॥ दव्वे सरीरभविओ, भावेण उ संजओ समणो ॥ १५८ ॥ व्याख्या ॥ श्रमणस्य तु । तुशब्दोऽन्येषां च मङ्गलादीनामिह तु श्रमणेनाधिकार इति विशेषणार्थः । निक्षेपश्चतुर्विधो भवत्यानुपूर्व्या नामादिक्रमेण । नामस्थापने पूर्ववत् । द्रव्यश्रमणो द्विधा । आगमतो नोआगमतश्च । आगमतो ज्ञातानुपयुक्तः । नोआगमतस्तु ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तोऽभिलापभेदेन द्रुमवदवसेयस्तं चानेनोपलक्षयति । दव्वे सरीरभविओ त्ति । भावश्रमणोऽपि द्विविध एव । आगमतो ज्ञातोपयुक्तः । नोआगमतस्तु चारित्रपरिणामवान् यतिः । तथा चाह । भावतस्तु संयतः श्रमण इति गाथार्थः । अस्यैव स्वरूपमाह ॥ जह मम न पियं दुक्खं, जाणिय एमेव सव्वजीवाणं ॥ न हणइ न हणावइ य, सममणई तेण सो समणो ॥ १५९ ॥ व्याख्या ॥ यथा मम न प्रियं दुःखं प्रतिकूलत्वाज्ज्ञात्वैवमेव सर्वजीवानां दुःखप्रतिकूलत्वम् न हन्ति स्वयं, न घातयत्यन्यैः । च शब्दाद् घ्नन्तं च नानुमन्यते अन्यम् । इत्यनेन प्रकारेण समम् अणति तुल्यं गच्छति यतस्ते-

नासौ श्रमण इति गाथार्थः ॥ नत्थि य सि कोइ वेसो, पिर्उ व सव्वेसु चेव जीवेसु ॥ एएण होइ समणो, एसो अन्नो वि पद्माउ ॥ १६० ॥ व्याख्या ॥ नास्ति च सि तस्य कश्चिद् द्वेष्यः प्रियो वा सर्वेष्वेव जीवेषु तुल्यमनस्त्वात् । एतेन नवति सममनाः । समं मनोऽस्येति सममनाः । एषोऽन्योपि पर्याय इति गाथार्थः ॥ तो समणो जइ सुमणो, नावेण य जइ न होइ पावमणो ॥ सयणे य जणे य समो, समो उ माणावमाणेसु ॥ १६१ ॥ व्याख्या ॥ ततः श्रमणो यदि सुमनाः । द्रव्यं मनः प्रतीत्य नावेन च यदि न नवति पापमनाः । एतत्फलमेव दर्शयति । स्वजने च जने च समः । समश्च मानापमानयोरिति गाथार्थः ॥ उरगगिरिजलणसागर–नहयलतरुगणसमो य जो होई ॥ नमरमिगधरणिजलरुह–रविपवणसमो य उ समणो ॥ १६२ ॥ व्याख्या ॥ उरगसमः परकृतविलनिवासित्वादाहारानास्वादनात्संयमैकदृष्टित्वाच्च । गिरिसमः परीषहपवनाकम्प्यत्वात् । ज्वलनसमस्तपस्तेजःप्रधानत्वात् । तृणादिष्विव सूत्रार्थेष्वतृप्तेः । एषणीयाशनादौ वा विशेषप्रवृत्तेरिति । सागरसमो गम्नीरत्वाज्ज्ञानादिरत्नाकरत्वात्स्वमर्यादानतिक्रमाच्च । नजस्तलसमः सर्वत्रनिरालम्बनत्वात् । तरुगणसमः अपवर्गफलार्थिसत्त्वशकुनालयत्वात् वासीचन्दनकल्पत्वाच्च । भ्रमरसमः अनियतवृत्तित्वात् । मृगसमः संसारनयोद्विग्नत्वात् । धरणिसमः सर्वखेदसहिष्णुत्वात् । जलरुहसमः कामनोगोद्भवत्वेऽपि पङ्कजलान्यामिव तदूर्ध्ववृत्तेः । रविसमः धर्मास्तिकायादिलोकमधिकृत्य विशेषेण प्रकाशकत्वात् । पवनसमः अप्रतिबद्धविहारित्वात् । इत्रमुरगादिसमश्च यतो नवति । ततः श्रमण इति गाथार्थः ॥ विसतिणिसवायवंजुल–कणियारुप्पलसमेण समणेण ॥ नमरुंडुरुनडकुक्कुड–अद्दागसमेण होयव्वं ॥ १६३ ॥ ॥ व्याख्या ॥ श्रमणेन विषसमेन नवितव्यं नावतः सर्वरसानुपातित्वमधिकृत्य । तथा तिनिशसमेन मानपरित्यागतो नम्रेण । वातसमेनेति पूर्ववत् । वञ्जुलो वेतसस्तत्समेन क्रोधादिविषान्निन्नूतजीवानां तदपनयनेन । एवं हि श्रूयते किल वेतसमवाप्य निर्विषा नवन्ति सर्पा इति । कर्णिकारसमेनेति । तत्पुष्पवत्प्रकटेन अशुचिगन्धापेक्षया च निर्गन्धेनेति । उत्पलसदृशेन प्रकृतिधवलतया सुगन्धित्वेन च । भ्रमरसमेनेति पूर्ववत् । उन्दुरुसमेन उपयुक्तदेशकालचारितया । नटसमेन तेषु तेषु प्रयोजनेषु तत्तद्वेषकरणेन । कुर्कुटसमेन संविनागशीलतया । स हि किल प्राप्तमाहारं पादेन विक्षिप्यान्यैः सह नुङ्क्ते इति । आदर्शसमेन निर्मलतया तरुणाद्यनुवृत्तिप्रतिबिम्बनावेन च ॥ उक्तं च "॥ तरुणंमि होइ तरुणो, थेरो थेरेहिं डहरए डहरो ॥ अद्दाउ विव रूवं, अणुयत्तइ जस्स जं शीलं ॥" एवंनूतेन श्रमणेन नवित-